उदारचूडाधृतसत्कलापा सर्वाङ्गरङ्गद्विलसत्कलापा ।
स्थलीनिलीना कुलदेवता मे मलीमसं मानसमापुनातु ॥ ६ ॥

कालप्रध्वंसिफालप्रविलसितदृशासम्भवे! सुम्भमाथ-
प्रोच्चण्डे! चण्डमुण्डार्दिनि! विशदतरारालदंष्ट्राकराले! ।
विश्वेशिन्यम्ब! शश्वद्वलयनिलयवासे! नवाम्भोदवर्णे!
पादाम्भोजानतं मामनुदिनमनुकम्पाकुले! पालयेथाः ॥ ७ ॥

---

उदारेत्यादि । कला आप्नोतीति कलापः चन्द्रः, बर्हं च । सर्वाङ्गं रङ्गन्तः व्याप्नुवन्तः विलसत्कलापाः सर्पसमूहाः यस्याः । रगिर्गत्यर्थः । विलसन्तः शोभमानाः कलापा भूषणानि च । 'कलापो भूषणे बर्हे तूणीरे संहतावपि' इत्यमरः । स्थलीनिलीना कुलदेवतेत्यनेन हरो हरिश्चोक्तौ । मलीमसं मलिनम् । 'ज्योत्स्ना तमिस्रा—' (पा० सू० ५-२-११४) इति निपातः । आपुनातु आसमन्तात् शोधयतु । तत्तदुचितशब्दार्थप्रतिबिम्बनक्षमं करोतु इति भावः । 'पूञ् पवने' । इह पवनं शोधना । तथाच—'पुनीत आत्मानमित्यादौ सकर्मकत्वं च दृश्यते' इति माधवः । अत्र हरिहरयोर्द्वयोरपि प्राकरणिकत्वाद् द्वयोः प्राकरणिकयोः श्लिष्टपदोपनिबन्धे श्लेषोऽलङ्कारः । 'विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः ।' 'उपेन्द्रवज्रा जतजास्ततो गौ स्यादिन्द्रवज्रा यदि तौ जगौ गः । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' ॥ ६ ॥

कालेत्यादि । दृशाया नेत्रात् सम्भवो यस्याः । 'हलन्तादपि टाब् वा' इत्युक्त्या टाप् । सुम्भमाथे सुम्भस्य मथने । 'मथे विलोडने ।' भावे घञ् । प्रोच्चण्डे! अतिक्रूरे । विशदतराभ्याम् अत्यर्थं धवलाभ्याम् अरालाभ्यां वक्राभ्यां दंष्ट्राभ्यां कराले! भीषणे । विश्वस्य ईशितुं शीलमस्याः । 'ईश ऐश्वर्ये' । 'सुप्यजातौ णिनिस्ताच्छील्ये' (पा० सू० ३-२-७८) इति णिनिः । नियन्तृत्वम् अधिपत्वं च ईशनम् । अम्ब! 'अम्बार्थनद्योर्ह्रस्वः' (पा० सू० ७-३-१०७) इति ह्रस्वः । शश्वद् नित्यम् । वलयनिलयवासे!

कोदण्डं सशरं भुजेन भुजगेन्द्राभोगभाजा वहन्
वामेन छुरिकां विपक्षदलने दक्षेण दक्षेण च ।
कान्त्या निर्जितनीरदः पुरभिदः क्रीडाकिराताकृतेः
पुत्रोऽस्माकमनल्पनिर्मलयशा निर्मातु शर्मानिशम् ॥ ८ ॥

नीलापगानिलयवर्यविराजमाने
कालोल्लसत्कुवलयावलिकेलिकारे ।
नाथे समस्तजगतां रमतां मनो मे
रामे सदैव रमणीयगुणाभिरामे ॥ ९ ॥

---

वल्यारण्यसन्निहिते! । अनुदिनं दिने दिने । वीप्सायाम् अव्ययीभावः । नवाम्भोदस्य वर्ण इव वर्णो यस्या इति 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहि-रुत्तरपदलोपश्च (वा०) ।' त्रिलोपेयम् उपमा । 'त्रिलोपे च समासगा' ॥ म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ ७ ॥

कोदण्डमित्यादि । आभोगः परिपूर्णता । 'आभोगौ यत्नपूर्णते' इति वैजयन्ती । छुरिकाम् असिधेनुकाम् । छुरति गत्वा त्वगादिकम् अग्रेण छिनत्ति इति छुरिका । 'छुर छेदने' इति धातुरिति सुबोधिन्याम् । दक्षेण दक्षिणेन । निर्जितो नीरदो येन । अत्र उपमा आक्षिप्ता । शर्म निर्मातु । 'मा माने ।' मानमिह अन्तर्भावः । तेन अकर्मकोऽपि अग्निमनुमाति, गृहं निर्माति इत्यादौ सकर्मकत्वमुपसर्गवशेन अर्थान्तरवृत्त्या इति माधवः ॥ ८ ॥

नीलापगेत्यादि । नीलापगानिलयवर्ये नीलापगाभिधाने क्षेत्रवरे विराजमान इति सान्निध्यातिशयो दर्शितः । कालोल्लसत्कुवलयावल्या सह केलिं करोतीति तथा । 'कर्मण्यण्' (पा० सू० ३-२-१) इत्यण् । सदृशगुणेनैव हि क्रीडा क्रियते । तत्सदृश इति यावत् । 'उक्तं वसन्ततिलकं तभजा जगौ गः' ॥ ९ ॥

अत्यन्तोल्लसितं विभूषणगणैरुल्लाघतोल्लासकं
दीनानां गुरुमारुतालयगतं त्रैलोक्यभाग्याङ्कुरम् ।
निन्दन्निर्मलकान्तिकन्दलभरैरिन्दिन्दिरानिन्दिरा-
लीलामन्दिरमिन्दुसुन्दरमुखं वन्दे परं दैवतम् ॥ १० ॥

राज्ञामेकावलम्बे ज्वलनकुलभुवां शारदाम्भोदवर्णे
सव्ये भागे तुषाराचलसुकृतपरीपाकदेदीप्यमाने ।
लक्ष्मीग्रामाधिवासे प्रणतिपरनृणां शश्वदक्षीणलक्ष्मी-
दानोन्निद्रे दयार्द्रे रतिरुदयतु मे कामदे वामदेवे ॥ ११ ॥

---

अत्यन्तेत्यादि । उल्लाघो नीरोगः, तस्य भावः उल्लाघता, तस्या उल्लासकः उत्पादकः। उल्लासयतीति उल्लासकः। 'राघृ लाघृ द्राघृ सामर्थ्ये' इत्यस्माद् दण्डकधातोः निष्ठायाम् 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' (पा० सू० ८-२-५५) इति निपात्यते । दीनानां व्याध्यादिभिः दुःखितानाम् । त्रैलोक्यभाग्याङ्कुरं सकलमभीप्सितमेतद्भजनेन सिद्ध्यतीति भावः। इन्दिन्दिरान् भृङ्गान् । 'भृङ्गे भ्रमरभृङ्गाणमधुलिण्मधुपालिनः । अलिर्द्विरेफो लोलम्बो भसलः पुष्पलोलुपः ॥ इन्दिन्दिरो मधुकरश्चञ्चरीको मधुव्रतः।' इति (अभिधानरत्नमाला? वैजयन्ती)। इन्दुरिव सुन्दरमिति 'उपमानानि सामान्यवचनैः' (पा० सू० २-१-५५) इति समासः। उपमाप्रतिपादकस्य लोपे लुप्तोपमा। 'वादेर्लोपे समासे सा कर्माधारक्यचि यङि । कर्मकर्त्रोर्णमुलि—' ॥ १० ॥

राज्ञामित्यादि । ज्वलनकुलम् अग्निवंशः । सव्ये वामे । तुषाराचलसुकृतपरीपाक इति श्रीपार्वती । हेतुहेतुमतोरभेदोपचारः । सर्वान् कामान् ददाति, कामं स्मरं द्यतीति च कामदः । वामदेवः शर्वः ॥ ११ ॥

एतामाशु कृतिं मम प्रथयतादद्धा सिताब्जप्रभं
गाढाश्लिष्टगलं श्रिया परिलसच्चन्द्रावतंसोज्ज्वलम् ।
नित्यं सम्भृतभूति दन्तिदमनं निश्शेषभूतानतं
शश्वत्संश्रितसर्वमङ्गलमशोकावासवासं महः ॥ १२ ॥

---

एतामित्यादि । कृतिं प्रारभ्यमाणं प्रबन्धम् । 'स्त्रियां क्तिन्' (पा० सू० ३-३-९४) इति बाहुलकात् कर्मणि क्तिन् । प्रथयतात् प्रख्यापयतात् । 'प्रथ प्रख्यापने' भ्वादिः । 'हेतुमति च' (पा० सू० ३-१-२६) इति णिच् । अद्धा अञ्जसा । सिताब्जस्य असिताब्जस्य च प्रभेव प्रभा यस्य । श्रिया नीलवर्णया कान्त्या, लक्ष्म्या च । चन्द्र एव अवतंसः शिरोलङ्कारः तेनोज्ज्वलम् । चन्द्रः स्वर्णम् । 'स्वर्णेऽपि भूरिचन्द्रौ द्वौ' इत्यमरः । तद्विकारोऽवतंसः किरीटं तेनोज्ज्वलं च । भूतिः भस्म, ऐश्वर्यं च । 'भूतिर्भसितं भस्म क्षारो रक्षा च निर्दिष्टा' इति शब्दरत्नाकरः । दन्ती गजासुरः, कुवलयापीडश्च, तं दमयतीति तथा । दमेर्णिजन्तान्नन्द्यादित्वाल्ल्युः । 'कर्मणि दम्यदिनाशिसूदिभ्यः' (स० क० १-३-१९६) इति नन्द्यादिगणे भोजश्च । भूता भृङ्गिरिटिप्रभृतयः, जनाश्च । संश्रिता सर्वमङ्गला पार्वती यत् तत् । सर्वाणि मङ्गलानि च । यद्वा संश्रितानां सर्वमङ्गलं सर्वमङ्गलहेतुभूतम् इत्यर्थः । हेतुहेतुमतोः अभेदोपचारः । अशोकावासे श्रीमदशोकपुरे वासः स्थितिः यस्य तत् । महः तेजः । अत्र गुणगुणिनोः अभेदोपचारात् तेजस्वी लक्ष्यते । तेजःप्राचुर्यं च फलम् । श्लिष्टविशेषणमाहात्म्याद् हरो हरिश्चेत्यायाति । उक्तानां सर्वासां इष्टदेवतात्वेऽपि अत्र कृतिं मम प्रथयतादिति स्वप्रबन्धस्य प्रचयगमनप्रार्थनया तद्विषयेऽस्याम् अशोकपुरवासिन्यां देवतायां कवेः सविशेषा प्रतिपत्तिः अनुक्तसिद्धा । अत्रापि द्वयोः प्राकरणिकयोरिति पूर्वोक्तः श्लेषोऽलङ्कारः ॥ १२ ॥

लक्ष्मीमक्षीणरूपामनिशमनुभवन् भूमिजां भूरिमोदं
तन्वन्नास्थां सुमन्त्रे शुचि च तिलकयन्नन्वयं चित्रभानोः ।
विश्वामित्राधिकानन्ददविपुलभुजाविक्रमो विक्रमाख्यो
राजा रामाभिरामो जगदवनकलालालसी लालसीति ॥ १३ ॥

---

अथ गुरुजनस्यापि दैवतेभ्योऽभिन्नतया इदानीं तं निजगुरुभूतं राजानं भक्त्यतिशयेन चतुर्भिः श्लोकैः वर्णयति — लक्ष्मीमित्यादि । अक्षीणम्, अत्र नञः तद्विरुद्धार्थवाचित्वात् परिपूर्णम्, रूपं सौन्दर्यं स्वरूपं च यस्याः । भूमिजां लक्ष्मीं सीताम् । अन्यत्र भूमिजामिति विशेषानुक्त्या समस्ताचलाम्भोनिधिभ्यो जाताम् आयतिरूपां लक्ष्मीं समृद्धिम् । अनिशम् अनुभवन् । अयोनिजाया वनितायाः अखण्डभूमिजायाः सम्पदश्च अनुभवाद् भूरिमोदमिति । आस्थां तात्पर्यम् । आदरमिति यावत् । 'आस्था गोष्ठ्यां प्रतिज्ञायां तात्पर्ये त्ववलम्बने' इति वैजयन्ती । आस्थाभावे दोषमाह कामन्दकः — 'अप्रयत्नं धृतो मन्त्रः प्रचलन्नग्निवद्दहेत् । आप्ताप्तसन्ततेर्मन्त्रं संरक्षेत् तत्परस्तु सन् ॥' इति । सुमन्त्रे सुमन्त्राख्ये मन्त्रिवरे । स्रावादिदोषराहित्यात् शोभने कार्यनिरूपणे च । तिलकयन् तिलकवन्तं कुर्वन् । 'तत्करोति—' (ग० सू०) इति णिचि, 'विन्मतोर्लुक्' (पा०सू० ५-३-६५) इति मतुपो लुक् । चित्रभानोः आदित्यस्य, अग्नेश्च । 'सूर्यवह्नी चित्रभानू' इत्यमरः । विश्वामित्रस्य विश्वामित्रमुनेः, विश्वेषां सर्वेषाम् अमित्राणां च अधिकम् आनन्दं ददाति द्यतीति विश्वामित्राधिकानन्ददः । राम इवाभिरामः तत्तुल्य इत्यर्थः । जगदवने या कला शिल्पम् । 'कला शिल्पे कलाभेदे' इत्यमरः । 'क्रियाभ्यासपूर्वको ज्ञानविशेष' इति हरः । 'गीतचित्रादिनैपुण्यम्' इति टीकासर्वस्वे । अत्र तु अवनविषयं नैपुण्यम् । तत्र लालसी औत्सुक्यवान् । 'तृष्णातिरेके वाञ्छायामौत्सुक्ये लालसो द्वयोः' इति रुद्रः । लालसोऽस्यास्तीति लालसी । 'लस श्लेषक्रीडनयोः' । यङ्लुगन्तादस्मात् लसति विषयेषु श्लिष्यति मनोऽनेनेति लालसः । करणे घञ् । तदन्तादिनिः । अनेन जगद्रक्षणनैपुण्यमेव सर्वदा सम्पादयतीति प्रकाशितम् । लालसीति अत्यर्थं शोभते । यङ्लुक् । अत्र प्राकरणिकाप्राकरणिकयोः श्लिष्टपदोपनिबन्धे श्लेषोऽलङ्कारः । अयं तु विशेषणसाम्य एव भवति । विशेष्यस्यापि साम्ये

तन्वानो धर्मजातस्थितिमजितसुहृत् प्रोल्लसद्भीमसेनो
बद्धासङ्गो यमादौ सरसतरगवा कर्णसम्मोददाता ।
शश्वद् भद्रैकलोलो भृशमहितवलध्वंसनोदित्वरात्मा
सोऽयं विश्वैकवीरो विजय इव विजेजीयते भूरितेजाः ॥ १४ ॥

---

त्वर्थप्रकरणादिना वाच्येऽर्थे नियन्त्रिते यद् अर्थान्तरावगमनं तत् शब्दशक्तिमूलध्वनिविषयं स्यात् । एवमुत्तरत्र तन्वान इत्यत्रापि ॥ १३ ॥

**तन्वान** इत्यादि । धर्मजातस्य धर्मसुतस्य । स्थितिं रक्षाम् । रिपुपरिभूत्यभावेन साम्राज्यपदस्थापनमिति यावत् । धर्मसञ्चयस्य प्रतिष्ठां च । अजितः श्रीकृष्णः सुहृद् यस्य । अजिताः केनाप्यपरिभूताः सुहृदो यस्य । अनेन दण्डापूपिकया सुहृदामपि अजय्यत्वे किमुतास्येत्युक्तं भवति । बलपराक्रमादिभिः प्रकर्षेणोल्लसन् भीमसेनो यस्य, प्रकर्षेणोल्लसन्ती भीमा रिपुबलभयावहा सेना यस्येति च । यमयोः यमलयोः नकुलसहदेवयोः । आदिशब्देन द्रौपदेयाभिमन्युषु च । अहिंसास्तेयापरिग्रहब्रह्मचर्यरूपे यमे, आदिशब्देन नियमादयः, तेषु च आसक्तचित्तः । सरसतरया अत्यर्थं विषदिग्धया । तद्वद् रूक्षयेति यावत् । गवा शरेण, मधुरतया गिरा च । 'रसो रागे विषे वीर्ये तिक्तादौ पारते द्रवे' इत्यमरः । 'गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि ॥ नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु ।' इति **यादवः** । समासान्तागमसंज्ञाज्ञापकगणनिर्दिष्टानि अनित्यानि । समासान्तस्यानित्यत्वं 'द्वित्रिभ्यां पद्दन्मूर्धसु बहुव्रीहौ' (पा० सू० ६-२-१९७) इति स्वरसूत्रे मूर्धञ्छब्दोक्तेः । द्विमूर्धा त्रिमूर्धेत्येवं सरसतरगवा इत्यत्रापि समासान्ताभावः । कर्णस्य राधेयस्य कर्णयोः श्रोत्रयोश्च सम्मोदं द्यति, ददाति चेति तथा । 'प्रियमेवाभिधातव्यं सत्सु नित्यं द्विषत्सु च । शिखीव केकामधुरः प्रियवाक् कस्य न प्रियः ।' इति **कामन्दकः** । एकस्मिन् लोलः एकलोलः । भद्रायां भद्रे च एकलोलः भद्रैकलोलः । शिवभागवतादिवत् समासः । लोलः सतृष्णः । भृशमहिताद् अत्यर्थपूजितात् । वलध्वंसनात् शक्रात् । उदित्वरः साधूदितः । त्रैकाल्यतुल्यत्वादत्र भूते क्वरप् । आत्मा देहो यस्य । अहितबलानां ध्वंसने उदित्वरः ताच्छील्येनोद्यन् आत्मा मनो

य: सञ्चितं गुणगणं भुवनेऽस्य सञ्चि-
ख्यासेदसावविचिकित्सितमेव मित्सेत् ॥
आधाय साधु कलधौतगिरिं तुलायां
वारांनिधावहह बाहुकतां च वाञ्छेत् ॥ १५ ॥

क्षामो धर्मः क्षमायामयमखिलनयाम्भोनिधेरस्य रक्षा-
शिक्षादाक्ष्योदयाद् यत् समगत सकलः पूर्णभावेन तूर्णम् ।
तन्मन्ये जातभीतिः क्वचन कुहनासंवृतात्मा निलिल्ये
पापोघल्लालसोऽयं कलिरिह कलिजेतारमेनं विभाव्य ॥ १६ ॥

---

यस्येति च । 'इण्नशिजिसर्तिभ्यः क्वरप्' (पा० सू० ३-२-१६३) इति क्वरप्। विजेजीयते अत्यर्थं जयति । 'जि जये' । जय उत्कर्षप्राप्तिः । भूरितेजाः अधिकतेजाः । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि' इत्यमरः । 'अधिक्षेपा-वमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत् तेजः समुदाहृतम् ।" राज्ञि तु स्वर्णवर्ण इति च । भूरिस्वर्णं च ॥ १४ ॥

यः इत्यादि । सञ्चिख्यासेत् सङ्ख्यातुम् इच्छेत् । अविचिकित्सितम् असंशयं मित्सेत् मातुमिच्छेत् । सन् । 'सनि मीमाघुरभलभशकपतपदामच इस्' (पा०सू० ७-४-५४) इति इस् । 'अत्र लोपोऽभ्यासस्य' (पा०सू० ७-४-५८)इति अभ्यास-लोपश्च । कलधौतगिरिं सुमेरुम् । 'कलधौतं रूप्यहेम्नोः' इत्यमरः । वारांनिधौ 'तत्पुरुषे कृति बहुलम्' (पा० सू० ६-३-१४) इति बहुलग्रहणाद् वारांनिध्यपांपति-वाचस्पतिदिवस्पत्यादिष्वलुक् । 'अहहेत्यद्भुते खेदे' इत्यमरः । बाहुभ्यां तरतीति बाहुकः । 'नौद्व्यचष्ठन्' (पा० सू० ४-४-७) इति ठन् । वाञ्छेद् ईहेत । 'वाछि इच्छायाम् ।' अत्र असम्भवद्वस्तुसम्बन्धा निदर्शना । सम्भवतासम्भवता वा वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना । कलधौतगिरितोलनमिव बाहुभ्यां वारांनिधितरणमिव चैतद्गुणसञ्चिख्यासेत्यर्थः सेत्स्यति ॥ १५ ॥

क्षाम इत्यादि । क्षामः क्षीणः । 'क्षायो मः' (पा० सू० ८-२-५३) इति निष्ठातकारस्य मकारः । रक्षा चोरादिभ्यः पालनम् । शिक्षा वर्णसङ्करादि-निरसनं, तयोर्दाक्ष्यं नैपुण्यं, तस्य उदयात् समगत सङ्गतवान् । 'समो

स्वस्रीयोऽस्य खलु क्षमावलरिपोः श्रीमानवेदाभिधः
सुश्राव्यं चरितं सुधाकरकुलक्षोणीभुजां पावनम् ।
विद्वत्सम्मतचम्पुभारतनिवन्धस्याद्भुतार्थावली-
सिन्धोः पूर्वतयाद्य वर्णयति तत् सन्तो लभन्तां मुदम् ॥ १७ ॥

---

गम्यृच्छिप्रच्छिस्वृश्रुवेत्त्यर्तिदृशिभ्यः' (स० क० ३-१-७१)इत्यकर्मकाद् गमेस्तङ् । 'वा गमः' (पा०सू० १-२-१३) इति कित्त्वपक्षे 'अनुदात्तोपदेशवनतितनोत्यादीना-मनुनासिकलोपो झलि क्ङिति' (पा० सू० ६-४-३७) इत्यनुनासिकलोपः । तूर्णम् अस्य लब्धप्र(शमन ? शासन)समय एव । कुहना व्याजः । निलिल्ये निलीनोऽभूत् । लीङ् श्लेषणे। पापेषु पापकर्मसु । उद्यती लालसा यस्य सः। अनेन तत्कालीनानामपि प्रायेण पापरतत्वं द्योत्यते । **पापोद्यल्लालसो**ऽयमिति अस्य प्रवन्धस्य रचनासमयकलिदिनसङ्ख्यापि विवक्षिता । कलेः आत्मनः जेतारं विभाव्य ज्ञात्वा । एतन्निलयनोत्प्रेक्षाया हेतुः । कलौ युद्धे जेता च । 'कलिर्विभीतके तस्य फलेऽनर्थे च संयुगे । युगे चतुर्थे च' इत्यादि **केशवः** । स्वरूपोत्प्रेक्षात्र अलङ्कारः । मन्ये शङ्के ध्रुवमित्यादयः उत्प्रेक्षाद्योतकाः । 'अध्य-वसाये व्यापारप्राधान्ये उत्प्रेक्षा' । विषयनिगरणेन अभेदप्रतिपत्तिर्विषयिणोऽध्य-वसायः । व्यापारप्राधान्यं नाम तस्य साध्यत्वम् । उत्प्रेक्षायां विषयस्य विषयित्वं प्रतिपाद्यमानमपि तदसत्यत्वमेव प्रतीयते इति तत्र विषयविषयिणोः पारमार्थिका-त्यन्ता(भाव ? भेदाव)भासनपर्यन्तस्य अध्यवसायस्यानिर्वृत्तेः साध्यत्वम् ॥ १६ ॥

अथ कविः स्वनामकथनपूर्वकं चिकीर्षितं प्रतिजानीते---**स्वस्रीय** इत्यादि । स्वस्रीयः स्वसुरपत्यम् । 'स्वसुश्छः' (पा० सू० ४-१-१४३) इति छः । अस्य खलु क्षमावलरिपोः महीमहेन्द्रस्य विक्रमाख्यस्य राज्ञः । सुश्राव्यम् अवश्यं श्रवणीयम् । 'श्रु श्रवणे' । 'ओरावश्यके' (पा० सू० ३-१-१२५) इति ण्यत् । सुधाकरकुलक्षोणीभुजां सोमवंश्यानां राज्ञाम् । विद्वत्सम्मतो यः चम्पुभारतनिबन्धः तस्य । विद्वत्सम्मतस्य अद्भुतार्थावली-सिन्धोः चम्पुभारतस्य पूर्वतया इत्यनेन अस्मिन्नपि तद्गुणाः सर्वे सन्तीत्यनुक्त-सिद्धम् । 'प्राणैषीत् चम्पुभारतम्' इति चम्पुभारतकृतो वचनमनुसृत्यात्र चम्पुभारत-

श्रीमान् सीमातिगामिप्रसृमरमहिमा चन्द्रमाः सान्द्रमोदं
सेन्द्रैरास्वाद्यमानः सकलसुरगणै रोहिणीप्राणनाथः ।
नेत्रादत्रेः पुराभूत् प्रभव उरुभुजाविक्रमाक्रान्तविश्व-
क्षोणीचक्रान्तराणां भरतकुलभुवां भूभुजां मानभाजाम् ॥ १८ ॥

---

निबन्धस्येत्युदन्तत्वेनोक्तिः । लभन्तां प्रार्थनायां लोट् । 'डु लभष् प्राप्तौ' । सन्तो मुदं लभन्ताम् इत्यनेन—

अस्मिन्नवद्यमपनुद्य गुणैकलोलो यद्यस्ति कश्चन रसः सुधियो धयन्तु ।
धूलीं विधूय विरसां मधुरां मधूलीं नालीकतः कवलयन्ति हि चञ्चलीकाः ॥

इति श्रीकृष्णचम्पूक्तरीत्या सन्त इदं काव्यं संशोध्य अनुभवन्त्विति भावः ॥ १७ ॥

अथ प्रबन्धमारभते—श्रीमानित्यादि । श्रीः शोभा; सास्यास्तीति श्रीमान् । 'तदस्यास्ति—' (पा० सू० ५-२-९४) इति भूमादौ मतुप् । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥' सीमामतिगन्तुं शीलम् अस्येति विगृह्य 'सुप्यजातौ—' (पा० सू० ३-२-७८) इति णिनौ प्राग् गतिसमासः, पश्चादुपपदसमासः, सीमातिगामी । तादृक् प्रसृमरः प्रसरणशीलो महिमास्येति त्रिपदो बहुव्रीहिः । 'सृघस्यदः क्मरच्' (पा० सू० ३-२-१६०) इति क्मरच् । 'अवाप्य सुमहद् राज्यं सोमः सोमवतां वरः । इयाज राजसूयं सः सहस्रशतदक्षिणम् ॥ होतास्य भगवानत्रिः अध्वर्युर्भगवान् भृगुः । हैरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान् ॥ सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः । सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ॥ दक्षिणामददात् सोमस्त्रीन् लोकानिति नः श्रुतम् ॥' इति श्रीहरिवंशेऽस्य महत्त्वातिशयप्रख्यापनात् सीमातिगामिप्रसृमरमहिमेत्युक्तम् । आह्लादकः सन् मिमीते कालम् इति चन्द्रमाः चन्द्रः । 'इन्दुश्चन्द्रः चन्द्रमा ओषधीशः सोमो राजा रोहिणीवल्लभोऽब्जः । ऋक्षेशः स्यादत्रिनेत्रप्रसूतिः प्रालेयांशुः शीतरोचिर्मृगाङ्कः ॥' इति अभिधानरत्नमाला । आस्वाद्यमानः 'स्वद आस्वादने' कर्मणि शानच् ।

गोत्रे यस्य गुणोत्तरे समुदभूद् भूभारहारोद्यतः
पूर्णानन्दमयः स्वयं त्रिजगतीनाथः स नारायणः ।
अद्धा मूर्धनि यः सदा भगवता सम्भाव्यते शम्भुना
यस्याजायत विश्वलोकजननी लक्ष्मीः स्वयं सोदरी ॥ १९ ॥

---

पुराभूत् 'पुरि लुङ्—' (पा० सू० ३-२-१२२) इति लुङ् । प्रभवत्यस्मादिति प्रभवः । 'ऋदोरप्' (पा० सू० ३-३-५७) । भरतकुलभुवां—'भर्तव्योऽयं त्वया यस्माद् अस्माकं वचनादिह । तस्मादयं भवेन्नाम्ना भरतो नाम ते सुतः ॥ भरताद् भारती कीर्तिर्येनेदं भारतं कुलम् । अपरे ये च पूर्वे च भारता इति ते स्मृताः ।' इति **श्रीमहाभारतोक्त्या** भरतात् पूर्वेषामपि तत्कुलोद्भवत्वम् ॥ १८ ॥

**गोत्र** इत्यादि । गुणैरुत्तरे श्रेष्ठे । वंशस्य गुणा वंश्यानाम् उभयकुलपरिशुद्धत्वं यथाविधिविहितचत्वारिंशत्संस्कारसंस्कृतत्वं शौर्यादयश्च । सम्यग् अनावृतत्वेन 'तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजम्' इत्याद्युक्तस्वरूपेण उदभूत् प्रादुर्बभूव । असमासेऽप्येकत्वं नियमितम् । अपिचिच्चैनैश्च किमः, आङः पञ्चम्यन्तेन, आख्यातेन उपसर्गाणाम् इत्येकत्वनियमात् समुदभूदित्येकत्वम् । 'ते प्राग्धातोः' (पा० सू० १-४-८०) इति समुदोः प्राक्प्रयोगः । भारहारशब्दौ कर्मभावघञन्तौ । भारहारे उद्यत इति सप्तमीति योगविभागात् समासः । 'इहानुक्तैः समासार्थं द्वितीयेत्यादि खण्ड्यताम् । कृता बहुलमित्येतद् बाहुल्यं वा विजृम्भताम् ॥' इति **सर्वस्वे** । आनन्दमय इत्यत्र 'तत्प्रकृतवचने मयट्' (पा० सू० ५-४-२२) इति मयट् । प्राचुर्येण प्रस्तुत आनन्द एवेत्यर्थः । पूर्णश्चासावानन्दमयश्च । यद्वा 'मयट् तद्रूप इति केचिदि'ति वचनात् पूर्णानन्दस्वरूप इत्यर्थः । तिसृणां जगतीनां लोकानां समाहारः त्रिजगती । 'तद्धितार्थ—' (पा० सू० २-१-५१) इति समासः । अद्धा समक्षम् । सम्भाव्यते सम्मान्यते । सम्पूर्वाद् भवतेः हेतुमण्णिच् । सोदरी 'नासिकोदर—' (पा० सू० ४-१-५५) इति वा ङीष् । 'समानस्य छन्दस्यमूर्ध—' (पा० सू० ६-३-८४) इत्यत्र समानस्य इति योगविभागात् सपक्षादिवत् सभावः ॥ १९ ॥

शश्वत्पादनिषेविविश्वजनतापच्छेदबद्धोद्यमः
कालोन्मीलितनीरजन्मसुषमाहारी तमस्तोमहा ।
आतन्वन्नतनुं प्रसूनविशिखं गौरीकृताशोदयः
सेव्यः सत्सदसात्रिनेत्रसमितो यो वा बहुश्रीधरः ॥ २० ॥

---

शश्वदित्यादि । अत्रिनेत्रसमितः अत्रिनेत्रात् सम्यगितः, यो वा एवंभूत इत्यर्थः । कीदृशः, शश्वत्पादनिषेविणां चन्द्रिकासेवनशीलानाम् । 'पादा रश्म्यङ्घ्रितुर्यांशा' इत्यमरः । विश्वजनानां तापच्छेदे ऊष्मापनयने बद्धोद्यमः । काले उन्मीलितानां नीरजन्मनां निमीलयितृत्वेन सुषमाहारी 'सुषमा परमा शोभा' इत्यमरः । तमस्तोमं निविडतरं तिमिरं हन्तीति तथा । अत्र चतुर्विधनियमाभावेऽपि हिमहेत्यादौ सार्वकालिकः 'क्विप् च' (पा० सू० ३-२-७६) इति क्विबिति माधवोक्त्या क्विप् । प्रसूनविशिखम् अतनुम् आतन्वन् वर्धयन्नित्यर्थः । गौरीकृताः धवलीकृताः सर्वा आशा येन सः गौरीकृताशः, तादृश उदयो यस्य सः । (सत्सदसा) सतां नक्षत्राणां सदसा । सेव्यः सेवितः । 'कृत्यल्युटो बहुलम्' (पा० सू० ३-३-११३) इति बहुलग्रहणात् कर्ममात्रे कृत्यः । 'तारा भं रात्रिजं धिष्ण्यं सन्नक्षत्रमुडुर्न ना' इति निघण्टुः । नक्षत्रमृक्षं भं ज्योतिः सन्ति ताराः सुतारकाः । तिस्रो नपुंसके च स्युः' इति शब्दरत्नाकरः । बह्वीनां विपुलानां श्रीणां शोभानां धरः बहुश्रीधरः । धरतीति धरः पचाद्यच् । अत्र चन्द्रस्य त्रिनेत्रसमित इति छेदाद् हरसाम्यं, बहुश्रीधर इत्यनेन हरिसाम्यं च प्रतीयते । त्रिनेत्रेण समितः समीकृतः सदृश इति यावत् । 'विभाषा सुपो बहुच् पुरस्तात्तु' (पा० सू० ५-३-६८) इति बहुच् । कीदृशौ तौ, शश्वत्पादनिषेविण्या विश्वजनताया आपच्छेदे बद्धोद्यमः इत्युभयत्र तुल्यम् । भृङ्गसञ्चलादिकं विना विकसनोचितसमये स्वयमेव उन्मीलितानां सिताब्जानां सुषमाहारीति हरे । लळयोरभेदात् काळं च उन्मीलितं च ।

---

१. 'क्विप् चे'ति सामान्येन क्विपि सिद्धे नियमार्थं सूत्रम् । चतुर्विधश्चात्र नियमः । धातूपपदप्रत्ययकालविषयः । तेन हिमहेत्यादौ 'क्विप् चे'ति क्विप् सार्वकालिकः । मा० धा० वृ० अदादि pp 11

अभवदथ बुधोऽस्मादब्जतस्तारमुक्ता-
मणिरिव शुभवृत्तो गुम्फितः सद्गुणेन ।
अतिललितमहेलावर्तुलोत्तुङ्गपीन-
स्तनभरपरिषङ्गश्लाघितो लब्धवर्णः ॥ २१ ॥

---

'विशेषणं विशेष्येण--' (पा० सू० २-१-५७) इत्यत्र बहुलग्रहणात् कुब्जखञ्जवत् समासः । तच्च नीरजन्म च कालोन्मीलितनीरजन्म नीलोत्पलं, तस्य सुषमाहारीति हरौ । तमस्तोमम् अनाद्यावर्जितं पापसञ्चयम्, अज्ञानपूगं च हन्तीति तथा । एतदुभयत्रापि समानम् । 'तमस्तु क्ली पापे नरकशोकयोः' इति **निघण्टुः** । प्रसूनविशिखम् अतनुम् आतन्वन् दग्धं कामं प्रद्युम्नात्मना उत्पादयन् इति हरौ । कामदहनोत्पादनयोः प्रवाहनित्यत्वाद् आतन्वन्निति वर्तमाननिर्देशः । गौर्यां पार्वत्यां कृत आशोदयो येन स इति हरे । गौर्यां सरस्वत्यां कृता आशा येन सः गौरीकृताशः ब्रह्मा । तस्योदयो यस्मादिति हरौ । 'गौरी शिवासरस्वत्योः' इति **केशवः** । सन्तः साधवः भक्ताः, तेषां सदसा सेव्यः इत्युभयत्र । अत्र विशेष्यस्य पृथगुपादाने प्राकरणिकाप्राकरणिकयोः श्लिष्टपदोपनिबन्धे **श्लेषो**ऽलङ्कारः ॥ २० ॥

**अभवदित्यादि** । अस्मात् चन्द्रात् । अब्जतः शङ्खात् । 'अब्जौ शङ्खशशाङ्कौ च' **इत्यमरः** । 'द्विपेन्द्रजीमूतशशाङ्कशङ्खमत्स्याहिशुक्त्युद्भववेणुजानि । मुक्ताफलानि प्रथितानि लोके तेषां तु शुक्त्युद्भवमेव भूरि' ॥ इत्य**गस्त्यरत्नशास्त्रे** शङ्खस्यापि मुक्तोत्पत्तिस्थानत्वम् उक्तम् । तारम् उज्ज्वलम् । वृत्तं चरितं, निस्तलत्वं च । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले' **इत्यमरः** । गुम्फितः ग्रथितः, सम्बद्धश्च । गुफ गुम्फ ग्रन्थे । गुणः सूत्रं, वंशगुणादयः षण्णवतिराजगुणाश्च । 'षण्णवति राजगुणाः' इति **रत्नकोशः** । गुणेनेति जातावेकवचनम् । गुण्यन्ते प्रार्थ्यन्ते सद्भिरिति गुणाः । महेला स्त्री, महती इला मनुसुता च । लब्धवर्णः प्राप्तकान्तिः । अनेन षाण्मासिकत्वमुक्तम् । विचक्षणश्च । अत्र श्लेषानुगृहीतो **वाक्यार्थोपमा**लङ्कारः ॥ २१ ॥

निखिलजगतीचक्रव्याप्तोरुकीर्तिरतो बुधा-
दिह शुभकृतामाद्यो नाम्ना नृपोऽथ पुरूरवाः ।
द्विजवरकुले सम्भूतानामशेषमहीभुजां
प्रथम उदभून्मन्त्रौघाणामयं प्रणवो यथा ॥ २२ ॥

योऽसाविलापतिरिलातनयो विचित्रं
स्त्रीमातृकोऽपि खलु पूरुषमातृकश्च ।
वाणीविराजिवदनाम्बुरुहोऽपि नित्यं
वाणीविदूरतर एव वरीवृतीति ॥ २३ ॥

---

**निखिलेत्यादि** । निखिलजगतीचक्रे सर्वैः क्रियमाणत्वाद् अन्यत्र प्रशस्यमानत्वाच्च, व्याप्ता उर्वी महती, पूजितेति यावत्, कीर्तिः कीर्तनं जपः यशश्च यस्य सः । कीर्तिः पुण्यकर्मप्रथा । अत्र हेतुः, शुभकृताम् आद्य इति । शुभकृतां शुभकराणां शुभकर्मकर्तॄणां च । द्विजवरकुले ब्राह्मणकुले समूहे सम्भूतानां, तैर्दृष्टानाम् इत्यर्थः । मन्त्रौघाणां प्रथमः आदिभूतः । इतरत्र सः सोमवंशोद्भूतानाम् अशेषमहीभुजां नास्ति शेषोऽन्यत्र स्थितः एषामित्यशेषाः । मन्त्रौघाणामित्यत्र 'प्रातिपदिकान्तनुम्विभक्तिषु च-' (प० सू० ८-४-११) इत्यधिकारे 'कुमति च' (पा० सू० ८-४-१३) इति णत्वम् । अत्र नुटः अविभक्तित्वात् नामित्यस्याविभक्तित्वम् । अयमित्यनेन महिम्नः प्रत्यक्षत्वं प्रदर्शितम् । प्रणवो यथा प्रणव इव स्थितः । 'समरसलगाष्षड्भिर्वेदैर्हयैर्हरिणी गुरुः' ॥ २२ ॥

**योऽसावित्यादि** । इलापतिः भूपतिः । इलातनयः इलानाम मनोः वैवस्वतस्य अपत्यार्थयज्ञानन्तरमेवोत्पन्ना तनूजा । तस्यास्तनयः । स्त्रीमातृकोऽपि अन्येषामिव अस्यापि स्त्री एव माता । तथापि पूरुषमातृकः सैव पुनरिला वसिष्ठप्रभावात् पुंस्त्वं प्राप्य सुद्युम्नसंज्ञः मृगयाप्रसङ्गेन इलावृतं स्त्रीजनैकसेव्यमुपगम्य भगवतो महेश्वरस्य शापात् स्त्री भूत्वा पुनरपि वसिष्ठप्रार्थनया परमेश्वरानुग्रहात् पर्यायेण मासं पुमान् मासं स्त्री च अभूदिति श्रीभागवते ।

अभूदभूतोपमभूरिभूति-
नृपो नृपालावलिमौलिभूतः ।
महीमहीनां कलयन् कराग्रैः
सदासदानन्दकृदायुरस्मात् ॥ २४ ॥

---

वाणीविराजिवदनाम्बुरुह इत्यनेन वदनाम्बुरुहे सरस्वत्याः नित्यसान्निध्यमुक्तम् । अनेन अस्य समस्तविद्यानिष्णातता तत्तदौचित्येन प्रसृतेषु वाग्विलासेषु दृश्यत इति द्योत्यते । वाण्या वाचः विदूरतर एव, अल्पाच्तरमितिवत् स्वार्थे तरप् । वरीवृतीति अत्यर्थं वर्तते । वृतु वर्तने यङ्लुक् । यद्वा अतिशायन एव तरप् । वरीवृतीति (इति) पौनःपुन्ये च । एवं सति वाचोऽत्यर्थं दूर एव पुनः पुनः वर्तते इत्यर्थः सम्पद्यते । अनेनास्य गुणगणानामपरिच्छेद्यतया वर्णयितुमशक्यत्वेऽपि गुणप्रशंसनलोभाज्जनानां पौनःपुन्येन वचःप्रवृत्तिर्द्योत्यते । अत्र विरोधोऽलङ्कारः । विरुद्धाभासत्वं विरोधः । अयं विरोधः समाधानं विना प्ररूढो दोषः । सति तु समाधाने प्रमुख एवावभासमानत्वाद् विरोधाभासः । अत्र अपिशब्दः प्रतिभासमानेऽर्थे विरोधार्थः विरोधाभावे चशब्दार्थः ॥ २३ ॥

अभूदित्यादि । अभूतोपमा अन्यत्राद्दृष्टपूर्वेत्यर्थः । भूरि बह्वी भूतिः सम्पद् यस्य । मौलिभूतः मौलिर्भूतः । प्रधानभूत इत्यर्थः । 'सुप्सुपा' इति समासः । अहीनाम् अखण्डां कलयन् स्वाधीनतरां कुर्वन्नित्यर्थः । सदानन्दं करोति असदानन्दं कृन्तति इति च क्विप् । डुकृञ् करणे । कृती छेदने । अत्र करोतिकृन्तत्योः प्रकृत्योः क्विपि तुल्यं रूपमिति प्रकृतश्लेषः । तदुक्तं **सरस्वतीकण्ठाभरणे**—'प्रकृतिप्रत्ययोत्थौ द्वौ विभक्तिवचनाश्रयौ । पदभाषोद्भवौ चेति शब्दश्लेषा भवन्ति षड्' इति । 'असतां प्रतिषेधश्च सतां च परिपालनम् । एष राज्ञां परो धर्मः समरे चापलायनम्' ॥ इति **श्रीमहाभारते** । अत्र छेकानुप्रासः । 'संख्यानियमे पूर्वं छेकानुप्रासः ।' (का० सू० ४) अत्र नृपो नृप इति द्वौ व्यञ्जनसमुदायौ मिथः सदृशौ । एवं महीमहीनां, सदासदेत्यनेकप्रकारत्वं, 'किन्नाम दर्दुर दुरध्यवसाय सायम्' इत्यादिवत् । शब्दपौनरुक्त्यं तु व्यञ्जनमात्रपौनरुक्त्यमित्यत्र मात्रशब्देन स्वरसाम्यनियमो व्यावर्त्यते, न तु

अजायताजातसपत्नजातः सुजातजन्मा नहुषोऽथ तस्मात् ।
नन्नम्यमानावनिपालमौलिः नेनिज्यमानामलपादपीठः ॥ २५ ॥

निघ्नन्नसतः सततं स सतः सति योजयन् पथि प्रथितः ।
भुवमभुनग् जलधिमितां भुजबलनिर्धूतदुर्मदारिततिः ॥ २६ ॥

आमोदभाजां सुमनोगणानामालम्बभूराविरभूदमुष्मात् ।
मान्यो वदान्यो नृपतिर्ययातिः पयःपयोधेरिव पारिजातः ॥ २७ ॥

---

तदभावः प्रतिपाद्यते । अतो महीमहीनामित्यत्र स्वरसाम्यं न दोषाय । प्रथमपादे तु भू भू इति केवलव्यञ्जनसादृश्यरूपो वृत्त्यनुप्रासः । तस्मादनयोः संसृष्टिः । **'उपेन्द्रवज्रा** जतजास्ततो गौ' ॥ २४ ॥

**अजायतेत्यादि** । जातः, जनी प्रादुर्भावे श्यन् । 'ज्ञाजनोर्जा' (पा० सू० ७-३-७९) इति जादेशः । अजातम् अनुद्भूतं सपत्नजातं शत्रुसमूहो यस्य । प्रतापातिशयेन न कोऽप्यमुं परिबुभूषति स्मेति भावः । सुजातं ग्रहपञ्चकोच्चस्थित्यादिभिः शोभनं जन्म यस्य सः । अनेन दिव्यानुभावत्वमुक्तम् । नन्नम्यमानाः अत्यर्थं पौनःपुन्येन नमन्तः । मौलिः किरीटम् । नेनिज्यमानः अत्यर्थं शोध्यमानः । णिजिर् शौचपोषणयोः अस्माद्यङन्ताद् यक् । 'अतो लोपः' (पा० सू० ६-४-४८) इति अकारलोपः । 'न पदान्त—' (पा० सू० १-१-५८) इति तस्य स्थानिवत्त्वनिषेधाद् 'यस्य हलः' (पा० सू० ६-४-४९) इति यलोपः ॥ २५ ॥

**निघ्नन्नित्यादि** । असतः निघ्नन् । अत्र शेषत्वेन अविवक्षितत्वात् 'जासिनिप्रहण—' (पा०सू० २-३-५६) इति षष्ठ्यभावः । अभुनक् रक्षितवान् । 'भुजोऽनवने' (पा० सू० १-३-६६) इति पालने तङो निषेधात् परस्मैपदम् । 'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां **गीतिं** गीतवान् भुजङ्गे( न्द्रः ? शः ')' ॥ २६ ॥

**आमोदेत्यादि** । आमोदः सौरभ्यं, हर्षश्च । मुद हर्षे, आङ्पूर्वः सुरभीभावे च । 'आमोदौ हर्षसौगन्ध्ये' इति वैजयन्ती । सुमनसः पुष्पाणि,

तस्मिन्नीतिविनीतिविक्रमनिधौ विन्यस्य विश्वम्भरा-
भारं भोगपरम्परामतिचिरं बोभुज्यमानोऽवसत् ।
भूयो भूरितरेण पुण्यनिकरेणासादितोऽसौ दिवं
सद्यः सम्भृतसम्मदैः सुमनसां सङ्घैश्च सम्भावितः ॥ २८ ॥

ततः सः, वृत्रासुरवधागसा वित्रासिते सुत्रामणि कुत्रापि नाकलयमपि नाकलयति तिरोहिते, रोहिताश्वमुखैरखिलैरपि बर्हिर्मुखैः अराजकतया जातशोकैः नाकलोकाधिपत्ये कृताभिषेको यथाभिलाषम् अखिलमपि भोगजातम् अनुबोभूयमानः, सपदि तदभिसरणे हयावाहकभावपात्रीकृतमैत्रावरुणिशापाद् वाहसभावं समीय भूयः क्षिप्रजाततत्प्रसादात् निजवंशजादेव भवित्रीं शापमुक्तिं प्रतिपन्नमोदं प्रतिपालयन्, यामुनाभिधानस्य गिरिवरस्य गरीयसीं दरीं कष्टतरदिष्टवलाद् अध्यशयिष्ट ।

---

सन्तश्च । वदान्यो वहुप्रदः । राजपक्षे वल्गुवागित्यपि । 'वदान्यो वल्गुवाग्दात्रोः' इति वैजयन्ती ॥ २७ ॥

तस्मिन्नित्यादि । नीतिः नयः । विनीतिः विनयः । बोभुज्यमानः पौनःपुन्येनात्यर्थमनुभवन् । आसादितः प्राप्तः । आङः षदः पद्यर्थे । पद्यर्थो गतिः । 'आधृषाद् वा' (ग० सू०) इति विकल्पितणिनिः । सम्मदो हर्षः । 'प्रमदसम्मदौ हर्षे' (पा० सू० ३-३-६८) इति निपातः । सम्भावितश्चाभूदिति शेषः । अत्र नीतिविनीतिविक्रमनिधाविति राज्यभारविन्यासस्य हेतुतयोक्तत्वात् काव्यलिङ्गमलङ्कारः । 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम्' ॥ (का० अ० सू० ५७) ॥ २८ ॥

तत इत्यादि । वृत्रासुरवधागसेति—वृत्रहत्यां मलिनतरं युवतिरूपमासाद्य अभिसरन्तीम् आलोक्य वृत्रारिः पलायमानः कुत्रापि बिसविसरे वहुकालं गूढमवात्सीदिति श्रीभागवतोक्तेः । कर्तरि तृतीया । अत एव त्रासित इति णिच् । नाकस्य लयो नाकलयः, तम् । नाकलयति अगणयति । अनेन भीत्यतिशयः प्रकाश्यते । 'सुप्सुपा' इति नशब्दस्य समासः । रोहितांश्वः

ततो ययातिस्तु पुरुहूतेन पुरा पुरूरवसे प्रतिपादितं प्रतिष्ठानाभिधानम् अखिलविभवाधिष्ठानभूतम् अधिष्ठानवरम् अधिष्ठाय अभीष्टदानैः प्रतीष्टमोदाः क्षरदमृताक्षरैः उदितैरञ्जसा रञ्जिताः प्रजाः प्रजा इव निजाः परिपालयन्, प्रत्यर्थितल्लजान् अत्यर्थमुल्लापयमानः, विश्वम्भरालयवर्तिना निश्शेषराजकेन करं हारयन्, आशावशाद् आशावलयाद्

---

अग्निः । भुज्यते इति भोगः भोग्यवस्तु । अनुबोभूयमानः अत्यर्थमनुभवन् । वल्जां वल्गुदर्शनाम् । 'वलजा वल्गुदर्शना' इत्यमरः । पुलोमजां शचीम् । वाहकभावः वाहकत्वम् । अपात्रं पात्रं कृतः पात्रीकृतः । 'अभूततद्भावे—' (वा०) इति च्विः । मैत्रावरुणिः अगस्त्यः । वाहसभावम् अजगरत्वम् । 'अजगरे शयुर्वाहस इत्युभौ' इत्यमरः । समीय सम्प्राप्य, ईङ् गतौ ल्यप् । क्षिप्रजातेत्यनेन तत्क्षणमेव प्रणिपातादिभिः प्रसादितवानिति दर्शितम् । निजवंशजाद् धर्मसूनोः । भवित्रीं भाविनीम् । सार्वकालिकस्तृच् । गरीयसीं गुरुतराम् । 'द्विवचनविभज्य—' (पा० सू० ५-३-५७) इतीयसुनि, 'प्रियस्थिर—' (पा० सू० ६-४-१५७) इति गुरुशब्दस्य गरादेशः । 'उगितश्च' (पा० सू० ४-१-६) इति ङीप् । दिष्टं दैवम् । दरीमिति 'अधिशीङ्—' (पा० सू० १-४-४६) इत्याधारस्य कर्मसंज्ञा । अध्यशयिष्टशयितवान् । 'अपादः पदसन्तानो गद्यमाख्यायिका कथा । इति तस्य प्रभेदौ द्वौ तयोराख्यायिका किल ॥ नायकेनैव वाच्यान्या नायकेनेतरेणवा ॥' इति दण्डी (काव्यादर्शे) । 'पदानां नियमो नास्ति छन्दो यत्र न विद्यते । समासपदभूयिष्ठं तत्तु गद्यं निगद्यते' इति मानसोल्लासे ॥

तत इत्यादि । प्रतिपादितं दत्तम् । प्रतिष्ठानाभिधानं प्रतिष्ठानसंज्ञम् । अधिष्ठानवरं पुरश्रेष्ठम् । 'अधिष्ठानं तु नगरे रथचक्रप्रभावयोः' इति केशवः । प्रतीष्टः परिगृहीतः । इष इच्छायाम् । क्षरदमृताक्षरैः अक्षरशब्देन प्रमुखत एव माधुर्यं ध्वन्यते । उदितैः वचनैः । 'नपुंसके भावे क्तः' (पा० सू० ३-३-११४) इति क्तः । अञ्जसा यथावत् । रञ्जिताः 'रञ्ज रागे' इत्यस्माद् हेतुमण्णिचि कः । 'प्रजा स्यात् सन्ततौ जने' इत्यमरः । प्रत्यर्थि-

आगत्य भूतेषु सकलभूतेषु गव्यतो जनान् गव्यया, ग्रामीयतो ग्रामतया, केदारीयतः कैदारिकेण, भिक्षीयतो भैक्षेयेण च यथामनोरथं सर्वदा सम्प्रदानीकुर्वन् पुरुहूत इव भूभृत्कुलाधिनेता, वैश्वानर इव आश्रिताशापूरणमनाः, कृतान्त इव क्रूरदण्डधारणदत्तचित्तः, निर्ऋतिरिव पुण्यजनपरिशोभितपार्श्वभागः, वरुण इव भृशमहितपाशोद्धर्ता, समीरण इव सदागमलोलः, कुबेर इव गुह्यकार्यः, वृषाकपिरिव वृषाभिरक्षी, वृषाकपायीव हारोज्ज्वलाङ्गकान्तिः, मूर्तित्रयीव सत्यालीनमनाः, इन्द्रावरुणाविव विततगोराजीविनतविमतनृपतिविततिविकटतटघटितमणिघटामरीचिवीचीविराजितपदपल्लवः, सततसन्तन्यमानदानबम्भज्यमानदिव्यपादपोऽयम् अदेदीव्यत ।

---

तल्लजान् रिपुश्रेष्ठान्, दुर्जयानित्यर्थः । 'प्रशंसावचनैश्च' (पा० सू० २-१-६६) इति समासः । उल्लापयमानः न्यग्भावयन् । निजनिदेशैकायत्तनिखिलवृत्तीन् कुर्वन्नित्यर्थः । लीङ् श्लेषणे । 'लियः सम्मानन—' (पा० सू० १-३-७०) इति शालीनीकरणे आत्मनेपदम् । न्यग्भावनं तत् । 'विभाषा लीयतेः' (पा० सू० ६-१-५१) इत्यात्वे पुक् । राजकेन राजसमूहेन । 'गोत्रोक्ष—' (पा०सू० ४-२-३९) इति वुञ् । अत्र 'हृक्रोरन्यतरस्याम्' (पा०सू० १-४-५३) इति कर्मसंज्ञाया विकल्पितत्वात् कर्तरि तृतीया । आगत्य भूतेषु आगतेष्वित्येवार्थः । 'मयूरव्यंसकादयश्च' (पा० सू० २-१-७२) इति समासः । गव्यतः आत्मनो गामिच्छतः । ग्रामीयत इत्यादिषु त्रिष्वप्येवम् । 'सुप आत्मनः क्यच्' (पा० सू० ३-१-८) इति क्यच् । गव्यया गोसमूहेन । 'खलगोरथात्' (पा० सू० ४-२-५०) इति यः । ग्रामतया ग्रामसमूहेन । 'ग्रामजन—' (पा० सू० ४-३-७) इति तल् । कैदारिकेण केदारसमूहेन । केदारं क्षेत्रम् । 'केदाराद्यञ्च' (पा० सू० ४-२-४०) इति ठञ् । भैक्षेण भिक्षासमूहेन । 'भिक्षादिभ्योऽण्' (पा० सू० ४-२-३८) इति अण् । सम्प्रदानीकुर्वन् सम्प्रदीयते अस्मादिति सम्प्रदानं ग्रहीता । 'ग्रहीता सम्प्रदानं स्याद्' इति कारकसंग्रहे । गव्यदादिभ्यो यथाकामं तत्तत् प्रयच्छन्नित्यर्थः । भूभृत्कुलानां गिरिसमूहानां, राजसमूहानां च । अधिनेता नायकश्च आश्रितस्य

स्वाधिष्ठितस्य काष्ठादेः, आशेन अदनेन यदापूरणं तत्र मनो यस्येति वैश्वानरे । आश्रितानाम् आशायाः पूरण इत्यन्यत्र । क्रूरस्य दण्डस्य धारणे क्रूरेषु पापकृत्सु दण्डधारणे, चतुर्थोपायप्रयोगे च । पुण्यजना राक्षसाः, सन्तश्च । 'यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी' इत्यमरः । 'यक्षःसन्तौ पुण्यजनौ' इति वैजयन्ती । भृशमहितस्य पाशस्य उद्धर्ता धारकः । अहितपाशानां कुत्सितानाम् अहितानां च । 'याप्ये पाशप्' (पा० सू० ५-३-४७) इति पाशप् । याप्यः कुत्सितः । उद्धर्ता उन्मूलयिता । 'हृञ् हरणे' । सदा सर्वदा । गमे आगमने 'ग्रहवृदृनिश्चिगमश्च' (पा० सू० ३-३-५८) इत्यप् । सदागमेषु सच्छास्त्रेषु । 'आगमस्तूपदेशेऽपि शास्त्रेऽप्यागमनेऽपि च' इति केशवः । गुह्यकानाम् अर्यः स्वामी । 'अर्यः स्वामिवैश्ययोः' (पा० सू० ३-१-१०३) इति निपातः । गुह्यं कार्यं यस्य । 'शंसिदुहिगुहिभ्यो वेति वक्तव्यम्' इति क्यप् । स्ववाक्चापलदासपरम्परया मुखरागादिचिह्नाद्वा अतृतीयगामी मन्त्रः इत्यर्थः । वृषाकपिरिव 'हरविष्णू वृषाकपी' इत्यमरः । वृषो वृषभः, वृषा इन्द्रः, वृषो धर्मश्च । 'वृषाकपायी श्रीगौर्योः' इत्यमरः । हारं हरसम्बन्धि हरिसम्बन्धि च । 'तस्येदम्' (पा० सू० ४-३-१२०) इत्यणि 'यस्येति च' (पा० सू० ६-४-१४८) इत्यकारेकारयोर्लोपः । तच्च उज्ज्वलं च अङ्गं च हारोज्ज्वलाङ्गम् । तत्र कान्तिः इच्छा यस्याः सा । 'कमु कान्तौ' कान्तिरिच्छा । हारो मुक्तावली तेनोज्ज्वला अङ्गकान्तिः शरीरशोभा यस्येति च । 'कन दीप्तौ' । सत्ये सत्यलोके । सत्यायां सत्यभामायां, सत्यां सतीदेव्यां, सत्ये तथ्ये च, आलीनं मनो यस्य । इन्द्रावरुणौ 'देवताद्वन्द्वे च' (पा० सू० ७-३-२१) इत्यानङ् । वितता गोराजिः नेत्रसमूहः, जलसमूहश्च ययोः । विततायां विस्तृतायां गवि भूमौ, विततामिः गोभिः वाग्भिर्वा राजितुं शीलमस्येति । 'सुप्यजातौ—' (पा० सू० ३-२-७८) इति णिनिः । विमतनृपतयः शत्रुभूपाः । सन्तन्यमानेन यथावत्क्रियमाणेन दानेन हेतुना । बम्भज्यमानः अत्यर्थं भज्यमानः । यङन्तात् कर्मणि यक् । 'भञ्जो आमर्दने' । तादृशो मानो यस्य दिव्यपादपस्य । अदेदीव्यत अत्यर्थं शशुभे । पुरुहूत इत्यादिरुपमा । अत्र भूभृदित्यादीनां श्लिष्टतया साधर्म्यम् । तदुक्तम्—'स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ किन्तु । आश्रित्य शब्दमात्रं

क्षत्राधिनाथान्वयसम्भवोऽपि नक्षत्रनाथान्वयसम्भवोऽसौ ।
हितप्रदाताप्यहितप्रदाता कथं चरित्रं कथयेऽस्य चित्रम् ॥ २८ ॥

येन स्वसमतां नीताः शश्वद् विश्वेऽपि बान्धवाः ।
अभूवन् मेदुरामोदाः सोदरा इव सादरम् ॥ २९ ॥

किं ब्रूमः सपदि महापदं प्रपन्नो
यः कान्तारमित उदञ्चितप्रतापः ।
उद्धर्ता स्वजनपदस्थकण्टकानां
व्यातेने रिपुमपि चात्मना समानम् ॥ ३० ॥

---

सामान्यमिहापि सम्भवतः ॥' इति । हारोज्ज्वलेत्यत्र लिङ्गश्लेषः । गोराजी इत्यत्र वचनश्लेषः ॥

क्षत्रेत्यादि । क्षत्राधिनाथान्वयसम्भवः क्षत्रवंशजातः । अहितप्रदाता शत्रुखण्डयिता । 'दो अवखण्डने' तृच् । अत्र विरोधोऽलङ्कारः ॥ २८ ॥

येनेत्यादि । स्वसमतां शयनवसनभोजनादिषु सार्वभौमेन आत्मना तुल्यतां प्रापिताः । एतदामोदमेदुरत्वे हेतुः । विश्वे सर्वे । मेदुरः वर्धनशीलः । 'भञ्जभास—' (पा० सू० ३-२-६१) इति घुरच् । 'नीतो बन्धुजनस्तथात्मसमतां' इति हर्षः । 'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्' ॥ २९ ॥

किमित्यादि । रिपुमपि च आत्मना समानं व्यातेने, किं ब्रूमः । अत्यद्भुतमेतदित्यर्थः । कथमेतदित्याह—महापदं महच्च तत् पदं स्थानं च । महती च सा आपत् च । कान्तारमितः कान्तया रमितः । कान्तायाः कर्तृत्वोक्त्या रागातिशयो व्यज्यते । तेन रागनिमित्तानां सौभाग्यादिगुणानाम् उत्कर्षः । कान्तारं महारण्यम् इतश्च । 'महारण्ये दुर्गपथे कान्तारम्' इत्यमरः । प्रतापः दूरादेव अरीणां भयजनकत्वं, प्रकृष्टः तापश्च । स्वस्मिन् जनपदे तिष्ठन्तीति स्वजनपदस्थाः, ते च कण्टकाश्च । कण्टका दुष्टाः, सूच्यग्राणि च । अत्र तृतीयप्रकारः श्लेषोऽलङ्कारः । अयं तु प्रकारः

उद्धारं परभूभृतां विरचयन्नद्धायमिद्धादरं
श्रद्धालुः कलधौतराशिमनिशं पृथ्वीसुरेभ्यो दिशन् ।
उद्धृत्यार्पयितैव मामपि वतेत्यार्तः स कार्तस्वर-
क्ष्माभृद्रूप्यधरोऽप्युदित्वरझरीनादादरोदीदरम् ॥ ३१ ॥

गोपायामास धात्रीं चतुरुदधिमितां सोऽयमुर्वीमहेन्द्रो
मर्त्याधीशः सुधर्मास्थितिमहितमतिर्भूतिमातङ्गयानः ।
अश्रान्तं दानवारिप्रकरपरिलसत्पादपीठोपकण्ठो
यद्वत् प्रोद्दामधामा निखिलदिविषदां नायको नाकलोकम् ॥३२॥

---

विशेषणसाम्य एव भवति । अन्यथा ध्वनित्वापत्तेः । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' ॥ ३० ॥

**उद्धारमित्यादि** । भूभृतो महीधराः, राजानश्च । अद्धा अञ्जसा । श्रद्धालुः आस्तिक्यवान् । 'श्रद्धास्तिक्याभिलाषयोः' इति वैजयन्ती । कलधौतराशिं 'कलधौतं रूप्यहेम्नोः' इत्यमरः । अर्पयितैव अचिरेण कालेन दास्यत्येव । कार्तस्वरक्ष्माभृत् स्वर्णशैलः । रूप्यधरः रजतशैलश्च । उदित्वरी उद्गमनशीला 'इण्नशजि–' (पा०सू० ३-२-१६३) इति क्वरप् । झरी निर्झरः, तस्य नादाद् नादमपदिश्य झरीनादव्याजादित्यर्थः । ल्यब्लोपे कर्मणि पञ्चमी वक्तव्येति पञ्चमी । अत्र प्रकृतझरीनादमपह्नुत्य रोदनत्वेन संभावितत्वात् सापह्नवोत्प्रेक्षा । सा च इवादिविरहात् प्रतीयमाना । अस्याश्च परभूभृतामित्यादिश्लेषोऽनुग्राहकः । तद्बलेन तस्याः समुत्थानात् सा च समुत्थिता । समुत्थापकस्य चमत्कारनिबन्धनमित्यनयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३१ ॥

एवं तयोरित्यारभ्य अरोदीदित्यन्तैर्ग्रन्थैः अस्य गुणगणान् अनुवर्ण्य तादृग्गुणवत्त्वे सम्भाव्यमानं फलमप्यस्मिन् जातमिति दर्शयन् वर्णनमुपसंहरति— **गोपायामासेत्यादि** । गोपायामास रक्षितवान् । 'गुपू रक्षणे' । 'गुपूधूप–' (पा०सू०३-१-१२८) इत्यायः । लिटि 'कास्प्रत्ययादाम्–' (पा०सू०३-१-३५) इत्याम्प्रत्ययः । 'कृञ्च–' (पा० सू० ३-१-४०) इत्यस्तेरनुप्रयोगः । अमर्त्याधीशः मर्त्याधीशश्च । सुधर्मायां स्थितौ महिता प्रवृद्धा मतिरिच्छा यस्य । शोभने धर्मे

कालेऽस्मिन् जन्यमासीद् गतमलवलभित्पालिते नाकलोके
त्रैलोक्यैश्वर्यलिप्सातरलितमनसां देवदैत्येश्वराणाम् ।
नीत्या मुक्तः परं विक्रम इह विजये न क्रमेतेति मत्वा
देवा वेगात् प्रपन्ना धिषणमुरुनयं भार्गवं पूर्वदेवाः ॥ ३३ ॥

जन्ये जञ्जन्यमाने पुनरसुरजना जीवनीविद्यया ते
काव्येनाव्याकुलेन त्रिदशविशसिताः प्राणिताः प्रीणिताश्च ।
भूयस्तैरस्तशङ्कैर्निजबलविलयान्निर्जितो निर्जरेन्द्रो
निन्ये दुःस्थामवस्थामसुरपरिषदा साकमाकम्पभाजा ॥ ३४ ॥

---

आस्थितिः आस्था तया महिता पूज्यमाना मतिः बुद्धिः यस्य सः । मत्तमातङ्गः यानं वाहनं यस्य सः । मत्तमातङ्गस्य यानमिव यानं गतिः यस्य सः । दानवारयः सुराः, दानवारि दानजलं च । यद्वद् यथा । अत्र श्लेषानुगृहीता वाक्यार्थोपमा ॥ ३२ ॥

अथ ययातेः देवयानीशर्मिष्ठयोः यादृच्छिकीं विवाहघटनां वक्तुं कथान्तरमारभते—काल इत्यादि । गतमलेन वृत्रहत्यापापविमुक्तेन वलभिदा । त्रयो लोका एव त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । लिप्सा लब्धुमिच्छा । 'धातोः कर्मणः–' (पा० सू० ३-१-७) इति सन् । 'सनि मीमा–' (पा० सू० ७-४-५४) इति इस् । 'अत्र लोपोऽभ्यासस्य' (पा० सू० ७-४-५८) इति अभ्यासलोपः । 'स्कोः संयोगाद्योः–' (पा० सू० ८-२-२९) इति सलोपः । 'हलन्ताच्च' (पा० सू० १-२-१०) इति कित्त्वाद् गुणाभावः । देवदैत्येश्वराणां देवेश्वरा दैत्येश्वराश्च तेषाम् । द्वन्द्वात् परं श्रूयमाणं सर्वत्राव्यभिचारि । नीत्या मुक्तः परं विक्रम इति केवलं पराक्रम एवेत्यर्थः । न क्रमेत अप्रतिबन्धेन न क्राम्येत् । 'वृत्तिसर्ग––' (पा० सू० १-३-३८) इति तङ् । वृत्तिः अप्रतिबन्धः । धिषणं बृहस्पतिम् । उरुनयमिति उभयोर्विशेषणम् । भार्गवं शुक्रम् । देवत्वाद् भ्रष्टा इति पूर्वदेवाः असुराः ॥ ३३ ॥

जन्य इत्यादि । जञ्जन्यमाने उभयेषामपि नयविक्रमसम्पत्त्या दृप्तत्वादत्यर्थं जायमाने । जीवनीविद्यया मृतसञ्जीवनीसंज्ञया विद्यया । अव्याकुलेन

उचितमिदं खलु मन्ये जन्ये विजितो यदेष शतमन्युः ।
कस्य नु गुरुविद्वेषिण इह खलु न स्यात् पराजयो भूयान् ॥ ३५ ॥

तदनु तेन मन्युशतेन वशीकृते नाकलोके दनुजचक्रेणाक्रान्ते पुनरपि निजवशापादनाशयेन विधिविहितबहुमन्युना शतमन्युना विबुधनिवहेन सह विचार्य आचार्यतनयः कचो निभृतमेव मृतसञ्जीवनी-विद्याम् अध्येतुम् अहितमध्यवसतेः ऊर्जस्वतीदयितस्य भार्गवस्य वसतिं प्रति प्रस्थापयामासे ।

---

एकाग्रचित्तेन । विशसिता हिंसिताः । शसु हिंसायाम् । अस्य 'धृषिशसी वैयात्ये' (पा० सू० ७-२-१९) इति वैयात्य एव अनिदित्त्वनियमाद् अन्यत्र सेट्त्वम् । प्राणिता जीविताः अत एव प्रीणिताः, प्रीतिं प्रापिताः । 'धूञ्-प्रीञोर्नुग् वक्तव्यः' (वा०) इति नुक् । निजबलविलयान्निर्जितो निर्जरेन्द्रः भूयः अस्तशङ्कैः तैः दुःस्थाम् अवस्थां निन्ये इत्यन्वयः । अस्तेति उदित्त्वेन विभाषितेट्कत्वाद् 'यस्य विभाषा' (पा० सू० ७-२-१५) इति निष्ठायाम् इड-भावः । स्वसैन्यनाशाद्धेतोः पराजितो देवराजः पुनरस्तमरणभयैः असुरैः, दुःस्थां दुःखात्मना तिष्ठतीति दुःस्था, ताम् । दुःखरूपामिति यावत् । 'सुपि स्थः' (पा० सू० ३-२-४) इति कः । अवस्थां कालकृता अवस्थितिः अवस्थेति **सुबोधिन्याम्** । निन्ये प्रापितः । कर्मणि लिट् । स्वनगरात् च्यावनमिह दुरवस्थाप्रापणम् ॥ ३४ ॥

**उचितमित्यादि** । उचितं योग्यम् । 'उचितं तु स्वभावे क्ली निश्चिताभ्यस्तयोः पुनः । योग्ये चिरानुयाते च' इति **केशवः** । शतमन्युः इन्द्रः । गुरवो बहवो विद्वेषिणो यस्य । मृतानां पुनः शुक्रेण जीवितत्वात् । इह लोके । भूयान् अतिशयेन बहुः । 'बहोर्लोपो–' (पा० सू० ६-४-१५८) इतीयसुनः ईकारस्य लोपः, बहोर्भूभावश्च । अत्र गुरुषु निजाचार्येषु विद्वेषः गुरुविद्वेषः, सोऽस्यास्तीति गुरुविद्वेषीति व्यज्यमानोऽर्थो वाक्यार्थम् उपस्करोति ॥ ३५ ॥

**तदन्वित्यादि** । मन्यूनां क्रतूनाम् । दनुजचक्रेण असुरसैन्येन । 'वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्' **इत्यमरः** । विधिना विहिता बहवो

अनन्तरम् अन्तरङ्गसंगृहीतबलशासिशासनः कलितकमनीय-यौवनः कचोऽयमयत्नेन सपत्नसंहतिम् अभिबुभूषन् अरातेः आरातीय-मपि दितीसुताचार्यं क्षणादभिबुभूषमाणो महत्तरगुणोत्तरे मूहूर्ते स्वर्गतो निर्गत्य, सर्वगीर्वाणदुर्वारगर्वनिर्वाणं कुर्वाणं विकुर्वाणं वृषपर्वाणं प्रकुर्वाणं, कार्तिकेयमिव चित्रशिखण्डिजाताधिरोहणं, वाल्मीकिमिव सिताच्छ-काव्याभिख्यातं, सकलतापरहितमपि सकलतापससहितं, खट्वासारूढमपि

---

मन्यवः ऋतवः येनेति। प्रमुखतः प्रतीयमानमर्थमवेक्ष्य पुनरपीत्याद्युत्प्रेक्षा। विधिना दैवशवत्या विहितो बहुर्विपुलो मन्युः शोकः यस्य तेन । आचार्यतनयः बृह-स्पतिपुत्रः । अहितमध्ये वसतिः वासः यस्य तस्य। अनेन तस्य दुष्प्रापत्वं विचार्य कचः प्रस्थापयामासे इत्यनेन तस्यैव तत्सामर्थ्यम् इति प्रकाश्यते। ऊर्जस्वतीदयितस्य शुक्रस्य । अत्र बहुव्रीह्याश्रयणेन तस्यां तत्सम्बन्धिषु चास्य प्रेमाविष्टता व्यज्यते । तेन च तदनुसरणद्वारा कार्यसिद्धिरिति । भार्गवस्य शुक्रस्य वसतिं निलयम् । प्रस्थापयामासे प्रस्थानं कारितः । कर्मणि लिट् ॥

अनन्तरमित्यादि। अनन्तरम्, अन्तरङ्गं मनः। संगृहीतेत्यनेन स्वसाध्यस्य परैरलक्ष्यत्वम् उक्तम् । कमनीयेत्यनेन यौवनस्य प्रारम्भावस्था प्रकाश्यते । तेन वक्ष्यमाणदेवयान्यभिलाषस्य युक्तता । अभिबुभूषन् अभिभवितुम् इच्छन्। सन्नन्तात् 'लक्षणहेत्वोः–' (पा० सू० ३-२-१२६) इति हेतौ शता । हेतुः प्रयोजनं च कारणं च । अत्र कारणम् । स च प्राप्तीच्छया । आरातीयं आरात् समीपे भवम् । 'वृद्धाच्छः' (पा० सू० ४-२-१४४) । 'अव्ययानां भमात्रे टिलोपो वक्तव्यः' (वा०) इत्यस्यानित्यत्वात् टिलोपाभावः । 'बहिषष्टि-लोपो यञ्च' (वा०) इत्यत्र टिलोपवचनम् अस्यानित्यत्वज्ञापकम् । दितीसुत इति 'कृदिकारादक्तिनः' (ग० सू०) इति वा ङीष् । अभिबुभूषमाणः प्राप्तु-मिच्छन । 'भू प्राप्तौ' सन्नन्ताच्छानच् । गुणोत्तर इत्यनेन ईप्सितकार्यसिद्धिः अवश्यं भविष्यतीति द्योत्यते । निर्वाणं विनाशम् । विकुर्वाणं हृष्टम् । 'हर्षमाणो विकुर्वाणः प्रमना हृष्टमानसः' इत्यमरः। वृषपर्वाणं प्रकुर्वाणं सेवमानम् । 'गन्धनावक्षेपण—' (पा० सू० १-३-३२) इति सेवने आत्मनेपदम् । चित्र-

क्षमारूढं, यज्ञाभिलाषिणमपि नयज्ञाभिलाषिणं, निजतनूजया देवयान्या परिशोभितोपशल्यम् आद्यया विद्ययालापयमानम् एनं भृगूणामाद्य-मासाद्य अभिवाद्य निरवद्यां गिरमिति गृणाति स्म—

आम्नायपारग! मुनीन्द्र! कचोऽस्मि नाम्ना
धाम्नां निधे! भृगुवराङ्गिरसाङ्गजन्मा ।
विद्यां वरामधिजिगांसुरयासिषं त्वां
वत्स्यामि वत्सरसहस्रकमत्र वर्णी ॥ ३६ ॥

---

शिखण्डिनि विचित्रमयूरे जातमधिरोहणं यस्य । चित्रशिखण्डिजातस्य बृहस्पतेः आधेः रोहणं च । बाहुलकात् कर्तरि ल्युट् । सिताच्छकाव्याभिख्यातं बद्धनिर्मल-काव्यत्वादभिख्यातं प्रसिद्धम् । सितश्चाच्छश्च काव्यश्चेत्यभिख्यातम् आम्नातं च । कविरेव काव्यः, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । सकलतापैः आध्यात्मिकादिभिः रहितम् । सकलतापसानां हितं च । खट्वां पर्यङ्कम् । खट्वामारूढमिति क्षेपाभावात् समासाभावः । क्षमायाम् आरूढं भूमिष्ठम् । क्षमया आरूढं च । यज्ञे अभिलाषः । नयज्ञेषु नयवित्सु च । उपशल्यमिति लक्षणया समीप-मात्रवचनः । 'यस्याः पादोपशल्य' इति प्रयोगश्च । आद्यया श्रेष्ठया मृतस-ञ्जीवन्येति यावत् । आलापयमानं पूजां प्राप्नुवन्तम् । 'लियः सम्मानन—' (पा० सू० १-३-७०) इति सम्मानने आत्मनेपदम् । लीङ् श्लेषणे । 'विभाषा लीयतेः' (पा० सू० ६-१-५१) इत्यात्वे पुक् । अभिवाद्यते आभि-मुख्येन वाद्यते आयुष्मान् भवेत्याशीर्वादः कार्यतेऽनेन इत्यभिवादनम् । तूष्णीं स्थिते दोषप्रसरणात् । गृणाति स्म उक्तवान् । अत्र सकलतापरहित-मित्यादौ विरोधोऽलङ्कारः ॥

आम्नायेत्यादि । भृगुवर! अहं नाम्ना कचोऽस्मि । आङ्गिरसस्य बृहस्पतेः । अङ्गजन्मा पुत्रः । किमर्थमिहागतोऽसि इत्यत्राह—वरां श्रेष्ठां विद्याम् आधिजिगांसुः अध्येतुमिच्छुः । 'इङ् अध्ययने' । इङिकावध्युपसर्गं न व्यभिचरतः । 'इङश्च' (पा० सू० २-४-४८) इति सनि गमिरादेशः । 'अज्झनगमां सनि' (पा० सू० ६-४-१६) इति दीर्घः । 'सनाशंसभिक्ष उः'

वाचं कचस्य विशदामुशना निशम्य
विद्वान् विचार्य बहुधा बहुधाममधाम्नः ।
पुत्रं पुरन्दरगुरोरुररीचकार
विद्यार्थिनीह गुरवः परमानुकम्पाः ॥ ३७ ॥

मधुरैर्विविधैः श्लोकैर्विबुधामोदमादधत् ।
अथ तं सरसं प्रोचे स कविर्बुद्धिशक्तिभाक् ॥ ३८ ॥

---

(पा० सू० ३-२-१६८) इत्युः । 'न लोक—' (पा० सू० ७-२-७३) इति षष्ठीनिषेधः । त्वाम् अयासिषं प्राप्तवानस्मि । 'या प्रापणे' । 'यमरम—' (पा० सू० ७-२-७३) इति सगिटौ । अत्र विद्यामित्येव वक्तव्ये गुरुष्वनृतोक्तेरयुक्तत्वाद् मृतसञ्जीवनीमभिप्रेत्य वराम् इति विशेषितवानिति मन्तव्यम् । आम्नायपारगेत्यनेन अध्ययनार्थमागतेरौचित्यम् । वत्सरसहस्रकं 'कालाध्वनोरत्यन्तसंयोगे' (पा० सू० २-३-५) इति द्वितीया । अनेन अध्ययनस्य अन्तरानुपरमः प्रत्याय्यते । वर्णी ब्रह्मचारी । अनेनाध्ययनौचित्यम् ॥ ३६ ॥

वाचमित्यादि । विशदाम् असन्दिग्धार्थाम् । सम्यग्विहितनिजाकूतामित्यर्थः । विद्वान् विचारकुशलः । बहूनां धाम्नां तेजसां धाम सद्म, तस्य बहुधामधाम्नः । पुरन्दरगुरोः पुत्रमिति विचारे हेतुः । अर्थान्तरन्यासोऽलङ्कारः । भृगोः कचोरीकरणस्य विशेषरूपस्य अर्थस्य विद्यार्थिनीत्यादिना सामान्यरूपेणार्थेन समर्थनात् सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनम् अर्थान्तरन्यासः ॥ ३७ ॥

मधुरैरित्यादि । श्लोकैः यशोभिः पद्यैश्च । 'पद्ये यशसि च श्लोकः' इत्यमरः । विबुधा देवाः विद्वांसश्च, तेषाम् अमोदम्, आमोदं च । बुद्धेः शक्तिः अकुण्ठितत्वम् । बुद्धिश्च शक्तित्वबीजरूपः, संस्कारविशेषश्च । कविः शुक्रः, काव्यकृत् च ॥ ३८ ॥

हे वत्स गीष्पतिसुताधिजिगांससे य-
न्मत्सन्निधेस्तदधिकां मुदमुद्वहामि ।
अद्धा सदाध्ययनजागरिता निषीद
मद्धामनीद्धसुखमीप्सितसिद्धये त्वम् ॥ ३९ ॥

प्रसन्नं सद्वृत्तं स खलु सदलङ्कारममलं
गुणानामावासं सहृदयजनज्ञेयहृदयम् ।
महाशय्याविष्टं सुमहितपदं हृद्यचरितं
सदासेव्यं काव्यं स्फुटरसमसेविष्ट च कचः ॥ ४० ॥

---

हे इत्यादि । अधिजिगांससे अध्येतुम् इच्छसि । जागरिता जागरूकः ॥ ३९ ॥

प्रसन्नमित्यादि । मुखविकासादिना प्रकटितप्रसादम् । अन्यत्र, 'शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यः । व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र निहितस्थितिः' ॥ अन्यत् चित्तम् । सर्वत्र सर्वेषु रसेषु । इत्युक्तलक्षणप्रसादगुणयुक्तम् । सद्वृत्तं शुभचरित्रम् । 'आचारो वृत्तचारित्रचरित्रचरणानि च' इति **वैजयन्ती** । सद्भिः शोभनैः तत्तद्रसानुकूलैः वृत्तैः युक्तं च । सदलङ्कारं प्रकाशाधिक्यात् कुजादितारग्रहेषु मध्ये श्रेष्ठमित्यर्थः । 'शरुबुगुशुचसाद्या वृद्धितो वीर्यवन्तः' इति **वराहमिहिरः** । सदलङ्कारं सन्तः प्रशस्ताः अनुप्रासादयः शब्दालङ्कारा उपमादयोऽर्थालङ्काराश्च यत्र तत् । अमलं कामादिभिः दोषैः रहितम् । मुख्यार्थहतिप्रभृतिभिश्च । गुणानाम् आश्रितवात्सल्यादीनां, माधुर्यादीनां च । प्रसादस्य गुणान्तर्भावेऽपि पृथगुक्तिः ओजसि माधुर्ये च आवश्यकत्वेन प्राधान्यात् । आवासम् आवसत्यस्मिन्निति, आवासस्थानम् । अधिकरणे घञ् । सहृदयजनैः निपुणमतिभिः । प्रशस्तहृदयेन सह वर्तत इति सहृदय इति **सुबोधिनी** । सूक्तिविचारदक्षैः जनैश्च ज्ञेयं हृदयं हृद्गतं वस्तु, गूढोऽभिप्रायश्च । महती बृहती, पूजिता च । शय्या तल्पम् । 'पर्यङ्कं शयनं शय्या । तल्पं च तलिमं स्मृतम्' इति **अभिधानरत्नमाला** । तस्याम् आविष्टम् । शय्या ग्रन्थगुम्फः तया आविष्टं च । 'शय्या तल्पे ग्रन्थगुम्फे' इति **वैजयन्ती** ।

प्रकृतिरुचिरमारात् प्रेक्ष्य सा पक्ष्मलाक्षी
कचमचकमतैनं देवयानी तदानीम् ।
धवलमधिकतर्षा शारदं नीरदाग्रं
रसरहितमुदारं व्याकुला चातकीव ॥ ४१ ॥

अनन्तरमन्तेवासिसन्तानैः निखिलनिगमागमनिपाठनिरतैः संख्यावद्भिरप्यसंख्यावद्भिः परिगतपरिसरो भृगुकुलभाग्याङ्कुरो

---

सुमहिते सर्वैः पूजिते पदे चरणे यस्य, यद्वा सुमहिते सुमनोहरे । एतत् सर्वाङ्गसौन्दर्योपलक्षणम् । 'भृगुः सुखी कान्तवपुः सुलोचनः कफानिलात्मा-सितवक्रमूर्धजः' इति **वराहमिहिरः** । सुमहितानि तत्तद्रसानुगुणानि पदानि च यत्र । हृद्यं हृदयप्रियं चरितं कर्म यस्य । चरितम् इतिवृत्तं च । सदासेव्यं सद्भिः आसेव्यम् आसेवितम् । कर्ममाले कृत्यः । सदा सर्वस्मिन् काले । 'सर्वैकान्य—' (पा० सू० ५-३-१५) इति दा । 'सर्वस्य सो-' (पा० सू० ५-३-६) इति सादेशः । आदिमे मध्यमेऽन्तिमे च वयसि व्युत्पत्ति-विधायित्वात् सरसत्वात् प्रायेण भगवतस्तद्भक्तानां चरितवर्णनरूपतया परम-पुरुषार्थसम्पादकत्वाच्च सेव्यम् अवश्यं सेवनीयम् । आवश्यके कृत्यः । काव्यं शुक्रं, कविकर्म च । स्फुटः स्निग्धवीक्षणादिभिः स्पष्टः अक्षिविषयो रसो रागः स्नेहो यस्य । स्फुटाः शृङ्गारादयो रसा यत्र । अत्र शब्दशक्तिमूलो वस्तु-ध्वनिः । 'अलङ्कारोऽथ वस्त्वेव शब्दाद् यत्रावभासते । प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा' ॥ ४० ॥

**प्रकृतीत्यादि** । प्रकृतिरुचिरं स्वतो मनोहरम् । आरात् समीपे दूरे च । 'आराद् दूरसमीपयोः' इत्यमरः । अचकमत चकमे । 'कमेरुपसंख्यानम्' (वा०) इति चङ् । धवलं स्त्रीणां निसर्गरमणीयं, श्वेतं च । 'निसर्गरमणीयो यः स्त्रीणां स धवलः स्मृतः' । रसो रागः, जलं च । तर्षः स्पृहा, पिपासा च । एतद् व्याकुलत्वे हेतुः । देवयानीप्रेम्णोऽपि कचस्य विद्यावाप्तिहेतुभूतत्वाद् इदमत्रोक्तम् ॥ ४१ ॥

**अनन्तरमित्यादि** । अन्तेवासिसन्तानैः शिष्यसमूहैः । 'शयवास—' (पा० सू० ६-३-१८) इत्यलुक् । निगमा वेदाः । आगमाः शास्त्राणि ।

भार्गवः शिष्यान्तरादृष्टचरगुणसन्दोहसन्दर्शननानन्द्यमानमानसो निरवद्यया मेधया निखिलामपि विद्यां मुदा मेधायन्तं सकलसन्देहपङ्कविध्वंसिनिजवचनचातुरीविशेषविचनीकस्यमानवदनारविन्दम् अमराचार्यनन्दनमिमं नन्दनीयन् अद्धायम् अध्यापिपत् ॥

दुर्ज्ञानार्थविबोधफुल्लहृदया वृत्तिः कचस्यादृता
सैषा सम्यगतूतुषद् भृगुवरं तं देशिकाग्र्यं तदा ।
वेलातीतरतान्तरेषु युवतेः सद्यो निरुद्योगता
रुन्धे मन्मथपावकेद्धमनसः पुंसो रिरंसां पराम् ॥ ४२ ॥

---

'आगमस्तूपदेशेऽपि शास्त्रेऽप्यागमनेऽपि च' इति केशवः । निपाठः पठनम् । 'नौगदनद—' (पा० सू० ३-३-६४) इत्यपो विकल्पे घञ् । 'निपाठनिपठौ पाठे' इत्यमरः । संख्यावद्भिः पण्डितैः । 'संख्यावान् पण्डितः कविः' इत्यमरः । असंख्यावद्भिः इयत्तारहितैः । अदृष्टचरस्य अदृष्टपूर्वस्य । 'भूतपूर्वे चरट्' (पा० सू० ५-३-५३) इति चरट् । नानन्द्यमानम् अत्यर्थं हृष्यत् । मेधया, 'धीर्धारणावती मेधा' इत्यमरः । एतत्, 'शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इत्युक्तानाम् अन्येषामप्युपलक्षणम् । मेधायन्तम् आशु गृह्णन्तम् । 'कण्ड्वादिभ्यो यक्' (पा० सू० ३-१-२७) इति यक् । मेधा आशुग्रहणे इति कण्ड्वादौ सुदधातुवृत्तिः । चातुरी चातुर्यम् । विचनीकस्यमानम् अत्यर्थं विकसत् । 'कस गतौ' यङ् । 'नीग्वञ्चु—' (पा० सू० ७-४-८४) इति नीगागमः । नन्दनीयन् नन्दनमिवाचरन् । 'उपमानाद्—' (पा० सू० ३-१-१०) इति क्यच् । अध्यापिपत् अध्यापितवान् । 'इङ् अध्ययने' । 'विभाषा लुङ्लृङोः' (पा० सू० २-४-५०) इति गाङभावे रूपम् ॥

दुर्ज्ञानेत्यादि । दुर्ज्ञानः दुःखेन ज्ञायमानः । 'आतो युच्' (पा० सू० ३-३-१२८) इति खलर्थे युच् । फुल्लं विकसितम् । आदृता अर्चिता । अतूतुषत् तोषितवती । 'तुष प्रीतौ' लुङि 'णिश्रिद्रुस्रु—' (पा०सू० ३-१-४८) इति चङ् ।

तदनु तेन दनुजदेशिकेन निजानुवर्तनवरीवृत्यमानमोदया तदीयतनयया देवयान्या च सततमपि परिलाल्यमानोऽयम् अप्रमाद्यन्नेव विद्याप्रपञ्चम् अस्मादधीयन् पञ्चशतहायनीम् अतिवाहयाम्बभूव । तदनु कदाचन काव्यकन्यकानियोगात् कान्तारान्तरसञ्चरसञ्चारितमहितमाहाकुलपालनाकुलो माहाकुलः स महेन्द्रगुरुनन्दनः स्फुटतरमवगताकूतैः अवसरप्रतीक्षैः तत्क्षणविकस्वरामर्षदीप्राक्षैः पार्श्वकैः आयश्शूलिकैः कालव्यालकरालकरवालकरम्बितकरैः असुरनिकरैः करोपकर्षं गृहीतो गीर्वाणगृह्य इत्यकृपायमाणैः कृपाणघातं हत्वा प्रत्यवयवं शकलीकृतः सहसा वृकसमुदयायोदीयमानमोदम् अदीयत ॥

---

वेला मर्यादा । रुन्धे रुणद्धि । 'रुधिर् आवरणे' स्वरितेत् । रिरंसां रन्तुमिच्छाम् । अत्र दृष्टान्तालङ्कारः । स च वैधर्म्येण तोषहेतोर्वृत्तेः विरुद्धस्वभावाया निरुद्योगतायाः प्रतिबिम्बत्वेनोपादनात् । 'तस्यापि बिम्बप्रतिबिम्बभावे दृष्टान्तः' । तस्यापि साधारणधर्मस्यापि, न केवलमुपमानोपमेययोः ॥ ४२ ॥

तदन्वित्यादि । निजानुवर्तनेन वरीवृत्यमानः अत्यर्थं वर्तमानः मोदो यस्याः । यङन्तात् शानच् । 'रीगृदुपधस्य च' (पा० सू० ७-४-९०) इति रीक् । अप्रमाद्यन् सावधानः सन् । 'मदी हर्षे' । अस्माद् अधीयन् । 'आख्यातोपयोगे' (पा० सू० १-४-२९) इति पञ्चमी । उपयोगः नियमपूर्वकं विद्याग्रहणम् । अधीयन् अकृच्छ्रेण पठन् । 'इङ्धार्योः शत्रकृच्छ्रिणि' (पा० सू० ३-२-१३०) इति शता । पञ्चशतहायनीं पञ्चशतं वत्सरान् । अतिवाहयाम्बभूव अतिवाहितवान् । तदन्वित्यादि । सञ्चरो मार्गः । 'गोचरसञ्चर—' (पा० सू० ३-३-११९) इति निपातः । माहाकुलं गोकुलम् । माहाकुलः महाकुलस्यापत्यम् । 'महाकुलाद्—' (पा० सू० ४-१-१४१) इत्यञ् । आकूतम् अभिप्रायः, मृतसञ्जीविनीजिघृक्षया गीष्पतिसुतस्य विद्यार्थमागतिः । माहाकुलत्वे निकृष्टकर्मणापि गुरुप्रसादनामिसन्धिश्च आकूतावगतौ हेतुः । अवसरं प्रतीक्षन्त इति अवसरप्रतीक्षाः । 'ईक्षिक्षमिभ्यां च' (वा०) इति णः । विकस्वरः विकसनशीलः । 'स्थेशभास—' (पा० सू० ३-२-१७५) इति वरच् ।

विलयं तं नयन्तोऽथ छलयन्तो भृगूद्वहम् ।
कलयन्तः परां प्रीतिं निलयं ते निजं ययुः ॥ ४३ ॥

याते जीवात्मजाते वनमतिविधुरा भार्गवी मार्गवीथी-
दत्ताक्षी सायमेषा धृतकुतुकभरा तत्प्रतीक्षैव तस्थौ ।
गोत्रां गोप्त्रा वियुक्तामथ समुपगतां वीक्ष्य सा कातराक्षी
तातं तातप्यमाना निजहितनिरतं गद्गदां गामवादीत् ॥ ४४ ॥

---

दीप्रे दीपनशीले । 'नमिकम्पि—' (पा० सू० ३-२-१६७) इति रः । पार्श्वकैः पार्श्वास्थिवत् कुटिलः उपायः पार्श्वं, तेन अर्थान् अन्विच्छन्तः पार्श्वकाः । 'पार्श्वेनान्विच्छति' (पा० सू० ५-२-७५) इति कन् । आयश्शूलिकैः तीक्ष्णोपायोऽयश्शूलं, तेनार्थानन्विच्छन्तः आयश्शूलिकाः । 'अयःशूल—' (पा० सू० ५-२-७६) इति ठक् । करम्बितो युक्तः । 'वृत्तः करम्बितो मिश्रः छुरितो मिलितस्तथा' इति शब्दरत्नाकरः । करोपकर्षं करे उपकृष्य । 'सप्तम्यां चोप—' (पा० सू० ३-४-४९) इति णमुल् । गीर्वाणगृह्यः देवपक्ष्यः । 'पदास्वैरि—' (पा० सू० ३-१-११९) इति ग्रहेः क्यप् । कृपावन्तो भवन्तः कृपायमाणाः तेभ्योऽन्ये अकृपायमाणाः । 'भृशादिभ्यः—' (पा० सू० ३-१-१२) इति क्यङ् । कृपाणघातं हत्वा कृपाणेन हत्वा । 'करणे हनः' (पा० सू० ३-४-३७) इति णमुल् । 'कषादिषु—' (पा० सू० ३-४-४६) इति धातोरनुप्रयोगः । समुदयः समूहः ॥

विलयं तमित्यादि । 'ली द्रवीकरणे' । एरच् । छलयन्तः 'छो छेदने' । छ्यति छिनत्ति धर्मार्थानुसारिणं मार्गमिति छलं छद्म तत् कुर्वन्तीति छलयन्तः । कलयन्तः प्राप्नुवन्तः । 'कल गतौ संख्याने च' ॥ ४३ ॥

याते इत्यादि । मार्गवीथीति । अत्र वीथीशब्देन पङ्क्तिवाचकेन मार्गस्य ऋज्वायतत्वं लक्ष्यते । तं प्रतीक्षत इति तत्प्रतीक्षा, णः टाप् । गोत्रां गोसमूहम् । 'खलगोरथात्' (पा० सू० ४-२-५०) 'इनित्रकट्यचश्च' (पा० सू० ४-२-५१) इति त्रः । गोप्त्रा पालकेन । तातप्यमाना अत्यर्थं तापयुक्ता, 'तप सन्तापे' । यङन्तात् शानच् । गद्गदां स्खलिताक्षराम् ॥ ४४ ॥

यातो वनाय स गवामवनाय तात !
नागात् कचः स तु गवां समजः समागात् ।
हा हन्त हन्त किमिदं तमसा दिगन्त-
मावृण्वतीयमयते क्षणदा क्षणेन ॥ ४५ ॥

श्रुत्वा तां दुःश्रवां गां मृत इति मृतसञ्जीवनीविद्ययाद्यं
शिष्याणामाजुहाव त्रिदशगुरुसुतं भार्गवो भर्गधामा ।
भित्त्वा भित्त्वा वृकाणामथ जठरतलं पूर्ववत् पूर्णकायो
जीवन् जीवात्मजोऽसौ सपदि निजगुरोरग्रतः प्रादुरासीत् ॥ ४६ ॥

तदनु गुरुचरणपरिचरणधुरीणधिषणोऽसौ धिषणसूनुः उरुणा करुणाभरेणैव गुरुणामुना प्रतिपादितप्राणोऽहम् इति सत्वरविसृत्वरभक्तिभारभरितान्तरङ्गो मुहुर्मुहुरमुं प्रसृमरप्रेमरसपरिप्राणं प्राणंसीत् ॥

---

यात इत्यादि । वनाय वनं, यातः । 'गत्यर्थ–' (पा० सू० २-३-१२) इति चतुर्थी । सः तेन नीतः गवां समजः गोगणस्तु । 'अज गतिक्षेपणयोः' । 'समुदोरजः–'(पा०सू० ३-३-६९)इत्यप्, समागात् सम्यगागतः । किमिदम् अत्र को हेतुः । हा हन्त हन्तेति विषादाधिक्ये । पथि केनापि हेतुना विलम्बितः, द्रुतमायास्यति चेत्यत्राह—तमसेत्यादि । आवृण्वती तिरोदधाना । अयते 'अय वय गतौ' । क्षणेन वेगेन । कचापायशङ्काविष्टत्वेन निशागतेः वेगातिशयवत्त्वप्रतीतिः ॥ ४५ ॥

श्रुत्वेत्यादि । दुःश्रवां दुःखेन श्रूयमाणाम् । जीवनीविद्यया आजुहाव साध्यनामयुक्तं तन्मन्त्रम् उपासितवानित्यर्थः । शिष्याणाम् आद्यम्, अनेन वात्सल्यातिशय उक्तः । त्रिदशगुरुसुतमित्यनेन लोकाक्रोशभीत्यापि तस्य प्रत्युज्जीवनीयत्वमुक्तम् । भर्गधामेत्यनेन कुतोऽप्यस्य प्रवृत्तिर्न व्यभिचरतीति । प्रादुरासीत् प्रादुर्बभूव ॥ ४६ ॥

तदन्वित्यादि । गुरुचरणपरिचरणधुरं वहतीति गुरुचरणपरिचरणधुरीणा । तद्वहतीत्यर्थे 'खः सर्वधुरात्' (पा०सू० ४-४-७८) इत्यत्र ख इति योगविभागाद् 'उत्तरधुरीण'इत्यादिवत् खः । 'आयनेयीनीयियः-' (पा०सू०७-१-२)इतीनादेशः ।

वीक्ष्य तं जीवितं मोदादीक्ष्यमाणं तनूजया ।
नन्नम्यमानं पदयोर्नानन्दामास भार्गवः ॥ ४७ ॥

जाल्मोऽयं जीवजन्मा नतजनवशगाद् देशिकादस्मदीया-
द्याद्यां विद्यां जिहीर्षुर्निहत इति मुदा सञ्चिताः सञ्चरन्तः ।
दैतेया जीवितं द्रागिह तु गुरुगृहे वीक्ष्य तं विस्मयाधि-
क्रोधाविष्टान्तरङ्गाः पुनरपि निधने यत्नमेते वितेनुः ॥ ४८ ॥

कचस्तु निरस्तभयभिद्ग पुरोवदेव गुरोरधीयानो वसन् पुनरपि कदाचित् कुशकुसुमादिकानयनाय अनयादिष्टो विपिनमाविष्टो दुष्टाशयैः

---

अनेन केनाप्यननुभूतचरम् अवस्थान्तरम् अनुभूयापि स्वाभिप्रेतविद्याग्रहणं प्रति अस्य व्यवसायातिशय एवासीदिति प्रकाश्यते । भरितं पूर्णम् । प्रसमरः प्रसरणशीलः । 'सृघस्यदः–' (पा० सू० ३-२-१६०) इति क्मरच् । परिप्राणं परिपूर्णम् । 'प्रा पूरणे' । 'संयोगादेः–' (पा०सू० ८-२-४३) इति निष्ठानत्वम् । प्राणंसीत् प्रणतवान् । 'णम प्रह्वत्वे' लुङ् ॥

वीक्ष्येत्यादि । जीवितमिति कर्तरि क्तः । नन्नम्यमानं पुनः पुनः नमन्तम् । यङ् । 'नुगतो–'(पा०सू० ७-४-८५) इति नुक् । नानन्दामास अत्यर्थं ननन्द । यङ्लुगन्तात् लिटि आमः 'कृञ्चानु–' (पा०सू० ३-१-४०) इत्यस्तेरनुप्रयोगः । मोदादीक्ष्यमाणं तनूजयेत्यनेन 'गुरुवद् गुरुपुत्रेषु' इत्युक्तस्य सम्यगाचरणं प्रकाश्यते । अतो नन्दनाधिक्योपपत्तिः ॥ ४७ ॥

जाल्म इत्यादि । 'जडो जाल्मश्च दुर्बुद्धौ स्तब्धेऽनालोच्यकारिणि' इति वैजयन्ती । विद्याम्, 'न लोका–' (पा०सू० २-३-६९) इति षष्ठीनिषेधः । जिहीर्षुः हर्तुमिच्छुः । सनन्तादुः । सञ्चिताः व्याप्ताः । जीवितम् इति णिजन्तात् कर्मणि क्तः । निहतस्य पुनर्दर्शनाद् विस्मयः । शठोऽयं विद्यां ग्रहीष्यतीत्याधिः । निजप्रवृत्तिवैफल्यात् क्रोधः ॥ ४८ ॥

कच इत्यादि । दिष्ट्येत्यानन्दे । अक्षिगतः द्वेष्यः । 'द्वेष्ये त्वक्षिगतः' इत्यमरः । अक्षिगतः लोचनमार्गं प्राप्तः । जीवग्राहं जीवः इतीगुप-

अमरवैरिभिर्दृष्टो दिष्ट्यायम् अक्षिगतोऽस्माकमक्षिगत इत्युदीयमानमोदैः जीवग्राहं गृहीतो माषपेषं पिष्ट्वा पयोधिपयसि परिमेलितः। तदीयगुणपुञ्जस्य संजानत्या दुर्विषहेण विरहेण शुचं कलयन्त्या कचं घातयन्त्या निजतनूजयानुनाथितेन तेन पूर्ववदेव देशिकेन पूर्ववदेव जीवितेन योजितोऽभूत् ॥

पुरुहूतगुरोः पुत्रः पुरुभूतमुदा युतः।
आपदाचार्यपादानाम् आपदामपदं पदम् ॥ ४९ ॥

अथ कथयामास च व्यथितमानसामसावौशनसीम्—

देशिकस्य दययैव जीवनं देवयान्यहमयासिषं क्षणात्।
किन्तु नाम जगतीह दुर्लभं कीरवाणि! करुणाबलाद् गुरोः ॥५०॥

---

घात्: कः। 'समूलाकृतजीवेषु' (पा० सू० ३-४-३६) इति णमुल्। जीव एव गृहीतः। जीवन्नेव गृहीत इत्यर्थः। माषपेषं माषमिव पिष्ट्वा। 'उपमाने कर्मणि च' (पा० सू० ३-४-४५) इति णमुल्। परिमेलितः संयोजितः। 'मील श्लेषणे'। णिजन्तात् क्तः। गुणपुञ्जस्य संजानत्या गुणपुञ्जं सोत्कण्ठं स्मरन्त्या। 'अधीगर्थ—' (पा० सू० २-३-५२) इति षष्ठी। आध्यानत्वात् 'सम्प्रतिभ्यामनाध्याने' (पा० सू० १-३-४३) इति आत्मनेपदाभावः। उत्कण्ठापूर्वकं स्मरणम् आध्यानम्। कलयन्त्या प्राप्नुवन्त्या। कचं घातयन्त्या कचवधम् आचक्षाणया। 'आख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्ययापत्तिः प्रकृतिवच्च कारकमिति' (वा०) णिजादि। अनुनाथितेन याचितेन। 'नाधृनाथृयाच्ञोपतापैश्वर्याशीःषु'। जीवितेनेति भावे क्तः ॥

पुरुहूतेत्यादि। पुरुभूता पुरुर्भूता। सुप्सुपेति समासः। भूतेत्यनेन अनुभावमुखेन बहिःप्रकटेति सूच्यते। आचर्यपादानां पादशब्दः पूज्यवाची। अपदम् अस्थानम्। पदं स्थानम् ॥ ४९ ॥

अथेत्यादि। व्यथितमानसां निजघातानुस्मरणं व्यथाहेतुः। उशनसोऽपत्यम् औशनसी ॥

भूयोऽपि भृगुकन्याया वन्याया वन्यान्यानयेति नियोगेन मान्यतरतरुलतानिकरधन्यायां वनान्यां वितन्यमानचरणविन्यासः कचः इह कचे गृहीतो गलोपपीडं हतो गुरुकुलापीडः पुष्टरोषं प्लुष्ट्वा कर्पूरपेषं पिष्टो धर्मरतनिर्मूलनकर्मणि परमलङ्कर्मीणैः व्याजजालस्य जानानैः अपुनरुत्थानमीहमानैः असुरैरपि सुरायां संयोज्य गुरुसमीपमुपनीय गुरुप्रमदकरं सुरारसमिमं पिबेति प्राभृतीकृतः सन् नशनैरुशनसा सरलमनसा विधिबलाद् अपापोऽयम् अपेपीयत ॥

---

देशिकेत्यादि । अयासिषं प्राप्तवानस्मि । कीरः शुकः । कीरवाणीत्यनेन त्वद्वचोमाधुरी देशिकदयाया हस्तावलम्बनं करोतीति द्योत्यते ॥ ५० ॥

भूयोऽपीत्यादि । वन्यायाः वनसमूहात् । 'पाशादिभ्यो यः' (पा० सू० ४-२-४९) इति यः समूहे । 'येनिकव्यत्रा' इति लिङ्गशास्त्रात् स्त्रीत्वम् । वन्यानि वने भवानि । दिगादियदन्येभ्योऽपि इति स्वामी । गलोपपीडं गले उपपीड्य । 'सप्तम्यां च–' (पा० सू० ३-४-४९) इति णमुल् । गुरुकुलस्य 'कुलं गृहेऽन्वये व्राते' इति निघण्टुः । आपीडः शिरोऽलङ्कारः । 'शिखास्वापीडशेखरौ' इत्यमरः । प्लुष्ट्वा दग्ध्वा । कर्पूरपेषं पिष्टः कर्पूरमिव पिष्ट इत्येवार्थः । 'उपमाने–' (पा० सू० ३-४-४५) इति णमुल् । धर्मरतानां निर्मूलनकर्मणि मूलच्छेदे । परम् अत्यर्थम् । अलङ्कर्मीणैः कर्मणेऽलं कर्मणे शक्ताः अलङ्कर्मीणाः तैः । 'अषडक्ष–' (पा० सू० ५-४-७) इत्यादिना स्वार्थे खः । व्याजजालस्य जानानैः व्याजजालेन वर्तमानैः । 'ज्ञोऽविदर्थस्य करणे' (पा० सू० २-३-५१) इति करणे षष्ठी । 'अकर्मकाच्च' (पा० सू० १-३-४५) इति जानातेरात्मनेपदम् । ईहमानैः पदम् इच्छद्भिः । 'ईहा तु लिप्सोद्यमयोः' इति वैजयन्ती । असुरैः अविद्यमानसुरैः इत्यपि स्फुरति । गुरुप्रमदकरम् अधिकं मदकरं, गुरोः बृहस्पतेः प्रमदकरं हर्षकरं च । सुरारसं मद्यरसं, सुरेषु आमीक्ष्ण्येन रसो यस्य तं च । सरलमनसा सरति परेच्छाम् अनुसरति इति सरलं दक्षिणं परच्छन्दानुवर्ति । सरति गच्छतीति सरलम् ऋजु वा । पाप इति अभेदोपचाराद् मतुब्लोपाद् वा तद्वति वर्तते, तस्मादन्योऽपापः । 'नञ्'

ततश्च—

कान्तो हन्त कचः कुतो नु न वनादागात् प्रियंभावुको
दैत्यौघैः किमघानि तात! गमितः किं श्वापदैरापदम् ।
एवं व्याकुलयानया निगदितः पीडामसाह्वानसा-
वाह्वज्जीवनदायिनाथ मनुना शिष्यं पुरेवादरात् ॥ ५१ ॥

सोऽयमाहूयमानोऽपि नागादेव ततो भृगुः ।
संस्तम्भ्य धीरधीः शोकं निजगाद निजां सुताम् ॥ ५२ ॥

---

(पा० सू० २-२-६) इति समासः । अपेपीयत अत्यर्थं पीतः । पिबतेर्यङन्तात् कर्मणि लङ् । यक् । भृशार्थेनात्र साकल्यं लक्ष्यते ॥

**ततश्च** । अस्योत्तरत्र सम्बन्धः । **कान्त** इत्यादि । नागात् न प्राप्तवान् । 'इण् गता'वित्यस्माल्लुङ् । 'इणो गा लुङि' (पा० सू० २-४-४५) इति गादेशः । प्रियम्भावुकः प्रियो भवन् । 'कर्तरि भुवः—' (पा० सू० ३-२-५७) इति खुकञ् । अत्र च्व्यर्थे विधीयमानेन खुकञा प्राग् देवपक्षीयत्वादप्रियत्वेऽपि इदानीमेवं प्रियो जात इति प्रकाश्यते । अघानि किं हतः किम् । कर्मणि लुङ् । 'चिण् भावकर्मणोः' (पा० सू० ३-१-६६) इति च्लेः चिणादेशः । श्वापदैः, 'व्याघ्रादयो वनचरा मृगाः स्युः श्वापदाभिधाः' । असाह्वान् असहनः सन् । 'दाश्वान्साह्वान्—' (पा० सू० ६-१-१२) इति **निपातः** । 'दाश्वानित्यादयः छन्दसि भाषायां च अविशेषेण निपात्यन्ते' इति **काशिका** । आह्वद् आहूतवान् । 'लिपिसिचिह्वश्च' (पा० सू० ३-१-५३) इति च्लेः अङ् । मनुना मन्त्रेण । आदरात्, अनेन अत्याहितशङ्कया आह्वानविधौ अवधानातिशय उक्तः ॥ ५१ ॥

**सोऽयमित्यादि** । संस्तम्भ्य 'ष्टभि स्कभि प्रतिबन्धे' । इदित्त्वात् 'अनिदितां—' (पा० सू० ६-४-२४) इति नलोपाभावः । संस्तभ्येति वा पाठः । स्तन्भुस्तुन्भु—' (पा० सू० ३-१-८२) इति सौत्रस्य स्तन्भेः इदित्त्वाभावान्नलोपः निजगाद उक्तवान् ॥ ५२ ॥

सञ्जीवनेन मनुना समजीजिवं तं
वत्से! तथापि न समेति स मे समीपम् ।
तत् किं करोमि विदुषीह निषीद धैर्ये
शोचन्ति हन्त न गतायुषमत्र सन्तः ॥ ५३ ॥

तदनु तत् तातगदितम् आकलय्य तत्तादृशशोकतप्तांशया भार्गवी भारतीम् इमाम् अभाणीत् ।

तैस्तैर्वैनयिकादिभिर्गुणगणैर्यः सेवनीयः सता-
मङ्गोपाङ्गविराजितेषु निगमेष्वद्याद्वितीयश्च यः ।
यस्ते पादसरोरुहैकशरणः कारुण्यपाथोनिधे!
यत्सत्यं न विना मनोहरममुं जीवामि जीवात्मजम् ॥ ५४ ॥

---

सञ्जीवनेनेत्यादि । समजीजिवं प्रत्युज्जीवितवान् अस्मि । च्लेश्चङ् । 'भ्राजभास–' (३-२-१७७) इति णौ चङि उपधाह्रस्वविकल्पः । 'जीव प्राणधारणे' । प्राणलक्षणस्य कर्मणो धात्वर्थेनोपसंग्रहाद् अकर्मकत्वम् । 'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥' तत् किं करोमि । अतोऽन्यद् उपायान्तरं न मेऽस्तीति भावः । इह अस्यामवस्थायाम् । धैर्ये निषीद धैर्यमवष्टभ्य तिष्ठ । शोचन्ति । 'शुच शोके' । गतायुषं प्रतीति शेषः ॥ ५३ ॥

तदन्वित्यादि । स एव तादृशः तत्तादृशः । अभाणीद् उक्तवती । 'भण शब्दे' ॥

तैस्तैरित्यादि । विनय एव वैनयिकः । 'विनयादिभ्यष्ठक्' (पा० सू० ५-४-३४) इति स्वार्थे ठक् । सतामिति 'कृत्यानां–' (पा०सू० २-३-७१) इति कर्तरि षष्ठी । अङ्गानि शिक्षादयः । उपाङ्गानि इतिहासपुराणादयः । तैर्विराजितेषु सम्यक्प्रकाशितरमणीयनिगूढार्थेषु । अविद्यमानो द्वितीयो यस्य सः अद्वितीयः । 'नञोऽस्त्यर्थानां वाच्यो बहुव्रीहिर्वा चोत्तरलोपः' इति बहुव्रीहिः, पूर्वपदावयवभूतस्य उत्तरपदस्य विकल्पेन लोपश्च । यत्सत्यं सत्यमेव ॥ ५४ ॥

छदयाशु तात सदयाशय प्रभो!
तनयं प्रभूतविनयं गुरौ गुरोः ।
मदयाधुनैव हृदयाधिमेधितं
कलये कथं नु विलयेऽस्य धीरताम् ॥ ५५ ॥

आकर्ण्य तद् गाढविदीर्णकर्ण
वचो विजोघूर्णितधीः स तूर्णम् ।
शुक्रोऽथ सक्रोधमुदाजुहाव
शक्रेहिते प्रक्रममाणमेनम् ॥ ५६ ॥

तदनु तदीयजठरकुहर एव परिकलितमूर्तिर्विद्यया सद्य एव विन्नजीवनो जीवनन्दनो मन्दमन्दम् अयमहं कचोऽभिवादये भगवन्निति वदन्, उशनसा हर्षविस्मयचिन्ताशबलमनसा पुत्र! वर्त्मना केनास्मदुदरम्

---

छदयेत्यादि । छदय प्राणवन्तं कुरु । 'छदिरूर्जने' । मित्त्वाद्ध्रस्वः । ऊर्जनं प्राणनम् । 'छदि अपवारणे' इति यौजाजिकस्य स्वार्थणिजभावे मित्त्वार्थोऽयमनुवादः । धातूनामनेकार्थत्वाद् ऊर्जने वृत्तिः । मदय ग्लपय । 'मदी हर्षग्लपनयोः' इति । मित्त्वाद्ध्रस्वः । कलये प्राप्नोमि । 'सजसाजगौ भवति मञ्जुभाषिणी' ॥ ५५ ॥

आकर्ण्येत्यादि । विजोघूर्णिता अत्यर्थं घूर्णिता । यङन्ताद्वा यङ्लुगन्ताद्वा कर्तरि क्तः । उदाजुहाव उच्चैराहूतवान् । एतच्च क्रोधानुभावः । शक्रेहिते प्रक्रममाणम् आरभमाणम् । प्रवर्तमानम् इत्यर्थः । 'प्रोपाभ्यां—' (पा० सू० १-३-४२) इति आत्मनेपदम् । अनेन देवकार्यस्यावश्यंभावितया शुक्रस्य कचोज्जीवनोद्योगः केनापि न विरमेदिति प्रकाश्यते ॥ ५६ ॥

तदन्वित्यादि । विन्नं लब्धम् । 'विदॢ लाभे' । व्यवसितायुरवसानोऽयं जीवित इति हर्षः । आत्मोदरस्थत्वाद् विस्मयः । कथमयम् अस्मदुदरं प्रविष्ट इति चिन्ता । वर्त्मना मार्गेण । अनेन प्रकारोऽपि विवक्षितः । गृह्यकः परतन्त्रः । 'पदास्वैरि—' (पा० सू० ३-१-११९) इति अस्वैरिणि क्यप् । अपरिहीणा अत्यक्ता । 'ओहाक् त्यागे' । 'ओदितश्च' (पा० सू० ८-२-४५)

आविष्टोऽसि इति पृष्टः, तदनुग्रहेण गुह्यकोऽयम् अपरिहीणस्मृतिः असुरै-रद्य मङ्क्षु संक्षुद्य मद्यमिश्रितो निभृतमुपहारीकृतोऽहं तव हन्त वदन-विवरेण उदरकोटरम् आटीकिषीति पटीयानुदीरयामास ।

अनन्तरम् अधिगतसुराराातिकृतनिकृतिः सुरासेवनादसुरासेवना-दपि विरतमतिरसौ भृगुपतिः 'अयि वत्स! मत्सरिणाम् अमरवैरिणां सौहार्दघातुकानां दुष्टाकूतानां खट्वारूढानां संहतिं समूलघातं हन्मि । तन्मा मनीषी त्वं विषीद' इत्यादिवचसा कचं सान्त्वयन् भूयो विदितभूरितरोपायसारोऽपि तन्निर्गमोपायमव्यवस्यन् वत्सां प्रति सरसां सरस्वतीम् उत्सारयामास ।

---

इति निष्ठानत्वम् । मङ्क्षु सपदि । संक्षुद्य पिष्ट्वा । आटीकिषि आगमम् । 'टीकृ गत्यर्थः' । पटीयान् अतिशयेन पटुः । पटुशब्दादीयसुन् । उदर-विवरे विसंस्थुलमवस्थितस्यापि निवेदनचातुर्यमिह पाटवम् । उदीरयामास कथयति स्म । 'ईर गतौ' णिच् ।

अनन्तरमित्यादि । सुरासेवनात् मद्यपानात् । असुराणाम् आसेव-नादपि । सुहृदः सुहृदयस्य च भावः सौहार्दम् । 'हायनान्त—' (पा० सू० ५-१-१३०) इति अण् । हृदयस्य तु अणि 'हृदयस्य हृल्लेख—' (पा० सू० ६-३-५०) इति हृदादेशः । 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च' (पा० सू० ७-३-१९) इति उभयपदवृद्धिः । घातुकानां हननशीला-नाम् । 'लषपत—' (पा० सू० ३-२-१५४) इत्युकञ् । खट्वारूढानाम् अविनीतानाम् इत्यर्थः । 'खट्वा क्षेपे—' (पा० सू० २-१-२६) इति समासः । 'खट्वारोहणं चेह विमार्गप्रस्थानस्य उपलक्षणम् । सर्व एव अविनीताः खट्वा-रूढा उच्यन्ते' इति **वृत्तिः** । अत्र **रामः** ---- 'सर्व एव खट्वामनारो-हन्तोऽपी'ति । हरश्च—'खट्वामारोहतु मा वा विमार्गप्रस्थायी तु खट्वारूढ उच्यते । विनिन्दितो मार्गो विमार्गः' इति । समूलघातं हन्मि समूलं हन्मी-त्यर्थः । 'निमूलसमूलयोः—' (पा० सू० ३-४-३४) इति णमुल् । मनीषी, सर्वं कालकृतमिति ज्ञातुं शक्तः । अव्यवस्यन् अनिश्चिन्वानः ॥

मया मायाहीनं प्रियमयि विधेयं तव सुते!
कचो विन्देत् तुन्दाद्गतिमयमृते नो मम मृतेः ।
सुदुस्साधे कार्ये बत नियतिगत्या निपतिते
न नीतिं जानीयां तव हितकरीं किं नु करवै ॥ ५७ ॥

तदनु तदीयवचनमवधार्य वैधुर्यविधुतधैर्या देवयानी तदनुभाववेदिनी पुनरपीदमभिदधे ॥

हा हा तात! तवोपघातकथया बेभिद्यते मानसं
सन्नह्यन्ति च हन्त तस्य विरहात् प्राणाः प्रयाणाय मे ।
तत्तस्यापि तवापि जीवनकरी नीतिर्निरीक्ष्या त्वया
साध्यं किं न महानुभाव सुजनैरव्याहतेहैरिह ॥ ५८ ॥

इति पुत्रीगदितपात्रीभूतश्रोत्रयुगलः श्रोत्रियोऽसौ किञ्चिदिव सञ्चिन्तयन् अदसीयमनोरथसम्पत्सम्पादनदत्तचित्तः कचमेवम् अचकथत् ।

---

मयेत्यादि । विधेयं कर्तव्यम् । आवश्यके कृत्यः । मृतेः ऋते मृतिमन्तरेण । 'अन्यारात्—' (पा० सू० २-३-२९) इति पञ्चमी । निपतित इत्यनेन कदाचिदपि अचिन्तितम् एतदिति द्योत्यते । न जानीयाम् ज्ञातुं न शक्नुयाम् । 'शकि लिङ् च' (पा० सू० ३-३-१७२) इति लिङ् । 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' ॥ ५७ ॥

तदन्वित्यादि । वैधुर्यं विधुरता । अनुभावः प्रभावः ॥

हाहेत्यादि । उपघातकथया मरणकथया । बेभिद्यते अत्यर्थं भिन्नं भवति । संनह्यन्ति सन्नाहं कुर्वन्ति ॥

इतीत्यादि । गदितं वचनम् । श्रोत्रियः वेदाध्यायी । 'श्रोत्रियंश्छन्दोऽधीते' (पा० सू० ५-२-८४) इति निपातः । अनेनास्य ईप्सितसिद्धेः कदाचिदपि न प्रतिहतिरिति ध्वन्यते । अचकथत् कथयति स्म । 'कथ वाक्यप्रबन्धे' चुरादिरदन्तः । अग्लोपित्वात् सन्वद्भावाभावः ।

दम्भोज्जृम्भितसम्भृतेदृशवपुस्त्वं जम्भहन्ता न चेत्
स्वान्ते ते मृतजीवनी कच! जवादुद्यातु विद्या तु सा ।
कुक्षेर्दक्षिण! दक्षपक्षमचिराद् भिन्दन् बहिर्निर्गमं
विन्दन् जीवय मां गुरून् प्रति सदा शिष्या हि निष्कैतवाः ॥५९॥

ततस्तु तदानीमेव,

विद्यासक्तः सुवृत्तः सकलसुमनसां संसदा सेवनीयः
सर्वज्ञैकावतंसो द्विजकुलवृषभश्रेष्ठपक्षप्रवर्धी ।
दोषासङ्गी स पौनःपुनिकजननभाग् गीष्पतिक्षेत्रभूत-
स्तुन्दादस्माब्दवृन्दादिव तुहिनकरो मेदुरादाविरासीत् ॥ ६० ॥

---

दम्भेत्यादि । दम्भस्य व्याजस्य । उज्जृम्भितेन वर्धनेन हेतुना । भावे क्तः । सम्भृतम् ईदृशं वपुर्यस्य । उद्यातु उदेतु । दक्षिण! निपुणमते । दक्षपक्षं दक्षिणपक्षम् ॥ ५९ ॥

विद्येत्यादि । विदि बुधे आसक्तः । 'हेमा वित् ज्ञो बोधनश्चेन्दुपुत्रः' इति वराहमिहिरः । विद्यया मृतसञ्जीवन्या सक्तः सम्बद्धश्च । 'षञ्ज सङ्गे' । 'वृत्तं पद्ये चरित्रे त्रिष्वतीतदृढनिस्तले' इत्यमरः । सर्वज्ञो गिरिशः । सर्वज्ञा विद्वांसश्च । तस्य तेषां च एकः मुख्यः अवतंसः । द्विजकुलवृषभः ब्राह्मणवंशस्य राजा । 'नक्षत्रग्रहताराणां वीरुधां चाप्यशेषतः । सोमं राज्येऽदधाद् ब्रह्मा यज्ञानां तपसामपि ॥' इत्यागमः, इति सुबोधिन्याम् । श्रेष्ठपक्षे पूर्वपक्षे । प्रकर्षेण वर्धितुं शीलमस्य । द्विजकुलवृषभस्य भृगोः श्रेष्ठपक्षं दक्षिणपक्षं वर्धितुं छेत्तुं शीलमस्येति च । 'वर्ध छेदनपूरणयोः' । दोषेत्यव्ययं रात्रावित्यर्थः । सङ्गी सङ्गवान् । दोषेष्वसङ्गी च । पौनःपुनिकं पुनःपुनः भवम् । 'कालाट्ठञ्' (पा० सू० ४-३-११) इति ठञ् । अव्ययसमुदायत्वात् ठ्युट्युलौ नेष्टौ । 'अव्ययानां भमात्रे टिलोपः' (वा०) । गीष्पतिक्षेत्रं तारां भूतः प्राप्तः । कथा श्रीहरिवंशे — 'बृहस्पतेः स वै भार्यां तारां नाम यशस्विनीम् । जहार तरसा सर्वानवमत्याङ्गिरःसुतान् ॥' इति । बृहस्पतेः क्षेत्रात् पत्न्या भूत उत्पन्नश्च । 'क्षेत्रं पत्नीशरीरयोः' इत्यमरः । अत्र तृतीयप्रकारः श्लेषः ॥ ६० ॥

विद्यावाप्तिनिरोधबद्धहृदयैरेतैः समेतैः कृतं
दैतेयैर्यदभूत् तदेव नियतं सद्योऽस्य विद्याप्तये ।
लोके यस्तु परार्थमेव तृणवत् प्राणानपि प्रोज्झति
प्रायस्तस्य हि दिष्टमिष्टमधिकं पुष्णाति पुष्टादरम् ॥ ६१ ॥

विद्याविद्योतमानः स तु भुवि पतितं सम्परेतं स्वहेतो-
रेतं प्रेक्ष्य प्रतप्यन् सपदि निजगुरुं भार्गवं निर्गताभम् ।
एतत्प्रोद्दामहार्दस्मृतिगलितधृतिर्विद्यया हृद्यया तं
जीवन्या जीवयित्वा समनमदमलो जीवजन्मा सुजन्मा ॥

शङ्कामङ्कूरितां प्राङ् निजगुरुहृदये जीवजो नेनिजानो
व्याजोनां वाचमेनां मधुरमभिदधे तात जाने तदेतत् ।
विद्यामाध्यातु यस्य श्रुतिपुटकलशी साधु येनाभ्यपूरि
द्रुह्येत् तस्मै स शिष्यो यदि बत गुरवे यातना हन्त भुङ्क्ते ॥

---

विद्येत्यादि । समेतैः सम्भूयावस्थितैः । प्रोज्झति त्यजति । 'उज्झ उत्सर्जने' । अर्थान्तरन्यासोऽलङ्कारः ॥ ६१ ॥

विद्येत्यादि । स्वहेतोः सम्परेतं मृतम् । एतत् तापस्य हेतुः । प्रतप्यन् तप 'सन्तापे' श्यन् । निर्गताभमिति मृतस्वभावोक्तिः । हार्दं स्नेहः । गलित-धृतिरित्यनेन एवम्भूतावस्थं तं द्रष्टुमक्षमतया प्रत्युज्जीवने त्वरातिशयो व्यज्यते । हृद्यया हृदयं यातीति हृद्या । 'आतोऽनुपसर्गे कः' (पा० सू० ३-२-३) इति कः । प्रयोगक्षमताप्राप्तये इत्यर्थः । सुजन्मा सुकृती । एवम्भूतो गुरुनिष्क्रयः कस्यान्यस्य स्यादिति भावः ॥ ६२ ॥

शङ्कामित्यादि । नेनिजानः शोधयन् । 'णिजिर् शौचपोषणयोः' शानच् । श्लुः । प्रागङ्कूरितां शङ्कां नेनिजानः, अयमर्थः—विद्यां वराम् अधिजिगांसुः इत्युक्त्यनन्तरं बहुधा विचार्येत्यत्र विचारणानुभावेन मनाक् प्रतीता दम्भोज्जृम्भि-तेत्यत्र स्पष्टतामुपगता या स्वात्मनि सञ्जीवनीविद्याजिघृक्षुत्वशङ्का सेयमधिगताया अस्या विद्याया वैफल्यदायिनी स्यादिति तामपनेतुमिति । तत् प्रसिद्धम् । जाने श्रुतिस्मृतिपर्यालोचनया स्फुटतरमवगच्छामि । द्रुह्येद् अप्रियाचरणादिना पीडयेत् ।

अनन्तरम् आत्माभिलापपूरणायैव परित्यक्तप्राणितं निजपितरं निरीक्ष्य सान्तापिनसमाक्रान्तस्वान्ता देवयानी तदानीमेव जातजीवेन तेन जीवजातेन पुनः प्रत्युज्जीविते‌ऽस्मिन् प्रमदविकचवदनवारिजा प्रगुण-हृदये तस्मिन् परं प्रत्ययं विदधाना हर्षव्याकृष्टहृदयमेनं व्याचष्ट ॥

आलम्बनं सुमनसां गुणभासुराणां
दूरान्निराकृततमा रुचिरायतात्मा ।
सम्भावितोऽखिलजनैः शिरसाधुना तु
देवेन्द्रदेशिकसुतासि कच त्वमाप्तः ॥ ६४ ॥

---

श्रुतिपुटमेव कलशी कलशः । अभ्यपूरि अभिपूरिता । गुरवे 'क्रुधद्रुह–' (पा० सू० १-४-३७) इति सम्प्रदानसंज्ञा ॥ ६३ ॥

अनन्तरमित्यादि । प्राणितं प्राणनम् । सान्तापिनं समन्तात् तापः । 'अभिविधौ भाव इनुण्' (पा० सू० ३-३-४४) इति इनुण् । 'अणिनुणः' (पा० सू० ५-४-१५) इति स्वार्थेऽण् । जीवजातेन बृहस्पतिपुत्रेण । प्रगुणं ऋजु । परं प्रत्ययं विश्वासम् । परं प्रत्ययमिति प्रत्ययः सर्वत्र पर एव विधीयते इत्यपि स्फुरति । व्याचष्ट उक्तवान् । 'चक्षिङ् व्यक्तायां वाचि' । अनुदात्तेत् । अस्माल्लङ् । प्रायेण आङ्पूर्वः । 'स्कोः संयोगाद्योः–' (पा०सू० ८-२-२९) इति कलोपः ॥

आलम्बनम् इत्यादि । देवेन्द्रदेशिकसुत कच त्वम् अधुना तु आप्तोऽसि इत्यन्वयः । इदानीं विश्वस्तो जात इत्यर्थः । देवेन्द्रदेशिकसुतेत्यनेन विश्वास-सम्भावना द्योत्यते । असि त्वं कचत्वं केशत्वमाप्त इति च ध्वन्यते । अत्र असीति युष्मदर्थेऽव्ययम् । गुणैः विनयादिभिः । भासुराणां 'भञ्जभास–' (पा०सू० ३-२-१६१) इति घुरच् । गुणे सूले च । मालीभूतानामिति यावत् । सुमनसां देवानां, पुष्पाणां च । तमोऽज्ञानं ध्वान्तं च । आत्मा देहः स्वरूपं च । शिरसा सम्भावितः शिरःकम्पेनाभिनन्दित इत्यर्थः । अन्यत्र शिरसा धृतः इति । अत्र प्रकरणवशात् कचस्य विश्वस्ततावाप्तिलक्षणेऽर्थे नियन्त्रिते यत् केशत्वावाप्तिलक्षणस्यार्थस्य प्रतिपादनं तत्र नाभिधा, नियमनात् तस्याः । नापि लक्षणा, मुख्यार्थबाधाद्यभावात् । अपि तु शब्दशक्तिमूलो वस्तुध्वनिः ॥

ततः प्रतिपन्नप्राणितः स भृगुपतिः सत्वरं समुत्थाय सुरासेवना-दियमापद् आपतितेति तां प्रति विरक्तचित्तः स्वयमन्तरचिन्तयत् ।

कृत्याक्रान्त इव स्वरान् विकुरुते जल्पत्यनल्पं वृथा
कृत्याकृत्यविचारवीतहृदयः कष्टं सदा चेष्टते ।
किञ्चापत्तिमतर्कितां च लभते माद्यन्नयं मद्यपः
सर्वावद्यदमद्य तावदपरं किं विद्यते मद्यतः ॥ ६५ ॥

शस्त्रं वस्त्रमपीह नो गणयति स्रस्तं भृशं निस्त्रपः
ष्ठीव्यत्याशु पतत्यपष्ठुरवनौ जाहस्यमानो जनैः ।
कुप्यन्नप्यकुतो हसन् बत रुदन् बम्भ्रम्यते चोद्भ्रमन्
किं किं वा न करोति मत्तहृदयो हा हा स हालापिबः ॥ ६६ ॥

---

तत इत्यादि । प्राणितं प्राणनम् । भावे क्तः । 'अन प्राणने' ॥

कृत्येत्यादि । क्रियते परमारणमनयेति कृत्या देवताविशेषः । अत्र लक्षणया पिशाचादिः । स्वरान् विकुरुते निर्वर्तयतीत्यर्थः । 'वेः शब्दकर्मणः' (पा० सू० १-३-३४) इति तङ् । कर्मशब्द इह कारकाभिधायी । आपत्तिम् आपदम् । विद्यते अस्ति । 'विद सत्तायाम्' । मदसाधनं मद्यम् । 'कृत्यल्युटः–' (पा० सू० ३-३-११३) इति बहुलग्रहणाद् 'गदमद–' (पा०सू० ३-१-१००) इति करणे यत् । अत्र स्वभावोक्तिः अलङ्कारः । 'सूक्ष्मवस्तुस्वभावस्य यथावद्वर्णनं स्वभावोक्तिः' । उत्तरत्रापि सैव ॥ ६५ ॥

शस्त्रमित्यादि । ष्ठीव्यति इतस्ततः ष्ठीवनं करोति । 'ष्ठिवु निरसने' । 'सुब्धातुष्ठिवुष्वष्कतीनां सत्वप्रतिषेधो वक्तव्यः' (वा) इति सत्वाभावः । 'ष्ठिवुक्लमुचमां शिति' (पा० सू० ७-३-७५) इति दीर्घः । असम्यक् तिष्ठतीति अपष्ठुः आचारभ्रष्टः । 'अपदुस्सुषु स्थः' (उ० सू०) इत्यौणादिकः उः । सुषमादित्वात् षत्वम् । जाहस्यमानः पौनःपुन्येन अत्यर्थं परिहस्यमानः । अकुतः अकस्मात् कोपादिहेतौ असत्यपीत्यर्थः । बम्भ्रम्यते पुनःपुनः भ्रमति । हालापिबः मद्यपः । 'पाघ्राध्माधेड्–' (पा० सू० ३-१-१३७) इति शः । 'पाघ्राध्मास्था–' (पा० सू० ७-३-७८) इति पिबादेशश्च ॥

ततस्तत्तादृशः तस्यास्तावद् अपातव्यता विधातव्येति विपश्चिदयं विनिश्चित्य उच्चैस्तरां गिरमुदाजहार ।

हे लोकत्रयवासिनोऽखिलजना! वाणी ममाकर्ण्यतां
वित्तभ्रंशकरीं विपत्तिजननीं कीर्तिक्षयापादिनीम् ।
यो वा कोऽपि सुरां पिबेत् परमतः स ब्रह्महत्याफलं
प्राग्जन्मार्जितपुण्यपूरविहतिं पातित्यमप्याप्नुयात् ॥ ६७ ॥

इत्थं भृगुपतेः शापादपेया समजायत ।
ततः प्रभृति लोकेऽस्मिन् वारुणी दोषकारिणी ॥ ६८ ॥

एवमवसितेषु शनैरेषु नियमितचरेषु वत्सरेषु दनुजगुरुहृदयगह्वराधिवासिन्यां मृतसञ्जीवन्यामप्यधिगतायाम् अधिकमोदाविष्टमनाः त्रिविष्टपं प्रति प्रतिष्ठासुरसौ जीवसूनुः, हरिरिव भार्गवीहृदयहारी, मधुकर इव सुमनस्स(ङ्ग ? ङ्क)सञ्जताभिलाषः, सविनयं निजदेशिकोपशल्यमुपगम्य पदारविन्दयोरभिवन्द्य गरिष्ठादरम् अवतिष्ठते स्म ॥

---

तत इत्यादि । विधातव्या अवश्यं विधेया । 'कृत्याश्च' (पा० सू० ३-३-१७१) इति आवश्यके कृत्यः ॥

हे लोकेत्यादि । ब्रह्महत्याफलं नरकविशेषम् । इह पातित्यमपि । पातित्यं वर्णबहिष्कृतत्वम् ॥ ६७ ॥

इत्थमित्यादि । ततः प्रभृति अपेया पातुमनर्हा । वारुणी सुरा ॥ ६८ ॥

एवमित्यादि । नियमितचरेषु पूर्वं नियमितेषु । वत्स्यामि वत्सरसहस्रकमिति । 'भूतपूर्वे चरट्' (पा० सू० ५-३-५३) इति चरट् । गह्वरेति अत्यन्तगुह्यत्वं प्रकाशितम् । तेन च दुर्लभत्वम् । प्रतिष्ठासुः प्रस्थातुमिच्छुः । भार्गवी श्रीः, देवयानी च । सुमनसः पुष्पाणि, देवाश्च । उपशल्यम् समीपम् । गरिष्ठः अतिशयेन गुरुः आदरो यत्रेति क्रियाविशेषणम् ॥

मुनिः काव्याभिख्यः सुचरितपयोधिस्तमवदत्
सुसर्गस्साधीयोध्वनिविलसितो दुर्गहृदयः ।
सदा ध्येयो लिप्सोरिह हि भुवने सत्प्रमदतां
सतां श्लाघ्यः शश्वत् सरसमुपदेष्टापि च हितम् ॥ ६९ ॥

सत्सेव्योत्सेकहीनाशय ननु भवता यत्नवेद्या हि विद्या
मत्सेवात्युत्सुकात्मन् कच! न निपठिता वत्स का मत्सकाशात् ।
वर्षा हर्षातिभारात् क्षण इव च गताः संश्रुतास्ते समस्ताः
तत्ते चित्ते यियासा यदि व्रज व्रजताद् भद्रमत्यन्तभद्रम् ॥७०॥

---

मुनिरित्यादि । काव्य इत्यभिख्या नाम यस्य, काव्यस्य अभिख्येव अभिख्या शोभा यस्य । काव्यसदृश इति यावत् । सुचरितानां सुकृतानाम् । शोभनानां चरितानां कथानां च । सुसर्गः शोभनः स्वभावो निश्चयो वा यस्य । अध्यायश्च । 'सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु' इत्यमरः । साधीयसां साधुतराणाम् । अध्वनि मार्गे । साधीयोभिः ध्वनिभिश्च । दुर्गं दुर्ज्ञानं हृदयं मनोऽभिप्रायश्च यस्य । सती प्रमदा यस्य स सत्प्रमदः, तस्य भावस्तत्ता, ताम् । लिप्सोः इच्छोः । सदा ध्येयः ध्यातुमर्हः । 'तुष्टे यस्मिन् समस्तासुरनिकरगुरौ नीतिमार्गप्रवीणे लोकोऽयं सत्कलत्राद्यखिलसुखसमृद्धिं प्रयाति क्षणेन । रुष्टे तत्प्रत्यवायं व्रजति' इत्युक्तत्वात् । सत्प्रमदः अतिशयित आनन्दश्च । सदा अध्येयः पठितव्यः । सतां नक्षत्राणां, निर्धारणे षष्ठी । सतां साधुभिश्च । सरसं वाक्पारुष्यादिकं विना । हितम् उपदेष्टा 'वेदः पुराणं काव्यं च प्रभुर्मित्रं प्रियेव च । बोधयन्ती'त्युक्तत्वात् कान्तेव सरसतापादनेन अभिमुखीकृत्य रामादिवद् वर्तितव्यं न रावणादिवदित्यादिहितोपदेशविधायि च ॥ ६९ ॥

सत्सेव्येत्यादि । उत्सेकेन गर्वेण हीन आशयो यस्य । का न निपठिता सर्वापि पठितैव । संश्रुताः प्रतिज्ञाताः सहस्रं वत्सराः । यियासा गन्तुमिच्छा । व्रज गच्छ । 'ध्रज व्रज गतौ' । व्रजतात् प्राप्नुहि । अत्यन्तभद्रम् अतिविपुलम् *'भद्रोरुविपुलं पीनम्' इत्यमरः ॥ ७० ॥

---

* 'वड्रोरु' इति मुद्रितामरकोशपाठः ।

इति वावद्यमानाशिषम् एनम् अभिवाद्य अनुमतिमासाद्य यथेच्छं विच्छायन्नयं वियोगभीतिविच्छायितवदनवारिजेन अच्छापत्येनाच्छपत्य कलितव्यथं कथयाञ्चक्रे ॥

गुरुजननवतंस! प्रोद्यतः क्वाद्य गन्तुं
गुरुजनसन्निधान्मां नष्टभाग्यां विधाय ।
गुरुतरकरुणाब्धे! साधु विस्मृत्य ताः प्राग्
गुरुसहकृतलीला हन्त पान्थोपमानः ॥ ७१ ॥

तत्पूर्वदृष्टास्विव चेष्टते भवानस्मास्वनेकाब्दसहोषितास्वपि ।
सख्यं भवेत् साप्तपदीनमित्यसौ दाक्षीसुतोक्तिर्वितथीकृता कथम् ॥

---

इतीत्यादि । वावद्यमानाशिषं पौनःपुन्येनोच्यमानाशिषम् । विच्छायन् गच्छन् । 'विच्छ गतौ' । 'गुपूधूप–' (पा० सू० ३-१-२८) इत्यायः । विच्छायितं विगतशोभं कृतम् । अच्छापत्येन शुक्रपुत्र्या । अच्छपत्य अभिगम्य । अच्छेत्याभिमुख्येऽव्ययम् । 'अच्छ गत्यर्थ--' (पा० सू० १-४-६९) इति गतित्वात् 'कुगति–' (पा० सू० २-२-१८) इति समासे 'समासेऽनञ्–' (पा० सू० ७-१-३७) इति ल्यप् ॥

गुरुजननेत्यादि । जन्यतेऽनेन उत्तरोत्तरम् इति जननं कुलम् । नष्टभाग्यां विधाय गमनोद्यमनसमय एव मम नष्टभाग्यत्वं विनिश्चितमित्यर्थः । गुर्व्यश्चामूः सहकृताश्च लीलाश्चेति विशेषणसमासः । पान्थोपमानः पान्थसदृशः । 'पन्थो ण नित्यम्' (पा० सू० ५-१-७६) इति णः ॥ ७१ ॥

तत्पूर्व इत्यादि । तत् पूर्वं यथा तथा दृष्टासु प्रथमदृष्टासु इत्यर्थः । असौ सर्वैरपि प्रमाणीकृता । दाक्षीसुतः पाणिनिः । 'सालातुरीयको दाक्षीसुतः पाणिनिः' इति वैजयन्ती । अस्योक्तिः 'साप्तपदीनं सख्यम्' (पा० सू० ५-२-२२) इति । अस्यार्थः—सप्तभिः पदन्यासैः वचनैर्वा प्राप्यं साप्तपदीनम् इति ॥

नारीणां हि धृतव्रतस्य वरणं नो साम्प्रतं स्यादिति
प्रेमार्द्रापि च या प्रतीक्षितवती कान्त! व्रतान्तं तव ।
एतां मामधुना यियासति यदि त्यक्त्वा प्रियत्वां भवान्
निष्कारुण्य! करोमि किं ननु पुरः प्राणाः प्रयास्यन्ति मे ॥

अलमलमधुना ते द्वापरेणावरेण
स्मरशरविवशां मामुद्वहोद्वेलरागाम् ।
वचनमिति कचोऽस्याः शुश्रुवान् प्रश्रितात्मा
दनुजगुरुसुतां तामेवमूचे सुतान्ताम् ॥ ७४ ॥

भृगुपरिवृढवंशप्रोदितोदारमुक्ता-
मणिरयिं रमणि! त्वं काचकल्पः कचोऽहम् ।
कथमिव भवती तद् भावयेताबले माम्
असदृशमिह निम्बं गोस्तनीवल्लरीव ॥ ७५ ॥

---

नारीणामित्यादि । साम्प्रतं युक्तम् । 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः । अधुना वरणयोग्ये काले । यियासति यातुमिच्छति । प्रियत्वां प्रियः त्वं यस्याः सा प्रियत्वम् । ताम् ॥ ७३ ॥

अलमित्यादि । द्वापरेण सन्देहेन । 'वारणार्थयोगे तृतीया वक्तव्या' इति तृतीया । अवरेण अधमेन । शुश्रुवान् प्रश्रितात्मेत्यनेन 'गुरुवद् गुरुपुत्रेषु' इत्युक्तमनुस्मारयति । 'भाषायां सद--' (पा० सू० ३-२-१०८) इति क्वसुः । सुतान्तां सुतरां तान्ताम् ॥ ७४ ॥

भृग्वित्यादि । वंशशब्दः श्लिष्टः । काचकल्पः प्रायेण काचतुल्यः । 'ईषदसमाप्तौ--' (पा० सू० ५-३-६७) इति कल्पप् । सूत्रेण कच्यते मणिवद् बध्यते इति काचः मण्याभासः । 'कचि काचि दीप्तिबन्धनयोः' । कर्मणि घञ् । भावयेत प्राप्नुयात् । 'भू प्राप्तौ' विकल्पितणिच्कः । गोस्तनीवल्लरी द्राक्षालता । 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च' इत्यमरः । अत्र भृगुपरिवृढवंश एव वंशः, तस्मात् प्रोदिता मुक्तामणिः इति श्लिष्टशब्दनिबन्धनं केवलरूपं परम्परितमलङ्कारः । वंशादपि मुक्तोत्पत्तिप्रसिद्धेः । तस्योपमया सह संसृष्टिः ॥ ७५ ॥

मलीमसाङ्गो नियमेन नित्यं निष्कामधीरध्ययनैकगृध्नुः ।
क्वाहं क्व च त्वं कमनीयरूपा कामातुरा काङ्क्षितभूरिभोगा ॥ ७६ ॥

साथ गिरं दुर्विषहां श्रुत्वा सोढुमनीशा मदनातङ्कम् ।
चम्पकमाला मृदुकम्राङ्गी वाचमवोचत् पुनरप्येवम् ॥ ७७ ॥

अलमलममलात्मन्नीदृशा वाक्यभङ्ग्या
तव तु विमुखतेयं नोचिता मादृशीषु ।
न खलु जलधरस्य स्वैकनाथासु लोके
क्वचिदपि विमुखत्वं दृश्यते चातकीषु ॥ ७८ ॥

अस्यन्दतास्याम्बुरुहात् पुरास्रात् तवाङ्ग! सार्द्रा मकरन्दधारा ।
जागल्यते सम्प्रति हन्त तीव्रा सन्तप्तताम्रद्रवधोरणीयम् ॥ ७९ ॥

न चेहानुचितं किंचिन्महतां महिताशय! ।
प्रभवो हि पयःसिन्धुः पीयूषस्य विषस्य च ॥ ८० ॥

---

मलीमसेत्यादि । गृध्नुः गर्धनशीलः । 'गृधु अभिकाङ्क्षायाम्' । 'त्रसिगृधि--' (पा० सू० ३-२-१४०) इति क्नुः । क्वेति अधिकरणाक्षेपे ॥ ७६ ॥

साथेत्यादि । चम्पकमालावत् मृदु कम्रं च अङ्गं यस्याः सा । 'नमिकम्पि--' (पा० सू० ३-२-१६७) इति रः । वृत्तनामाङ्कितोऽयं श्लोकः । 'चम्पकमाला भतया गः स्यात्' ॥ ७७ ॥

अलमित्यादि । स्वैकनाथासु स्वम् आत्मा एको नाथो यासु तासु । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरः । अत्र प्रतिवस्तूपमालङ्कारः । विमुखतालक्षणस्य धर्मस्य काव्यसमयात् पर्यायान्तरेण पृथङ्निर्देशात् । 'वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तूपमा' ॥ ७८ ॥

अस्यन्दतेत्यादि । प्रस्रुता । जागल्यते पुनः पुनः गलति अविच्छिन्नतया प्रसरतीत्यर्थः । आस्याम्बुरुहादित्युपमा । मकरन्दधारा ताम्रद्रवधोरणीति च अतिशयोक्तिः । धोरणी प्रवाहः ॥ ७९ ॥

न चेत्यादि । प्रभव उत्पत्तिस्थानम् । अर्थान्तरन्यासोऽलङ्कारः ॥ ८० ॥

ततः तस्या ग्रहिलाया महिलाया विवाहस्पृहाभिमाम् अखण्डां चिखण्डिषन्नेष तामेवमभाषत ।

कार्याकार्यविवेकधुर्यहृदये! शिष्यस्तु नैवं त्वया-
भाष्योऽहं भृगुसम्भवे! सविनयं सेव्यासि मे काव्यवत् ।
किं चार्ये त्वमहं च सुन्दरि! कवेः कायादजायावहि
प्राप्तुं तद्भवतीं कथं नु भगिनीं पापेतरः पारये ॥ ८१ ॥

तदनु सल्लापैरेभिः उल्लापयमानेनानेन निगदितां निजाशातन्तुकर्तरीं वैखरीमेनाम् असहमाना सहसोत्पन्नरभसभरा पूर्ववदेव अच्छनयनमूर्च्छालरागा सेयमच्छतनया सोत्प्राशमेनं प्रावोचत ।

---

तत इत्यादि । ग्रहोऽस्या अस्तीति ग्रहिला । ग्रह आग्रहः । पिच्छादित्वादिलच् । चिखण्डिषन् खण्डयितुमिच्छन् । 'खड खडि कडि भेदने' चौरादिकः । सन्नन्ताच्छता । अयं विकल्पितणिच्कः । यथोक्तं माधवेन—'यत्र लिङ्गं वचनं वास्ति तत्र विकल्पः' इति । लिङ्गं तु 'चिति स्मृत्याम्' इत्यत्रोक्तं तेनैव— 'चिन्त स्मृत्यामिति सानुषङ्ग एव पठितव्ये इदित्पाठान्नलोपाभावार्थादस्य णिच् पाक्षिकः । नित्ये हि णिचि तस्य स्थानिवद्भावाद् व्यवधानात् न क्वापि कित्परत्वम् इति चिन्त इत्यादौ नलोपाप्रसङ्गः । तेन चिन्तति चिचिन्त चिन्तितेत्याद्यपि भवति । एवम् अन्यत्रापि इदित्त्वं णिज्विकल्पार्थं द्रष्टव्यम्' इति॥

कार्येत्यादि । कार्याकार्यविवेकधुर्यं हृदयं यस्याः सा । 'धुरो यड्ढकौ' (पा० सू० ४-४-७७) इति यत् । अजायावहि जातौ । 'चार्थयोगे पुरुषाणां परो भवति' इति भृङ्गारे । 'त्वं स च भवथः । स त्वं चाहं च भवामः । चार्थाभावे तु प्रथमपुरुष एव । स त्वं वा अहं वा भवेयु'रिति । 'त्वमहं च प्राणदानादमुष्या व्यसनार्णवादुत्तारितौ स्वः' इति प्रयोगश्च । पारये शक्तो भवामि । 'पार तीर कर्मसमाप्तौ' ॥ ८१ ॥

तदन्वित्यादि । सल्लापैरुल्लापयमानेन वञ्चयता । 'लियः सम्मानन--' (पा० सू० १-३-७०) इत्यत्र चकारात् प्रलम्भने तङ् । कर्तरी प्रवश्चीकृतः सुवर्णादेः कर्तनोपायः । नापितकेशकर्तरिका वा । 'कृती छेदने' बाहुल्कादरः ।

अलीकोपाश्रितो नित्यं कृष्णात्मा च स्वभावतः ।
अन्ते च कुटिलोऽत्यन्तमुचिता कचताद्य ते ॥ ८२ ॥

भूयोरोषकषायिता निजतृषाभङ्गादनङ्गातुरा
भूयोऽसावशपच्च तं शठ! मया मायाव्यजेजीव्यथाः ।
हा कष्टं कच! नीच! भस्मनिहुतं जातं तदद्याखिलं
विद्याप्यूषरसस्यवत् तव परं निष्पद्यतां निष्फला ॥ ८३ ॥

---

गौरादित्वाद् ङीष् । वैखरीं सरस्वतीम् । पूर्ववदेवेति । रागस्य वस्तुतो भेदेऽपि एकतयाध्यवसितत्वाद् एकत्वम् अविरुद्धम् । रागः अनुरागः, रक्तिमा च । मूर्च्छालः मूर्च्छितः । सोत्प्राशं सोपहासम् ॥

अलीकेत्यादि । अद्य ते कचता उचिता जातेति शेषः । पूर्वं तैलपायिकादिवद् रूढ्या कचशब्दाभिधेयस्य ते शिरोरुहात्यन्तसादृश्याद् अद्य कचशब्दवाच्यत्वमुचितं जातम् इति भावः । अलीकं ललाटम्, अनृतं च । अल्यते भूष्यते इत्यलीकं ललाटम् । अल्यते वार्यते इत्यलीकम् असत्यं च । 'अलीकादयश्च' (उ० ४७३) इत्यौणादिको निपातः । कृष्णः कृष्णवर्णः, मलिनश्च । आत्मा स्वरूपं, मनश्च । अन्ते अग्रे, फलोत्पत्तिकाले च । कुटिलः वक्रस्वरूपः, वक्रहृदयश्च । अत्र श्लेषोऽलङ्कारः ॥ ८२ ॥

भूय इत्यादि । भूयसा रोषेण कषायिता । तृषा स्पृहा । स्वकार्यैकपरः शठः । मायावी मायावान् । 'अस्मायामेधा—' (पा० सू० ५-२-१२१) इति विनिः । अजेजीव्यथाः बहुकृत्वः जीवनं प्रापितोऽसि । 'जीव प्राणधारणे' इत्यस्माद् यङ्लुकि णिचि जेजीवि इति स्थिते कर्मणि लङि यकि णिलोपे रूपम् । भस्मनिहुतं निष्फलम् इत्यर्थः । 'क्षेपे' (पा० सू० २-१-४७) इति समासः । क्षेपो निन्दा । 'तत्पुरुषे कृति—' (पा० सू० ६-३-१४) इत्यलुक् । ऊषः क्षारमृत्तिका, सोऽस्मिन्नस्तीति ऊषरः । 'ऊषसुषि—' (पा० सू० ५-२-१०७) इति मत्वर्थीयो रः । परम् अत्यर्थम् । अत्र देवयान्या भृशार्थे विवक्षितेऽपि केवलार्थस्यापि वाचकः परशब्दोऽत्र दैवादापतितः । तेन तस्यैव नैष्फल्यं न तु तच्छिष्येषु ॥ ८३ ॥

शप्तोऽयं सरतप्तया मुनिरहं धर्मैकतानस्त्वया
स्वच्छन्दामुपयच्छतां न भवतीं विप्रान्ववायोद्भवः ।
अप्यध्याप्य कमप्यहं सफलये विद्यामिहाद्यामिमां
सद्यस्तामिदमुक्तवान् मुदितवान् स द्यां समापद्यत ॥ ८४ ॥

उपान्तमायान्तमहेर्निहन्ता
कचं तमालोक्य रुचा ज्वलन्तम् ।
गृहीतविद्यं सह देवसङ्घैः
प्रमोदभारं बिभराम्बभूव ॥ ८५ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
प्रथमः स्तवकः ।

---

शप्त इत्यादि । एकतानः अनन्यवृत्तिः । स्वच्छन्दां स्वतन्त्राम् । 'स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः' इत्यमरः । उपयच्छताम् उपयमनं कुरुताम् । 'उपाद्यमः—' (पा० सू० १-३-५६) इति तङ् । अध्याप्य पाठयित्वा । 'विभाषापः' (पा० सू० ६-४-५७) इत्यापः परस्य णेर्ल्यपि विधीयमानोऽयादेशो न भवति । अस्याब्रूपस्य लाक्षणिकत्वादिति माधवः । सफलये सफलां करोमि । 'तत्करोति—' (ग० सू०) इति णिच् । मुदितवान् प्रीतः । 'निष्ठा' (पा० सू० ३-२-१०२) इति कर्तरि क्तवतुः । 'इष्णुच्क्तवतु-विच्तृन्क्विप्करप्षाकन्ल्युणिन्यचः । उकाराणुक(ञष्टक् ? ञ्कञ्टक्) टाः सकास्सर्वेऽपि कर्तरि ॥' इति कारकसङ्ग्रहे ॥ ८४ ॥

उपान्तमित्यादि । अहेः वृत्रस्य । 'सर्पे वृत्रासुरेऽप्यहिः' इति वैजयन्ती । बिभराम्बभूव बभार । लिटि 'भीह्रीभृहुवां' (पा० सू० ३-१-३९) इत्याम्प्रत्ययः श्लुवद्भावश्च । 'श्लौ' (पा० सू० ६-१-१०) इति द्विर्वचनम् ॥ ८५ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य टिप्पणे कृष्णीये
प्रथमः स्तवकः ।

## द्वितीयः स्तबकः ।

आयाते यत्नलभ्यां गुरुतरतपसा दीव्यतः काव्यतोऽस्मा-
दाद्यां विद्यां गृहीत्वा विकसितवदनाम्भोरुहे जीवसूनौ ।
तोषादध्यैषतैनां सपदि सुमनसस्सूरतात् सूरितोऽस्मा-
देते सम्भूय भूयः प्रमदपरवशं वासवं वाचमूचुः ॥ १ ॥

दिष्ट्यायं समुपागतो गुरुसुतः पुष्टानुभावोदयो
विद्यामाकलयन्निमामसुलभां तदेव भाग्याम्बुधे!
संवर्म्याभ्यभिषेणयारिपटलीपाटूपटाटोपभाक्
तत्तत्कालकृतान्यनूनफलतां कर्माणि निर्मान्ति हि ॥ २ ॥

---

अथ कचे समधिगतमृतसञ्जीवनीविद्ये समागते देवानां प्रवृत्तिमाह— **आयात** इत्यादि । गुरुतरतपसा दीव्यतः शोभमानात् । अनेन तत्प्रसादलब्धा सा विद्या फलं प्रति न व्यभिचरतीति प्रकाश्यते । अध्यैषत अधीतवन्तः । इङो गाङभावे रूपम् । सपदीत्यनेन सपत्नविजयौत्सुक्यं प्रकाशितम् । सूरतात् कृपालोः । 'स्याद्दयालुः कारुणिकः कृपालुः सूरतः समाः' इत्यमरः । सम्भूय समुदिताः ॥ १ ॥

**दिष्ट्येत्यादि** । दिष्ट्येत्यानन्दे । अनुभावः प्रभावः । आकलयन् प्राप्नुवन् । संवर्म्य वर्मणा सन्नह्य । अभिषेणय सेनया अभियाहि । उभयत्रापि 'सत्याप–' (पा० सू० ३-१-२५) इति णिच् । पाटूपटः छेदकः । 'अट पट गतौ' । पटेर्ण्यन्तात् पचाद्यचि 'पाटेर्णिलुक् चोक् च अभ्यासस्य' इति पाटूपटः । लुका लुप्तत्वाद् वृद्धेरभावः । 'अभ्यासस्योगागम उपधादीर्घश्च' इति माधवोक्त्या पाटूपटः । अत्र हलादिशेषो न । 'अभ्यासस्यानचि' इत्युक्तेः अत्राचि अभ्यासस्योक्तमन्यत् कार्यं न । तत्तत्कालकृतानि तत्तदुचितकालकृतानि । अनूनं पूर्णं निर्मान्ति कुर्वन्ति ॥ २ ॥

प्रसर इह गिरां सूचिकाविक्रयो
नियतमयमयस्कारवाटे हि नः ।
कुरु नयजलधे वीक्ष्य युक्तं विभो
स्वयममलमते मङ्क्षु युङ्क्ष्वापि नः ॥ ३ ॥

तदनु गर्वायमाणगीर्वाणगणवाणीमवधार्य निभृतमाचार्येण सह विचार्य वृषपर्वपूर्वपूर्वदेववृषाणां समूलकाषं कषणाय सकलसुरवर्गसहितः स्वर्गतो निर्गतो महितदानववाहिनीपरमतानवदानघोरतरनिदाघसमयः स खलु वलवैरी बाणवारवारणपारीणवारवाणवरविराजमानविपुलतरदोरन्तरालः प्रोद्भटवैरिभटपटलीं कण्ठकाण्डखण्डितीं

---

प्रसर इत्यादि । इह उचितज्ञस्य भवतः सन्निधौ । सूचिकाविक्रयः तत्सदृश इति यावत् । अयस्कारवाटे लोहकारवेश्मनि । 'वाटस्तु नरि वेष्टने । मण्डले नगरे सीम्नि भोजने वलये' इति **केशवः** । मङ्क्षु शीघ्रम् । युङ्क्ष्वापि नियुङ्क्ष्वापि । 'अनेकार्था धातवः' इति वदन्त्याचार्याः । तस्माद् युजिरेव नियोगशब्दवाच्यस्य अभिधाने समर्थ इति **त्रिसर्ग्याम्** । 'धातुलीनमुपसर्ग इवार्थम्' इति **माघे** च । अत्र **निदर्शनालङ्कारः** ॥ 'ननततगुरुभिश्चन्द्रिका चतुर्भिः ॥ ३ ॥

**तदन्वित्यादि** । गर्वायमाणाः गर्विताः । लोहितादेः आकृतिगणत्वात् क्यष् । गीर्वाणगणवाणीम् इत्यनेन सर्वेषामपि युयुत्सातिरेको ध्वन्यते । निभृतं गूढम् । वृषपर्वपूर्वा वृषपर्वप्रधानाः । समूलकाषं समूलमित्यर्थः । 'निर्मूलसमूलयोः—' (पा०सू० ३-४-३४)इति णमुल् । 'कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः' इति दण्डकधातुः । दानववाहिन्या एव वाहिन्या नद्याः परमतानवदाने विषये । तानवं कार्श्यम् । निदाघसमयः । अत्र श्लिष्टशब्दपरम्परितम् । बाणवारः शरसमूहः । पारीणः पारं गच्छन् । समर्थ इत्यर्थः । वारवाणः कवचः । पटलीं 'समूहे पटलं न ना' इत्यमरः । कण्ठकाण्डः खण्डितो यस्याः सा कण्ठकाण्डखण्डिती । 'बहुव्रीहेश्चान्तोदात्तात्' (पा०सू० ४-१-५२) इति ङीष् । वस्त्रवर्जितजातिपूर्वक्तमितजातप्रतिपन्नवर्जैः सर्वक्तान्तैर्बहुव्रीहिरवं

वितन्वतीं रक्तकणसिक्तीं ह्रादिनीवदुद्धुराभां ह्रादिनीमुद्धरन् उद्धततराभ्रमुवल्लभशिरोधराधिरूढो युद्धनिरूढिबद्धकक्ष्यैः प्रौढैरमरपरिवृढैः अरिमेजयैः अरिपरिषदरिरिषया अहमहमिकयाभिधावमानैरपिधीयमानपुरोभागः दानवराजराजधानीं समया विराजमानां कामपि काननावनीं सद्यः समासाद्य, अधितदमतिद्योतमाने सरसि रसभरादुभयपाणि व्यत्युक्षमाणाः प्रत्यक्षायमाणाः प्रसवबाणदेवता इव देदीप्यमाना निजवदनपराजितानि वनैकशरणान्यपि भृशतरानुशयेन कुशेशयानि सर्वाणि ततोऽपि निर्वासयितुमिव वनमध्यमध्यासीनाः सर्वजननयनाकर्षिणीः वार्षपर्वणीप्रमुखा वारिजाक्षीरद्राक्षीत् ॥

---

अन्तोदात्तोक्त्या ग्राह्यः इति भोजः । * 'अस्वाङ्गपूर्वपदाद्वा' इत्युक्तेः अत्र स्वाङ्गरूपजातिपूर्वत्वान्नित्यम् । रक्तवर्णसिक्तीं रक्तकणैः किञ्चित् सिक्तां, 'क्तादल्पाख्यायाम्' (पा० सू० ४-१-५१) इति ङीष् । अल्पाख्यायाम् अल्पत्वे द्योत्ये । कृद्ग्रहणपरिभाषया समुदायस्य क्तान्तत्वम् । ह्रादिनी विद्युत् । अन्यत्र कुलिशम् । अभ्रमुवल्लभः ऐरावतः । निरूढिः निर्वहणम् । अरीन् एजयन्ति कम्पयन्तीति अरिमेजयाः । 'एजृ कम्पने' । 'एजेः खश्' (पा०सू० ३-२-२८) । अरिरिषया प्राप्तुमिच्छया । 'ऋ गतिप्रापणयोः' सन् । अहम् अहम् इति यस्यां क्रियायां सा अहमहमिका । 'मयूरव्यंसकादयश्च' (पा०सू० २-१-७२) इति समासः । अभिधावमानैः गच्छद्भिः । 'धावु गतिशुद्ध्योः' स्वरितेत् । अपिधीयमानः आच्छाद्यमानः । दानवराजस्य वृषपर्वणः । राजधानीं समया राजधान्याः समीपे । 'अभितः परितः समया—' (वा०) इति द्वितीया । अधितदं तस्याम् । विभक्त्यर्थेऽव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः' (पा० सू० ५-४-१०७) इति अच् समासान्तः । उभयपाणि उभौ पाणी यस्यामुक्षणक्रियायाम्, उभाभ्यां पाणिभ्यामिति यावत् । उभोभयाभ्याम् अञ्जलिपाणिहस्तदन्तकर्णेभ्य इच् स्यात् क्रियाविशेषणत्वेन । व्यत्युक्षमाणा अन्योन्यमुक्षन्त्यः । प्रत्यक्षायमाणाः प्रत्यक्षीभवन्त्यः 'लोहितादि—' (पा० सू० ३-१-१३) इति भवत्यर्थे क्यष् । देदीप्यमाना

---

* 'स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः' (स० क० ३-४-९२) 'अनाच्छादनजात्यादेर्वा' (स० क० ३-४-९४) ।

रूपं रूपयतस्तासां सुदृशामिदमीदृशम् ।
सानीकस्य मनस्तस्य व्यचनीकस्यत द्रुतम् ॥ ४ ॥
तासामङ्गे तुरासाहो गावो यावदवापतत् ।
तावदेव स्मरस्यापि हृदि तस्याद्भुतास्पदे ॥ ५ ॥

---

अत्यर्थं शोभमानाः । 'दिवु क्रीडे'त्यस्माद् यङन्तात् शानच् । वनम् जलम् । अरण्यमित्यपि स्फुरति । अनुशयो दीर्घद्वेषः । 'अथानुशयो दीर्घद्वेषानुतापयोः' इत्यमरः । कुशेशयानि तामरसानि । 'शयवास—' (पा० सू० ६-३-१८) इत्यलुक् । वृषपर्वणः अपत्यं स्त्री वार्षपर्वणी । अणि 'अन्' (पा०सू०६-४-१६७) इति प्रकृतिभावाट्टिलोपाभावः ॥

रूपमित्यादि । रूपयतः पश्यतः । 'रूपाद् दर्शने—' इति णिच् । यद्वा 'रूप रूपक्रियायाम्' इत्यस्माच्छता । रूपस्य करणं दर्शनं वा रूपक्रिया इति स्वामी । इदमेव ईदृशम् इदमीदृशम् । सानीकस्य युद्धोद्युक्तस्येति यावत् । 'तेन सहेति तुल्य—' (पा० सू० २-२-२८) इति समासः । 'वोपसर्जनस्य' (पा० सू० ६-३-८२) इति सहशब्दस्य सभावः । तुल्ययोगः समानसम्बन्धः । अनेन युद्धोद्यतस्य मनश्चलनायुक्तता प्रकाश्यते । न तु सहार्थवशाद् अनीकस्यापि मनश्चलनं प्रतीयते । ननु तुल्ययोगे समासो विधीयते तत् कथमेवं व्याख्यायते । उच्यते—प्रायिकं तुल्ययोग इति वचनं 'सपूर्वायाः प्रथमाया विभाषा' (पा० सू० ८-१-२६) इति वचनात् । सकर्मकः सलोमक इत्यादिप्रयोगाच्च । अत्र तु विद्यमानत्वमेवार्थः । व्यचनीकस्यत अत्यर्थं विकसितमासीत् । 'कस गतौ' यङ् । 'नीग्वञ्चु—' (पा० सू० ७-४-८४) इति नीक् । यङन्ताल्लङ् ॥

तासामित्यादि । तुरासाहः इन्द्रस्य । गावः नेत्राणि । स्मरस्य गावः इषवः । अपिर्भिन्नक्रमः हृद्यपीति । अत्र समुच्चयोऽलङ्कारः । तुराषाड्गोपतनस्य स्मरगोपतनस्यापि यौगपद्यात् । 'गुणक्रियायौगपद्यं समुच्चयः' । 'गुणानां वैमल्यादीनां यौगपद्येनावस्थानं तथैव च क्रियाणां समुच्चयालङ्कारः' । भिन्नविषयत्वेन एकाधिकरणत्वेन चायमलङ्कारो दृश्यते । अत्र तु भिन्नविषयत्वेन । गोशब्दः श्लिष्टः ॥ ५ ॥

ता मोदभारादमृतं तदा नो
परस्परामेव परं न्यषिञ्चन् ।
किञ्चास्य पञ्चेषुशरातुरस्य
स्मेरेषु नेत्रेष्वपि वृत्रशत्रोः ॥ ६ ॥

अनन्तरं परसन्तापनधुरन्धरोऽपि पुरन्दरोऽसौ सुजातयुवतिजातविलोकनजातमदनजातवेदसा मनसि परं तापमापन्नः तासां तरुणीमणीनां दर्शनसुखं सम्यगनुबुभूषुः अनवलोकितचरपुरुषविशेषविलोकनजन्यसम्भ्रमादिमा विधूतसुखविहरणा नियतमपसरेयुरिति तूर्णमात्मानम् ऊर्णुनूषुः पञ्चशरशरपातवञ्चनायेव पवनभावमभावयत । तदनु तदानीमपि सहायसम्पदेव समधिकमेधमानेन मदनदहनेन वितायमानतापः सर्वाङ्गीणरमणीयरूपपीयूषयूषसमास्वादनोत्सवसमुत्सुकमतिः आसां वासांसि तीरश्रितानि मिश्रितानि व्यतानीत् ॥

---

ता इत्यादि । अमृतं जलं, पीयूषं च । परस्पराम् अन्योन्यम् । 'कर्मव्यतीहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्' (वा०) 'समासवच्च बहुलम्' (वा०) असमासवद्भावे पूर्वपदस्य प्रथमैकवचनम् । 'स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्यः' (वा०) । परस्परां परस्परम् इति वा । न्यषिञ्चन् सिक्तवत्यः 'षिच क्षरणे' । 'शे मुचादीनाम्' (पा० सू० ७-१-५९) इति नुम् । अत्र तृतीयो विशेषोऽलङ्कारः । परस्परामृतसेकेन असम्भाव्यस्य वृत्रशत्रुनेत्रामृतसेकस्यापि करणात् । 'अनाधारमाधेयकम् अनेकगोचरम् अशक्यवस्त्वन्तरकरणं च विशेषः' । तस्य अमृतमिति श्लेषानुग्राहकः ॥ ६ ॥

अनन्तरमित्यादि । परसन्तापनधुरन्धर इति । 'संज्ञायां भृतॄवृजि—' (पा० सू० ३-२-४६) इति संज्ञायां खजुक्तोऽपि 'कृत्यल्युट—' (पा० सू० ३-३-११३) इति बहुलग्रहणाद् अनाम्न्यपि खच् । 'वाचंयम—' (पा० सू० ६-३-६९) इत्यत्र चकारादमागमश्च । सुजातं सुन्दरं युवतिजातं स्त्रीसमूहं तस्य विलोकनाज्जातेन कामाग्निना । अनुबुभूषुः अनुभवितुमिच्छुः । अनवलो-

सहसापहृते ताभिः स्वस्य नेत्रसहस्रके ।
तासां नेत्रसहस्रं यदहृतोचितमेव तत् ॥ ७ ॥

श्रेणीकृतानि मरुता वसनानि वेगा-
देणीदृशः समवलोक्य ससम्भ्रमास्ताः ।
श्रोणीभरेण विपुलेन जलात् कथञ्चि-
न्नाणीयसा कुचभरेण च तीरमीयुः ॥ ८ ॥

त्यक्त्वा मरुत्त्वां स ततो मरुत्वान् यथावदैक्षिष्ट तिरस्कृतात्मा ।
कुमारिकास्ता नयनैर्वहद्भिः भूयिष्ठतामप्यनिमेषतां च ॥ ९ ॥

---

कितचरः पूर्वमनवलोकितः । जन्यो जातः । 'भव्यगेय--' (पा० सू० ३-४-६८) इत्यादिना कर्तरि निपातः । ऊर्णुनूषुः छादयितुम् इच्छुः । 'ऊर्णुञ् छादने' । सनन्तादुः । अभावयत प्राप्तवान् । वञ्चनायेवेति फलोत्प्रेक्षा । तदन्वित्यादि । एधमानेन वर्धमानेन सर्वाङ्गीणं सर्वाङ्गं व्याप्नुवत् । यूषं पेयविशेषः । (मूज्योर्लोपश्च इत्यौणादिक ऊषनूप्रत्ययः?) । अन्त्यलोपश्च । उत्सूते हर्षम् इत्युत्सवः । तीरं श्रितानि तीरश्रितानि । 'द्वितीया श्रित–' (पा०सू० २-१-२४) इति समासः । मिश्रितानि सङ्कीर्णानि । सहायसम्पदेति हेतूत्प्रेक्षा ॥

सहसेत्यादि । नेत्राणि नयनानि, वस्त्राणि च । तेषामेकत्वाध्यवसायाद् उचितमेतदिति वाक्यार्थोपपत्तिः ॥ ७ ॥

श्रेणीत्यादि । अश्रेणयः श्रेणयः कृतानि श्रेणीकृतानि । 'श्रेण्यादयः कृतादिभिः' (पा० सू० २-१-५९) इति समासः । श्रेण्यादिषु च्व्यर्थवचनम् । 'आवेशः सम्भ्रमस्त्वरा' इति निघण्टुः । नाणीयसा बृहत्तरेण । नशब्दस्य 'सुप् सुपा' इति समासः ॥ ८ ॥

त्यक्त्वेत्यादि । मरुत्त्वां पवनत्वम् । मरुत्वान् इन्द्रः । तिरस्कृतात्मा तिरस्करिणीविद्यया छादितशरीरः ॥ ९ ॥

बाला वेलां प्रयाताः सपदि सलिलतो व्याकुलं बालजालं
वाहानाले मृणालीमृदुनि घनरुचां धारयं धारयन्तीः ।
वीक्षं वीक्षं च विन्दन् मुदमलमनिमेषत्वभूयिष्ठते द्वे
स्वेषामक्ष्णां तदानीं खलु चरितफले नूनमेने स मेने ॥ १० ॥

तदनु वासवोऽसौ वार्षपर्वणीप्रमुखाभिः वर्षाभिरिव दरीदृश्यमानसजलपयोधराभिः पुलिनतलमिव जलापगमलक्ष्यमाणं नितम्बबिम्बं संवहन्तीभिः जलार्द्राभिरपि तापोद्रेककारिकाभिः असुरकुमारिकाभिराभिरतितरां प्रतारितचेता विस्मृतप्रस्तुतकृत्यः सपदि समजायत ॥

गम्भीरं बत कुम्भिनीपरिवृढं विद्यासु नित्योद्यतं
विद्वांसं क्षमिणं क्षमासुरवरं शौर्योद्भटं सद्भटम् ।
भूतेशं स्वभुवं स्वयम्भुवमपि प्रायेण लोकानहो
लोकेऽस्मिन्नवलोक एव वनितापङ्क्तिर्वनीवङ्क्ति हि ॥११॥

---

बाला इत्यादि । बालजालं केशपाशम् । 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः' इत्यमरः । घनरुचामिति 'कर्तृकर्मणोः कृति' (पा० सू० २-३-६५) इति कर्मणि षष्ठी । धारयं धर्तृं । 'अनुपसर्गाल्लिम्प—' (पा० सू० ३-१-१३८) इति शः । वीक्षं वीक्षं पौनःपुन्येन दृष्ट्वा । आभीक्ष्ण्ये णमुल् । एने अनिमेषत्वभूयिष्ठते अनिमेषतां भूयस्तरतां च चरितफले प्राप्तफले मेने ॥ १० ॥

तदन्वित्यादि । वर्षाः प्रावृट् । दरीदृश्यमानाः अत्यर्थं दृश्यमानाः । पयोधराः मेघाः, स्तनाश्च । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । जलस्यापगमे जलादपगमे च । जलार्द्रा कलमेनार्द्रा पटखण्डेन निर्मिता, जलेनार्द्राश्च । प्रतारितं वञ्चितम् ॥

गम्भीरमित्यादि । गाम्भीर्ययुक्तम् । 'अविज्ञातेङ्गिताकारो भावो गाम्भीर्यमुच्यते' इति भावप्रकाशः । कुम्भिनीपरिवृढं राजानम् । क्षमिणं क्षमाशीलम् । 'शमित्यष्टाभ्यो घिनुण्' (पा० सू० ३-२-१४१) इति घिनुण् । सन् च असौ भटश्च सद्भटः । 'सन्महत्—' 'पा०सू० २-१-६१) इति समासः ।

अथ विषधरविषवेगदुर्विषहैः विषमबाणबाणैर्हृतौजसं बिडौजसमवधाय मृधाय नायं समय इत्यदःकुर्वाणा गीर्वाणास्तमग्रतः कुर्वाणा भीषणतरनिजाभिषेणनकथाविद्रावितविविधदैत्यवरोपद्रवां दिवमवाप्य सुखमवात्सुः ॥

बालासु व्याकुलासु त्वरितमथ तटादादधानासु वासः
शर्मिष्ठा देवयान्या निजमिति जगृहे चेलमूचे तयैषा ।
शर्मिष्ठे! पापनिष्ठे! गतभयमसि संवस्त्रयस्यस्मदीयं
क्षौमं यन्निस्त्रपासिन् मिषति बत जने तत्तु शिष्ये न मृष्ये ॥ १२ ॥

---

भटति भाषते क्व यास्यसीत्यादिकमिति भटः योद्धा । स्वभुवं विष्णुम् । प्रायेण बाहुल्येन । 'प्रायश्चानशने मृतौ तुल्यबाहुल्ययोः' इति विश्वः । वनीवञ्चि अत्यर्थं वञ्चयति । 'वन्चु प्रलम्भने' यङो लुका लुप्तत्वाद् नलोपाभावः । अत्राप्रस्तुतानामेव समानधर्माभिसम्बन्धात् तुल्ययोगितालङ्कारः । 'औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसम्बन्धे तुल्ययोगिता' ॥ ११ ॥

अथेत्यादि । बिडौजसम् इन्द्रम् । मृधं जन्यम् । अदःकुर्वाणाः । 'अदोऽनुपदेशे' (पा० सू० १-४-७०) इति गतिसंज्ञा । अनुपदेशः स्वयमेव बुद्ध्या विमर्शनम्, निश्चिन्वाना इति यावत् । अभिषेणनं, 'यत् सेनयाभिगमनमरौ तदभिषेणनम्' इत्यमरः । अवात्सुः वासं चक्रुः ॥

बालास्वित्यादि । निजं चेलमिति निरूप्येति शेषः । 'चेलं चीरं वासः कर्पटमाच्छादानं निवसनं च । अम्बरमंशुकमुक्तं वस्त्रं सिचयं पटः प्रोक्तः ॥' इति शब्दरत्नाकरः । क्षौमं संवस्त्रयसीति । अत्र सुब्धातुवृत्तिः—'सुधाकरः—समाच्छादनं प्रत्ययार्थमेवाह । सामान्यकर्मणोऽन्तर्भावेऽपि विशेषकर्मणोऽनभिहितत्वात् तद्विशेषस्य प्रयोगो यथा भवति माणवकं मुण्डयतीति । एवं सति वस्त्रसामान्यस्य प्रावारो विशेषो भवतीति प्रावारं संवस्त्रयतीति'[1] । एवम् अत्रापि क्षौममिति वस्त्रविशेषत्वाद् उपपद्यते । अस्यसिपदयोः प्रयोगे मध्यमोत्तमौ दृश्येते । 'वेत्स्यसीति पदभङ्गाद्' इति वामनसूत्रम् । 'अत्रासि

---

१. माधवीये धातुवृत्तौ नामधातुप्रकरणम् ।

एवमतिमत्सरेण निर्भर्त्सिता नष्टदिष्टा शर्मिष्ठा गरकिरं गिरमुदगिरत् ॥

श्रेष्ठम्मन्ये गरिष्ठं सकलदनुभुवां दूरदर्शिप्रवेकं
स्तुत्यं नित्यं वदान्यं मम जनकमहो दासवत् सेवतेऽसौ ।
तातः स्तोता ग्रहीता तव कुसृतियुतो हन्त नेत्रेण काण-
स्तन्नौ भेदो महीयानिह भवतितमास्न्धुसिन्ध्वोरिवान्धे! ॥ १३ ॥

---

करोमि सख्य' इति प्रयोगश्च । अस्मिन् जने मयि मिषति सति इमं जनम् अनादृत्य । 'षष्ठी चानादरे' (पा० सू० २-३-३८) इति सप्तमी । न मृष्ये न सहे । 'मृष तितिक्षायाम् ॥' १२ ॥

एवमित्यादि । निर्भर्त्सिता 'भर्त्स भर्त्सने' । नष्टदिष्टा नष्टभाग्या । कष्टतरस्य दासीभावस्य प्रत्यासन्नत्वान्नष्टदिष्टत्वम् । गरं विषं किरतीति गरकीः । 'क्विप् च' (पा० सू० ३-२-७६) इति क्विप् । उदगिरद् उद्गीर्णवती । 'गॄ निगरणे' लङ् ॥

शिष्येत्यादिभिः त्वया मम न्यूनता युक्ता । सा प्रत्युत तवैवेत्याह—श्रेष्ठमित्यादि । श्रेष्ठम् आत्मानं मन्यते श्रेष्ठम्मन्या । 'आत्ममाने–' (पा० सू० ३-२-८३) इति खश् । आत्मनो मननम् आत्ममानम् । कर्मणि षष्ठ्या समासः । आत्मा च स्वम् । स च सन्निधानान्मन्तैव । तस्य च आत्मस्वरूपेण कर्तृत्वं पण्डितत्वादिरूपेण कर्मत्वमिति न विरोधः । गरिष्ठं गुरुतमम् । इष्ठनि 'प्रियस्थिर--' (पा० सू० ६-४-१५७) इति गुरुशब्दस्य गरादेशः । दूरदर्शिषु प्रवेकम् इति सप्तमीसमासः । 'न निर्धारणे' (पा० सू० २-२-१०) इति निर्धारणषष्ठ्याः समासप्रतिषेधात् । 'देशकालविप्रकृष्टान् यः पश्यति स दूरदर्शी' इति टीकासर्वस्वे । प्रवेकः श्रेष्ठः । चित्तस्य कुत्सिता सृतिः कुसृतिः । 'कुसृतिर्निकृतिः शाठ्यम्' इत्यमरः । नेत्रेण काणः एकनेत्र इति यावत् । 'येनाङ्गविकारः' (पा० सू० २-३-२०) इति तृतीया । अङ्गशब्दः अर्शआद्यजन्तः । अङ्गिविकार इत्यर्थः । काणः 'कण निमीलने' चौरादिकः घञ् । 'स्वभावादयम् एकनेत्रनिमीलनवचनः' इति माधवः । 'अवयवधर्मस्य काण-

वाणीं न ते विगणयामि च वन्ध्यकोपे
वेला यथा जलनिधेः प्रहतिं प्रचण्डाम् ।
उक्त्वेति तां समभिहत्य दुरत्ययाधिं
कोपादपीपतदपीयमिहाधिकूपम् ॥ १४ ॥

न तामेव परं कूपे कोपाद्वियमापतयत् ।
आत्मानमपि दास्याख्ये गहने मलिनाशया ॥ १५ ॥

प्रहिपतनविसंज्ञां तां मृतां मन्यमाना
प्रतिसखि वदमाना तां दशामाशु तस्याः ।
प्रमदभरपरीता सा मदाध्मातचेताः
प्रतिनिलयमयासीद् दैत्यनीतौ विनीता ॥ १६ ॥

---

त्वस्य समुदाये आरोपात् पुरुषः काणः' इति व्यपदिश्यते' इति राममिश्राः। 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः' (वा०) इति मतुब्लोपाद् अभेदोपाचाराद् वा तद्वति वर्तते । महीयान् अतिशयेन महान् । भवतितमाम् अतिशयेन भवति । 'तिङश्च' (पा० सू० ५-३-५६) इति तमप् । 'किमेत्तिङव्यय–' (पा० सू० ५-४-११) इति आमुः । अन्धुः कूपः । अन्धे! विशेषानभिज्ञे ॥ १३ ॥

वाणीमित्यादि । वन्ध्यकोपे, तव कोपो मयि विफल इत्यर्थः । वेला कूलम् । 'वेलाब्धिजलवर्धने । काले सीम्नि च' इति वैजयन्ती । अपीपतत् पातितवती । अधिकूपं कूपे ॥ १४ ॥

नेत्यादि । दास्याख्ये कूपे इत्यनुषज्यते । गहने अत्यन्तकृच्छ्रे । अत्र तृतीयो विशेषोऽलङ्कारः । तस्याः पातनेन असम्भाव्यस्य आत्मपतनस्यापि करणात् ॥ १५ ॥

प्रहीत्यादि । प्रहिः कूपः । विसंज्ञां मोहमापन्नाम् । प्रतिसखि सखीं सखीं प्रति । सर्वाः सखीरित्यर्थः । वीप्सायाम् अव्ययीभावः । वदमाना दीप्यमाना वदन्ती, प्रसन्नमुखवर्णा वदन्तीत्यर्थः । 'भासनोपसम्भाषा–' (पा०सू० १-३-४७) इति तङ् । मदाध्मातचेताः मदापूरितमनाः । 'ध्मा शब्दाग्नि-

ततस्तदानीमेव शशिकुलपताकायमानः सकलजनताकायमानः स खलु ययातिः अखिललोकलोचनासेचनकतनुलतोदीयमाननवयौवनः यौवतमनोगतमदविनोदनमनोहरेक्षणः हरेक्षणाशुशुक्षणिपतङ्गायितानङ्गप्रत्यापत्तिशङ्कास्पदीकृतात्मावलोकिजनान्तरङ्गः तरङ्गपोताभोगसुभगचिल्लीवल्लीवशंवदवसुन्धरापतिसमुदयः समुदयमानमानोद्धतपत्तिनिवहदग्धशत्रुभवनभस्मविसरोद्धूलनोद्धूतदुष्टग्रहाहितोपद्रवः तोपद्रवद्विमतजनवनितानयनाम्भःप्रियम्भावुकः भावुकावसथवाहाग्रविधृतसमग्राचलावलयः वलयकुण्डलकिरीटकटकहारमुखालङ्कारहारिविग्रहः विग्रहविदग्धविविधयौधसमापूर्यमाणसमर्यादः समर्यादकार्यधुर्यमहितमहामात्रः महामात्रातिमात्रनिरुध्यमानमत्तहास्तिकास्तृतपौरस्त्यभागः

---

संयोगयोः' । अग्निसंयोगोऽत्र मुखवायुना अग्निसंयोगः । प्रतिनिलयं निलयमभिमुखीकृत्य । 'लक्षणेनाभि—' (पा० सू० २-१-१४) इति अव्ययीभावः । दैत्यनीतिः परज्यानिः ॥ १६ ॥

ततस्तदानीमित्यादि । पताकायमानः पताकावद् आचरन् । अलङ्कारभूत इति यावत् । कायमानः गीयमानः 'कै गै शब्दे' । 'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनाद्' इत्यमरः । यौवनं युवत्वम् । 'हायनान्त—' (पा० सू० ५-१-१३०) इति भावेऽण् । शब्दप्रवृत्तिनिमित्तं भावः । यौवतं युवतिसमूहः । 'भिक्षादिभ्योऽण्' (पा० सू० ४-२-३८) इत्यण् । युवतेरिह पुंवत्त्वं नेष्टम् । ईक्षणाशुशुक्षणिः तृतीयनयनाग्निः । प्रत्यापत्तिः प्रत्यागतिः । समुदयः समूहः । समुदयमानः वर्धमानः । दुष्टग्रहाणां दुष्टानां ग्रहाणां, पिशाचादीनां च । अहितानां शत्रूणाम् । अहितः अनिष्टश्च उपद्रवः । भस्मोद्धूलनेन पिशाचादीनाम् उपद्रवः शाम्यतीत्यपि स्फुरति । तोपेन हिंसया । 'तुप तुम्प हिंसार्थौ' । द्रवन्तीनां विमतजनवनितानाम् । भावुकावसथे क्षेमावासे वाहाग्रे । विग्रहो देहः युद्धं च । योधा एव यौधाः । प्रज्ञादित्वात् स्वार्थेऽण् । समापूर्यमाणम्—'पॄ पालनपूरणयोः' । समर्यादम् समीपम् । महामात्राः प्रधानामात्याः, हस्तिपकाश्च । हास्तिकं हस्तिसमूहः । 'अचित्तहस्ति—' (पा०सू० ४-२-४७) इति ठक् । आस्तृत आच्छादितः । 'स्तृञ् आच्छादने' । पौरस्त्यः पुरस्ताद्भवः ।

वैनतेय इव भृशमहितापदानवान्, राम इव पुण्यसेतुप्रवर्तकः, यक्षा इव धनदानमनाः, छायेव सूर्यानन्दनैकचेताः, मनुजशार्दूलः, शार्दूलगणेऽप्यसद्रूणां विश्वकद्रूणां श्रवणपुटपाटनपटुतरेण रटितेन मुखरितपरिसरैः प्रासिकैः वतंसितवितंसैः लुब्धकैरपि सार्धं मृगयालुब्धो नगरान्निरीय जेगीयया मृगराजिं रञ्जयता मृगयुजनेन राजिताभ्यन्तरं वनान्तरमभ्येत्यापि महितसिंहासनमलङ्कुर्वाणः मृगवर्गमखिलं

---

'अव्ययानां—' (वा०) इति टिलोपः। भृशमहीनां तापदानं वाञ्छतीति क्विप्। 'वाञ्छि इच्छायाम्'। 'च्छ्वोः शूडनुनासिके च' (पा० सू० ६-४-१९) इति छस्य शः। पदत्वे संयोगान्तलोपः। भृशमहितम् अत्यर्थमहितं च अपदानं च भृशमहितापदानम्। तदस्यास्तीति मतुप्। पुण्यकरः सेतुः पुण्यसेतुः। तस्य प्रवर्तकः उत्पादयिता। पुण्यकर्मणां सेतोः मर्यादायाः प्रवर्तकः रक्षक इति यावत्। यक्षा इव। अत्र वचनश्लेषः। धनदे आनमनं येषां ते, धनदाने मनो यस्य स च। छायेव अत्र लिङ्गश्लेषः। 'वाच्यभेदेन भिन्ना यद् युगपद् भाषणस्पृशः। श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा'॥ वर्णपदलिङ्गभाषाप्रकृतिप्रत्ययविभक्तिवचनानां भेदात्। छाया सूर्यप्रिया। सूर्यस्य, सूरीणां चानन्दने। मनुजशार्दूलः प्रशस्तो मनुजः। 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः'॥ इत्यमरः॥ शार्दूलगणेऽपि। असद्रूणां, सद्रवः अवसादनशीलाः ततोऽन्ये असद्रवः तेषाम्। 'षद्लृविशरणगत्यवसादनेषु'। 'दाधेट्—' (पा०सू०३-२-१५९) इति रुः। विश्वकद्रुः— 'श्वा विश्वकद्रुर्मृगयाकुशलः' इत्यमरः। 'मृगयाकुशलः श्वा च विश्वकद्रुरिति स्मृतः' इति अभिधानरत्नमाला। रटितेन शब्देन। 'रट परिभाषणे'। प्रासिकैः प्रासायुधैः। 'प्रहरणम्' (पा०सू०४-४-५७) इति ठक्। वतंसितः शेखरीकृतः। वितन्यते पक्ष्यादिग्रहणार्थं विस्तीर्यत इति वितंसः। 'वितंसस्तूपकरणं बन्धने मृगपक्षिणाम्' इत्यमरः। लुब्धकैः मृगयुभिः। जेगीयया पौनःपुनिकेन गानेन। 'कै गै शब्दे'। रञ्जयता रक्तां कुर्वता। 'रञ्जेर्णौ मृगरमण उपसंख्यानम्' (वा०) इति नलोपः। मृगयुजनेन पूर्वं प्रविष्टेन। महितानां सिंहानाम् असनम् क्षेपणम् अलम् अत्यर्थं कुर्वाणः। वनेऽपि सिंहासनम् अधितिष्ठन्निति विरोधः।

मृगं मृगं पर्यटवि पर्यटन् मृगयाश्रमजन्ययोदन्यया विमलजलाभिलाषी वनान्तर्गतमपि अवनान्तर्गतं तदेवोदपानम् आकीर्णपर्णचयम् अयाञ्चक्रे ।

तदनु मनुजपतिरयम् अभिलषिततृषाप्रहाणः प्रहीणजले प्रहितले प्रहितलोचनः कामपि कन्यकां कमनीयरूपां रूपयन्निति निरूपयामास—

लोलेन्दीवरलोभनीयनयना लोकाभिरामानना
रामा केयमहो दिवो निपतिता दैवान्नु देवाङ्गना ।
भूदेवी भुवनैकसुन्दरवपुः किं तिष्ठते सुष्ठु मे
किं भूलोकविलोकनातिकुतुकान्नागाङ्गनैवोद्गता ॥ १७ ॥

---

मृगं मृगम् अन्विष्यान्विष्य । 'मृग अन्वेषणे' चुरादिरदन्तः । 'आभीक्ष्ण्ये–' (पा० सू० ३-४-२२) इति णमुलि णिलोपः । पर्यटवि अटव्याम् । जन्यया जातया । 'भव्यगेय–' (पा० सू० ३-४-६८) इति कर्तरि निपातः । उदन्यया पिपासया । 'अशनायोदन्य–' (पा० सू० ७-४-३४) इत्यादिना पिपासायां निपात्यते । वनेन जलेन अन्तर्गतं वनान्तर्गतम् । ततोऽन्यद् अवनान्तर्गतम् निर्जलमित्यर्थः । अत्र शाब्दो विरोधः । तदेव पूर्वप्रस्तुतं देवयान्या अधिष्ठितमित्यर्थः । उदपानं कूपम् । आकीर्णपर्णचयम्, इदम् अतिदूरमतीताया अपि गात्रचूर्णनाभावगर्भितं विशेषणम् । अयाञ्चक्रे प्राप्तवान् । 'दयायासश्च' (पा० सू० ३-१-३७) इत्याम् ।

तदन्वित्यादि । प्रहाणः त्यागः । प्रहीणजले निर्जले । 'कृत्यचः' (पा० सू० ८-४-२९) इति णत्वम् । प्रहितले कूपतले । रूपयन् पश्यन् । निरूपयामासेति अनेकार्थत्वाद् विचारणे ॥

लोलेत्यादि । मे तिष्ठते आत्मानं प्रकाश्य तिष्ठतीत्यर्थः । 'श्लाघह्नुङ्–' (पा० सू० १-४-३४) इति सम्प्रदानसंज्ञा । 'प्रकाशन–' (पा० सू० १-३-२३) इति तङ् । अत्र शुद्धः सन्देहालङ्कारः । 'विषयस्य सन्दिह्यमानत्वे सन्देहः ।' विषयः प्रकृतोऽर्थः । अत्र संशय एव पर्यवसानम् । स शुद्धः ॥ १७ ॥

इत्थं चिन्ताशबलितमतिर्वाचमूचे तदैनां
पृथ्वीपालः पृथुलनयने! कासि किन्नामिकासि ।
को वा तातस्तव निपतिता कूपदेशे कुतोऽस्मि-
न्नेवं पृष्टा पुरुषवृषभं वाचमेषा बभाषे ॥ १८ ॥

क्षोणीचूडामणेऽहं समरभुवि सुरैर्दानवानां हतानां
जीवातोर्विश्वदीव्यद्यशस उशनसो नन्दनी देवयानी ।
दैत्याधीशस्य पुत्र्या प्रसभमभिहता हन्त शर्मिष्ठयास्मिन्
क्षिप्रं क्षिप्तास्मि कूपे तदिह विधिबलात् प्राणितां त्रायतां माम्॥१९॥

सुजन्मन्! जन्मना ते किमलं तिलकितं कुलम् ।
कस्मै वा कारणायासु वनवाटीषु टीकसे ॥ २० ॥

इत्युक्तः प्रत्यवादीदपि स सुवदने! सम्प्रविष्टो मृगाणां
दुष्टानां पेष्टुकामो विपिनभुवमिमां विष्टपारिष्टदाता ।
नाम्ना चाहं ययातिर्जगति बहुमते विश्वराजन्यकानां
तुङ्गे वंशे सुधांशोरभवमभयदः प्रोन्नये त्वां प्रपन्नाम् ॥ २१ ॥

---

इत्थमित्यादि । किं नाम यस्याः सा किन्नामिका । 'शेषाद् विभाषा' (पा० सू० ५-४-१५४) इति कप् । 'प्रत्ययस्थात्—' (पा० सू० ७-३-४४) इति इकारः । 'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरू चेत्' ॥ १८ ॥

क्षोणीत्यादि । क्षोणीचूडामणे! वसुधालङ्कारभूत! जीवातोः जीवनौषधस्य । 'जीवातुर्जीवनौषधम्' इत्यमरः । दीव्यत् शोभनम् । नन्दनी पुत्री । 'कृत्यल्युट—' (पा० सू० ३-३-११३) इति ल्युटो बहुलत्वोक्तेः नन्दनी रमणी कमनी ह्लादनी दरिद्राण इत्यादि कर्तरि । दैत्याधीशस्य वृषपर्वणः । त्रायतां रक्षतु ॥ १९ ॥

सुजन्मन्नित्यादि । कस्मै कारणाय केन कारणेन इत्यर्थः । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति विहितत्वाच्चतुर्थी । टीकसे गच्छसि । 'टीकृ' गत्यर्थः ॥ २० ॥

इतीत्यादि । मृगाणामिति 'जासिनिप्रहण—' (पा० सू० २-३-५६) इति षष्ठी । अरिष्टदाता क्षेमदः । प्रोन्नये प्रोद्धरामि ॥ २१ ॥

कर्णप्राभृतकीभूतभूपतिव्याहृतिस्ततः ।
वाचं व्याचष्ट तुष्टात्मा पुष्टादरमसावमुम् ॥ २२ ॥

मम सुचरितपूरैरद्य दृष्टोऽसि दिष्ट्या
शशधरकुलमौले! पावनोदारकीर्ते!
द्रुतमुपरि नयान्धादार्तबन्धो! त्वमन्धो-
रिति कृतवचनादादात्महस्तं विहस्ता ॥ २३ ॥

करग्रहोद्यतमना विपिनेऽपि तदा नृपः ।
अजायत जगत्यां हि स्वभावः खलु दुस्त्यजः ॥ २४ ॥

धात्रीवृत्ररिपुस्ततो भृगुसुतामह्नाय गृह्णन् करे
कारुण्यादवशां वशामिव करी वारीपरीपातिनीम् ।
तां बालामुददीधरद् विधुरितामन्धोरतो मन्थरं
व्यद्धुं तावदिमां स पञ्चविशिखश्चापं च शिञ्जाञ्चितम् ॥२५॥

पपात पुनरप्येषा कूपे कामाधिनामके ।
आपदापदमेवानुबध्नातीति मृषा न गीः ॥ २६ ॥

---

कर्णेत्यादि । प्राभृतमेव प्राभृतकम् उपदा ॥ २२ ॥

ममेत्यादि । अन्धाद् अन्धयतीत्यन्धः । अदृश्यतलादित्यर्थः । हस्तं विहस्तेति विरोधध्वनिः । विहस्ता व्याकुला ॥ २३ ॥

करेत्यादि । करो बलिः हस्तश्च । अत्र करेति श्लेषानुगृहितोऽर्थान्तर-न्यासः ॥ २४ ॥

धात्रीत्यादि । वशां करिणीम् । वारी गजग्रहणार्थं कृतो गर्तः । तस्यां परीपातः वारीपरीपातः, सोऽस्या अस्तीति वारीपरीपातिनी, ताम् । उद-दीधरत् उन्नीतवान् । व्यद्धुं प्रहर्तुम् । 'व्यध ताडने' । 'तुमुन्ण्वुलौ—' (पा. सू. ३-३-१०) इति तुमुन् । शिञ्जा मौर्वी । अत्र वशामिवेति वाक्यार्थोपमा । तदुद्धरणस्य चापोद्धरणस्य च यौगपद्यात् समुच्चयः । अनयोः परस्पर-निरपेक्षत्वात् संसृष्टिः । 'सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः' ॥ २५ ॥

अनन्तरमनेन 'ननु भृगुतनये! भयं विहाय पितृसमीपमेवोपयातु भवती' इति भाषितैषा विषमविशिखविशिखावेशविवशाशया विशांपतिं प्रति विशारदां शारदामुदाजहार—

पाणिर्मे पार्थिवानां परिवृढ! भवता यद् गृहीतस्ततस्त्वं
भर्ता नैवात्र कार्या विमतिरयि! मतिः स्निह्यतीयं मदीया ।
गृह्णीतान्यस्त्रिलोक्यां क इह करमिमं त्वद्भुजाग्रोपभुक्तं
तन्मा सन्मान्य! सद्यः परिणय कृपणत्राणकर्मैव धर्मः ॥ २७ ॥

आकर्ण्येदं सवर्णे विहित उपयमो नान्यथा युक्तरूपो
भीतोऽहं भार्गवाच्च, प्रचुरतरतपस्तोमविभ्राजितानाम् ।
विप्राणां विप्रकारः खलु कुलमखिलं क्षिप्रमेव क्षिणोति
प्रत्तां पित्रा भजे त्वामिति मधुरगिरा मानयन् वेगतोऽगात् ॥

---

पपातेत्यादि । कामाधिरिति नाम यस्य सः । दुरुत्तरत्वात् कूपसाम्यम् । 'सम्पत् सम्पदम् आपद् आपदं वा अनुबध्नाती'ति कादम्बर्यामपि । न मृषा सत्यैव ॥ २६ ॥

अनन्तरमित्यादि । भयं विहाय, न खलु मया परिरक्षितां भवतीं भूयः कोऽपि परिबुभूषतीति भावः । 'भयं चित्तस्य चलनं तच्च प्राहुरनेकधा ।' इति भावप्रकाशः । विशारदां सुप्रगल्भाम् । 'विद्वत्सुप्रगल्भौ विशारदौ' इत्यमरः ।

पाणिरित्यादि । स्निह्यति । 'ष्णिह प्रीतौ' । उपभुक्तम् । उपभोगेन ग्रहणं लक्ष्यते । सन्मान्य! सद्भिर्मान्य । कृपणानां दीनानां त्राणकर्म रक्षणम् ॥ २७ ॥

आकर्ण्येत्यादि । उपयमः विवाहः । 'यमः समुपनिविषु—' (पा० सू० ३-३-६३) इति वा अप् । युक्तरूपः सुष्ठु युक्तः । भार्गवाद् भीतश्च । विप्रकारः निकारः । क्षिणोति हिनस्ति । 'क्षिणु हिंसायाम्' । कचिद् ब्रह्मक्षत्रयोः अन्योन्यविवाहः श्रूयते, तत्किमयं निकार इत्यत्राह—प्रत्तामिति, दत्ताम् । 'अच उपसर्गात् तः' (पा० सू० ७-४-४७) इति तः । मानयन् पूजयन् । 'मान पूजायाम्' ॥ २८ ॥

एवं ययातेः सहसैव यानतो
दैत्येन्द्रजाततर्जनचिन्तनादपि ।
अस्थादधस्तादिह कस्यचित् तरोः
काव्यात्मजा सा भृशकातराशया ॥ २९ ॥

जनोऽयं मा जीवन्नहह! दनुजाधीशतनया-
प्रभूताधिक्षेपप्रभवपरितापातुरमतिः ।
वितन्वानां चिन्तां मुहुरिति दुरन्तामथ रया-
दयासीद् दासी तां भृगुपतिनिदेशेन विवशा ॥ ३० ॥

तदनु तदुदीरितं 'जवेन वनादायातव्य'मिति तातवचनमाकर्ण्य द्विगुणोदीर्णशोकया तया काव्यकन्यया 'ननु दूति! घूर्णिके! निष्ठुरधिया शर्मिष्ठया आर्याहमार्यहलमभिहत्य हन्तास्मिन्नन्धकूपे न्यपातिषि । तत् कक्षादितः तदधिष्ठीयमानमधिष्ठानं न विविक्षामि' इति कथिता व्यथिता सा सपदि सितोपशल्यमुपगम्य सुतोदितम् एतस्मै निवेदयति स्म ।

तदनु घूर्णिकानुवर्णितं कर्णारुन्तुदमिदम् आत्मजोदन्तजातम् आकर्ण्य तूर्णोदीर्णमन्युघूर्णमानमानसोऽयमुशनाः तत्तादृशं तदार्तिम् आशु

---

एवमित्यादि । तर्जनं भर्त्सनम् । अस्थात् स्थितवती । इह वने ॥ २९ ॥

तत्रावस्थितायाः तस्याः स्वनिलयाप्राप्तेर्निदानमाह—जन इत्यादि । मा जीवन् म्रियताम् । 'माङ्याक्रोश--' (वा०) इति शता । 'अहहेत्यद्भुते खेदे' इत्यमरः । दुरन्तः दुष्टः दुःखरूपोऽन्तः यस्याः ताम् ॥ ३० ॥

तदन्वित्यादि । ननु हे दूति! । घूर्णिकेति तस्या नाम । आर्या, किञ्चिदपि नापराधकारिणीति भावः । आर्यहलं हठात् । 'प्रसह्यार्यहलं हठे' । न्यपातिषि निपातितास्मि । इतः कक्षाद् अस्माद् वनात् । विविक्षामि प्रवेष्टुम् इच्छामि ।

तदन्वित्यादि । अरुन्तुदं मर्मस्पृक् । 'विध्वरुषोस्तुदः' (पा०सू०३-२-३५) इति खश्, मुम् । उदीर्णेन प्रवृद्धेन । मन्युना क्रोधेन । सा एव तादृक् तत्तादृक् ताम् ।

चिकर्तिषन् आसनोत्थायमदसीयं समीपं समीय वर्षातरङ्गिणीमिव संक्षुब्धान्तरङ्गां, दण्डाहतां दन्दशूकीमिव शूत्कारोद्गारिणीं, शस्त्रविद्धां क्रोडवधूमिव क्रोडीकृतक्रोधभारां, निरन्तरनिरीयमाणनयनजलधारापाशैः पयोधरविरचिताकर्षणादिव नितरामवनतं निजहृदयजाज्वल्यमानशोकानलकीलावलीविलेहनादिव परिम्लानं मुखाम्बुजं कराम्बुजे विनिवेशयन्तीं निशाम्य, भृशमाम्रेडितमन्युरपि निजान्तेवासिगतानन्तहार्दाक्रान्तान्तरङ्गतयाङ्गीकृतधृतिः सत्वरं नयनोदरविसृत्वरीम् आस्रधारां कराग्रेण परिमार्जयन्नात्मजां निजां निजगाद ॥

न खलु न खलु वत्से! शोकमेवं भज त्वं
नियतमुचितमेतत् साध्वि! मन्दात्मनां हि ।
स्मर परमभिभूतावापदां सम्पदां वा
विकृतिमिह न लोके हन्त सन्तो भजन्ते ॥ ३१ ॥

---

चिकर्तिषन् छेत्तुमिच्छन् । 'कृती छेदने' । सनन्ताच्छता । आसनोत्थायम् आसनात् त्वरितमुत्थाय । 'अपादाने परीप्सायाम्' (पा० सू० ३-४-५२) इति णमुल् । परीप्सा त्वरा । समीय प्राप्य । 'ई गतौ' । संक्षुब्धं चलितम् । 'मन्थो मन्थनदण्डः स्यात् सक्तवो वा द्रवीकृताः । तद्वाची क्षुब्धशब्दोऽयं तयोश्च चलितत्वतः । चलितेष्वपि सर्वेषु प्रयोगोऽस्योपचारतः ॥' इति सर्वस्वे । दन्दशूकीं सर्पस्त्रियम् । क्रोडीकृतः स्वीकृतः । बाष्पधारा एव पाशाः, तैः करणैः । पयोधराभ्यां कर्तृभ्यां विरचितादाकर्षणादिव अवनतम् । एतद् वदनाम्बुजमित्युपमायाः साधकम् । परिम्लानं परितः ग्लायमानम् । 'ग्लै म्लै हर्षक्षये ।' कराम्बुजे विनिवेशयन्तीमिति पीडातिशयो व्यज्यते । निशाम्य दृष्ट्वा । 'निशामयति पश्यार्थे श्रुतौ ह्रस्वविधिर्मतः ।' इति क्रियानिघण्टुः । विसृत्वरीं विसरणशीलाम् । 'इण्नश्–' (पा० सू० ३-२-१६३) इति क्वरप् । आस्रधाराम् अश्रुधाराम् । 'अस्र आस्रश्च पुलिङ्गौ क्लेशे क्ली रुधिरेऽश्रुणि' इति वैजयन्ती । परिमार्जयन् शोधयन् । 'मृजू शुद्धौ' चौरादिकः ॥

न खल्वित्यादि । मन्दात्मनां मूढहृदयानाम् । हिः प्रसिद्धौ । परम् अत्यर्थम् । अभिभूतौ अभिभवे ॥

दूरीकुरु सुते! रोषमूरीकुरु च सम्मदम् ।
दृष्टहेतुरियं नूनं शर्मिष्ठा दिष्टगृह्यका ॥ ३२ ॥

स्वकर्मणैवायमुदारबुद्धे! शुभाशुभे विन्दति विश्वलोकः ।
यत् त्वत्कृतानां बत दुष्कृतानां कालेन बाले! फलमद्य जातम् ॥३३॥

प्रोद्यन्तं क्रोधवह्निं जगति विनयते यः क्षणेनोक्षणेन
क्षान्त्यम्बूनां नियन्ता तुरगवरमिव प्रग्रहेणोग्रवेगम् ।
सोऽयं धीरः स हीरो बुधमकुटगतः सैव मान्यः स धन्यो
मुञ्चेमां चारुशीले! तदिह रुषमहिर्जीर्णचर्मेव तूर्णम् ॥ ३४ ॥

---

दूरीकुरु इत्यादि । रोषं शर्मिष्ठाविषयम् । ऊरीकुरु अङ्गीकुरुष्व च । कथमेवंविधनिकारकारिण्यां रुषं त्यजामीत्यत आह — दृष्टहेतुरित्यादि । सा शर्मिष्ठा दृष्टहेतुः दृष्टकारणमेव दिष्टगृह्यका दैवपराधीना । 'उदीचामातःस्थाने–' (पा० सू० ७-३-४६) इतीत्त्वप्रतिषेधविकल्पः । दैवप्रेरणयैव एतदनया कृतम् इति भावः ॥ ३२ ॥

किं पुनः साक्षात् कारणमित्याह—स्वकर्मणेत्यादि । विन्दति लभते । विदिर्लाभे । कालेन कालपरिपाकेन ॥ ३३ ॥

पूर्वत्र वस्तुतो विषयाभावादयं कोपस्त्याज्य इत्युक्तेऽपि तामनपगतरोषाम् आलोक्य पुनः क्षमाबलेन जहीत्याह—प्रोद्यन्तमित्यादि । उद्गच्छन्तं क्रोधवह्निं विनयते । 'कर्तृस्थे चाशरीरे–' (पा० सू० १-३-३७) इति तङ् । उक्षणेन सेचनेन । क्षान्त्यम्बूनामिति कर्मणि षष्ठी । क्षणेन कार्यकरणात् प्रागेव । प्रग्रहः अश्वादिरश्मिः । 'रश्मौ च' (पा० सू० ३-३-५३) इति विभाषाप् । 'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च' इत्यमरः । दधाति प्रज्ञया सर्वमिति धीरः । हीरो वज्रमणिः । सैव स एव । 'सोऽचि लोपे–' (पा० सू० ६-१-१३४) इति सुलोपः । चारुशीले इति विधिगर्भम् आमन्त्रणम् । चारुशीलया भवितव्यमिति भावः । अत्र रोषस्य जीर्णचर्मोपमानत्वेन यथावत् पश्यतामतिजुगुप्सितत्वं द्योत्यते ॥ ३४ ॥

न कोऽप्यार्यः कुप्येदयि सुहृदये! जातु सुहृदे
तदेतस्माद् वत्से! विरम पुषिताद्दाशु रुषितात् ।
न सा वाणीवेणी पुनरफलदेणीदृशि तदा
विसृष्टेवादिष्टे सहितधरणौ बीजविततिः ॥ ३५ ॥

ततो रोषादेषा कलुषहृदयोवाच वचनं
यदद्यानिन्दीन्मां दनुजदुहिता हन्त बहुधा ।
तदन्तःशल्यं मे किमिव फलमेतैः प्रलपितै-
र्जनः को वा लोके हहह सहते दुष्परिभवम् ॥ ३६ ॥

शनैस्तु शस्त्रेण कृतं प्ररोहति
व्रणं वनं वापि कुठारपाटितम् ।
प्ररोहति श्रोत्रकठोरवाक्क्षतं
महामते! नो महताप्यनेहसा ॥ ३७ ॥

---

एवं क्षमैव कार्येत्युपपाद्य सा पुनर्बन्धुषु अवश्यं कार्येत्यभिप्रेत्याह— नेत्यादि । कोऽपि कश्चनापि । जातु कस्यामप्यवस्थायाम् । सुहृदे इति । 'क्रुधद्रुह—' (पा० सू० १-४-३७) इति सम्प्रदानसंज्ञा । एतस्माद् बन्धुविषयात् । पुषितात् प्रवृद्धात् । रुषिताद् रोषात् । 'जुगुप्साविराम—' (वा०) इत्यपादान-संज्ञा । 'रुष्यमत्वर—' (पा० सू० ७-२-२८) इति इड्विकल्पः । 'तीषसह—' (पा०सू० ७-२-४७) इति विकल्पविधानाद् 'यस्य विभाषा' (पा०सू०७-२-१५) इति प्रतिषेधे प्राप्ते वचनमिदम् । अदिष्टे अकाले । 'नाकालतो यौवनमभ्युपैति नाकालतो रोहति बीजमुप्तम्' इति श्रीमहाभारते ॥ ३५ ॥

तत इत्यादि । अनिन्दीद् निन्दितवती । हहहेति खेदे । 'हहहेत्यद्भुते खेदे' इत्यमरः । दुष्टः अतिकुत्सितः परिभवः दुष्परिभवः ॥३६॥

शनैरित्यादि । वाग्भिः कृतं क्षतं वाक्क्षतम् । 'तृतीया तत्कृतार्थेन—' (पा० सू० २-१-३०) इति समासः । महताप्यनेहसा बहुकालेनापि ॥ ३७॥

नैवास्मादसुरस्य कुत्सितमतेरस्य प्रपित्से गृहं
पापिष्ठैः सह तिष्ठतां ननु रतिर्वर्वर्ति दुर्वर्त्मनि ।
प्रत्युक्तः सुतयेति दैत्यपतये चुक्रोश शुक्रोऽधिकं
शीतस्यापि हि पाथसः शिखिशिखा पुष्णात्यतीवोष्णताम् ॥३८॥

ततश्च भर्गदेश्यो भार्गवोऽसौ निष्प्रतिघातनिष्पद्यमानप्रतिघभरसमाक्रान्तस्वान्ततया प्रकटाङ्घ्रिविक्षेपः शीघ्रमसुरपरिषत्परिवृढोपकण्ठमाढौकमानः भङ्गाकटभङ्गदपिङ्गतासङ्गतैः परागपरिषङ्गपिङ्गलेङ्गभृङ्गभङ्गीसङ्गिभिः अतिभङ्गुरैरीक्षितैः मङ्क्षु धक्ष्यन्निव उद्वीक्ष्याक्षीणरौक्ष्यां गिरमस्राक्षीत् ॥

धिक् पुत्रीं प्रेमपात्रीं तव शठहृदयां धिक् च वो धिक्कृतास्मान्
मत्वास्मान् या तृणाय प्रसभमिह तनूजां प्रहौ प्राहिणोन्नः ।
यैर्वा दुर्वारगर्वैरहह निपठिती सर्वतीर्थे सतीर्थ्यो
भूयो भूयोऽपि नीतश्चरितविहितधर्मः कचः कालधर्मम् ॥ ३९ ॥

---

नैवेत्यादि । अस्माद् वनात् । प्रपित्से गन्तुमिच्छामि । सन्, 'पद गतौ' दिवादिः । अनुदात्तेत् । 'सनिमीमा--' (पा० सू० ७-४-५८) इति इस् । अभ्यासे लोपश्च । पापिष्ठैः अतिशयेन पापैः । 'अतिशायने–' (पा० सू० ५-३-५५) इति इष्ठन् । वर्वर्ति अत्यर्थं वर्तते । 'वृतु वर्तने' यङ्लुक् । दैत्यपतये इति । 'क्रुधद्रुह--' (पा० सू० १-४-३७) इति सम्प्रदानसंज्ञा । पाथसः जलस्य । अत्र दृष्टान्तोऽलङ्कारः ॥ ३८ ॥

तत इत्यादि । भर्गदेश्यः प्रायेण शर्वतुल्यः । 'ईषदसमाप्तौ–' (पा० सू० ५-३-६७) इति देश्यः । निष्प्रतिघातम् अप्रतिबन्धं यथा तथा । प्रतिघो रोषः । 'परौ घः' (पा०सू० ३-३-८४) इत्यत्र वाहुलकात् प्रतिघः । आढौकमानः गच्छन् । 'ढौकृ' गत्यर्थः । भङ्गाकटः भङ्गारजः । भङ्गा कुसुम्भम् । 'अलाबूतिलोमाभङ्गाभ्यो रजस्युपसंख्यानम्' (वा०) इति कटच्प्रत्ययः । इङ्गः चलः । धक्ष्यन् दग्धुमारब्धः । 'दह भस्मीकरणे' । 'लृटः सद्वा' (पा० सू० ३-३-१४) इति शता । अस्राक्षीत् सृष्टवान् । 'सृज विसर्गे' । 'सृजिदृशोः–' (पा० सू० ६-१-५८) इत्यमागमः ॥

नित्यं सत्यापयन्त्यां मम दुहितरि (तु) स्थायुकायामत्र
स्थानीये स्थातुमीशे नियतमयमहं नान्यथा दैत्यनाथ!
स्मृत्यर्थोऽत्यर्थसाध्वीं श्रुतिमिव सहसान्वेमि तन्वीं तदेनां
शर्मिष्ठां श्लाघमानः स्थितिमिह तनुया मङ्क्षु भो भो निनङ्क्षो!॥

---

धिगित्यादि। ते पुत्रीं धिक्। पुत्री नितरां निन्दितेत्यर्थः। 'उभसर्व–' (वा०) इति धिग्योगे द्वितीया। धिक्कृता वयं यैः तान् धिक्कृतास्मान् वः च धिक् यूयं च निन्दिताः। उभयत्रापि हेतुमाह–मत्वेत्यादिना। तृणाय मत्वा अनादृत्य। 'मन्यकर्मण्यनादरे–' (पा० सू० २-३-१७) इति चतुर्थी। 'इह चानुवाद्ये कर्मणि अस्मानित्यादौ व्यवस्थित(विभाषा)विज्ञानान्न चतुर्थी' इति माधवः। अहहेति खेदे। निपठिती पठितवानिति यावत्। निपठितम् अनेनेति विगृह्य 'इष्टादिभ्यश्च' (पा० सू० ५-२-८८) इति इनिः। तीर्थे शास्त्रे। 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा०) इति सप्तमी। सतीर्थ्यः एकस्मिन् गुरौ वासी। 'समानतीर्थे वासी' (पा० सू० ४-४-१०७) इति यत्। 'तीर्थं मन्त्राद्युपाध्यायशास्त्रेष्वम्भसि पावने। पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः॥' इति वैजयन्ती। भूयो भूयोऽपि बहुकृत्वः। नीतः प्रापितः। चरितः आचरितः विहितो धर्मो येन सः चरितविहितधर्मः। अत्र केवलत्वाभावादनिजभावः। कालधर्मं मृतिम्। 'स्यात् पञ्चता कालधर्मः' इत्यमरः॥ ३९॥

नित्यमित्यादि। सत्यापयन्त्यां सत्यमाचक्षाणायाम्। 'सत्यापपाश–' (पा० सू० ३-१-२५) इति णिच्। 'अर्थवेदसत्यानामापुग् वक्तव्यः' (वा०) इत्यापुक्। स्थायुकायां स्थितिशीलायाम्। 'लषपतपद–' इत्युकञ्। 'स्थायुकः पुनः। स्याद् ग्रामाधिकृते स्थास्नौ' इति केशवः। स्थानीये गृहे। ईशे शक्तो भवामि। याज्ञवल्क्यमनुव्यासादिप्रणीतानि वर्णाश्रमधर्मशास्त्राणि स्मृतयः। सर्गादावपि न क्रियते लिख्यते च केवलं गुरुमुखाच्छ्रूयते इति श्रुतिः। तन्वीं त्वत्सुताधिक्षेपादिना क्षीणाम्। एतच्छ्रुतावपि योज्यम्। मितगिरमित्यर्थः। ज्ञीप्स्यमानत्वाभावात् शर्मिष्ठामिति द्वितीया। मङ्क्षु शीघ्रम्। निनङ्क्षो! नाशेच्छो। 'णश अदर्शने' सनन्तादुः॥ ४०॥

तदनु दनुजवरहृदयं शर्मिष्ठादुष्टकर्मणातिरुष्टस्य देवयानीगुरोर्गिराम् मर्मभिदां चक्रेण बेभिदाञ्चक्रे ॥

स्तम्भयन् जृम्भितं शोकं स्तम्भदम्भोज्झितोऽथ सः ।
गिरमुद्गमयामास भार्गवं प्रति गद्गदाम् ॥ ४१ ॥

दयालवो हे गुरवो! विधेयो दयालवो मय्यधिकं विधेये ।
ईर्ष्या न जुष्या च सदा गुरूणां मृष्या हि शिष्याचरितापराधाः ॥४२॥

भक्तं शिष्यं भुजिष्यं प्रणतमधिपदं पाहि पाहि प्रभो! मां
पुत्रीं ते प्रीतिदात्रीं सविधमुपनयामीत्युदीर्यात्युदारः ।
सोऽगाद् वेगादगारात् प्रियकृदिह गुरोर्माननीयस्य वैरी
देवानां देवयानीं श्रितगहनवनीं मानिनीमानिनीषुः ॥ ४३ ॥

---

तदन्वित्यादि । चक्रेण समूहेन । बेभिदाञ्चक्रे अत्यर्थं भिद्यते स्म । 'भिदिर् विदारणे' यङ्लुगन्तात् कर्मणि लिट् ।

स्तम्भयन्नित्यादि । विवेकादिनेति शेषः । उद्गमयामास उदीरयामास ॥ ४१ ॥

दयालव इत्यादि । हे दयाशीलाः । 'स्पृहिगृहि–' (पा० सू० ३-२-१५८) इत्यालुच् । विधेयः कार्यः । व्याङ्भ्यामुपसृष्टो दधातिः करणेऽर्थे वर्तते । दयाया लवो लेशः । जुष्या सेव्या । 'जुषी प्रीतिसेवनयोः' । 'एतिस्तुशास्–' (पा० सू० ३-१-१०९) इति क्यप् । गुरूणां गुरुभिः । 'कृत्यानां–' (पा० सू० २-३-७१) इति कर्तरि षष्ठी । मृष्याः सोढव्याः । 'ऋदुपधात्–' (पा० सू० ३-१-११०) इति क्यप् । अपराधाः, न त्वेकः ॥ ४२ ॥

भक्तमित्यादि । भुजिष्यं किङ्करम् । त्वदादिष्टं सर्वं करोमि इति भावः । अत्युदारः अतिमहान् । सोऽगात् न कञ्चन प्रजिघाय । अत्र हेतुः—मानिनीमिति । आनिनीषुः आनेतुमिच्छुः ॥ ४३ ॥

अनन्तरम् अमरान् द्विषन् सुरवृषवर्धनैकलोलोऽपि असुरवृषवर्धनैकलोलः, गुरुद्वेषवानपि गुरुभक्तिमान्, निजतनयानीयमानमानहानिमेनां देवयानीम् अनलशिखामिव सन्तायमानसन्तापां, क्षमाविष्टामपि अक्षमाविष्टाम्, उद्दामशोकभरोद्वहनाक्षमतयेव अक्षीणनिष्यन्दमानास्रबिन्दुसन्दोहखिन्दानं वदनारविन्दमवनमयन्तीम्, असावासाद्य सद्यस्तस्या रुष्टचेतसः साष्टाङ्गपातं पादयोः पतित्वा क्रोधहार इति व्याजहार—

कोपानलं त्वं शमयोज्ज्वलन्तं
चङ्क्षम्यतां मङ्क्षु च मन्तुरेषः ।
सतां पुनः साध्वितरे! समेषां
क्षमा किलाहो कुलसम्प्रदायः ॥ ४४ ॥

---

अनन्तरमित्यादि । अमरान् द्विषन् देवशत्रुः । 'द्विषः शतुर्वावचनम्' (वा०) इति षष्ठीनिषेधविकल्पः । सुरवृषस्य देवश्रेष्ठस्य । वर्धनं छेदनम् । 'वर्ध छेदनपूरणयोः' । असुरवृषस्य आसुरधर्मस्य । गुरुः बृहस्पतिः, आचार्यश्च । एतानि विशेषणानि देवयान्यानयनार्थप्रस्थानस्य हेतुतयोक्तानि । सन्तायमानः वर्धमानः । 'तायृ सन्तानपालनयोः' । सन्तानः प्रबन्धः । सन्तापः औष्ण्यम् । अन्तस्तापश्च । क्षमाविष्टां भूमावेव निवसन्तीम् । अक्षमया ईर्ष्यया पराभ्युदयासहिष्णुतया आविष्टां च । खिन्दानं 'खिद दैन्ये' । साष्टाङ्गपातम्— 'पद्भ्यामथ च जानुभ्यां बाहुभ्यामुरसा दृशा । शिरसा मनसा वाचा प्रणामोऽष्टाङ्ग ईरितः ॥' क्रोधहारः क्रोधं हर्तुम् । 'अण् कर्मणि च' (पा० सू० ३-३-१४) इति भविष्यति क्रियार्थायां क्रियायामुपपदेऽण् ॥

कोपेत्यादि । उज्ज्वलन्तम् उद्दीप्यमानम् । नयनरक्तिमादिभिः बहिः प्रकाश्यमानम् । 'ज्वल दीप्तौ' परस्मैभाषः । उत्फालतां प्राप्तोऽयं मम तापः कथं शममुपयायादित्यत्राह—चङ्क्षम्यतामिति । अत्यर्थं सह्यताम् । यङन्तात् कर्मणि लोट् । मन्तुः अपराधः । क्षमा तु त्वयि सम्भाव्यत एवेत्याह—सतां पुनरिति । साध्वितरे! अतिशयेन साध्वि । 'घरूपकल्प–' (पा०सू०६-३-४३) इति ङीषो ह्रस्वः । समेषां सर्वेषाम् । समशब्दस्य सर्वशब्दपर्यायस्यैव सर्वनाम-

अक्षीणमाधिं क्षपय क्षणेन
भद्रे ! प्रपद्यस्व मयि प्रसादम् ।
गुरुप्रमोदाय परं गुरूणां
बालस्य दुष्टान्यपि चेष्टितानि ॥ ४५ ॥

प्रश्रितं परिपाहि त्वं संश्रितत्वामिमं जनम् ।
पादपातावधिः क्रोधो महतां हि महानपि ॥ ४६ ॥

रुदां परित्यज्य मुदां गृहाण
विदाङ्कुरु त्वं हि विदां पुरो(गे ? गा) ।
अनिष्टमिष्टं च विधातुमीष्टे
दिष्टं विशिष्टं खलु विष्टपेऽस्मिन् ॥ ४७ ॥

---

संक्षेप्यत इति सर्वनामत्वाद् 'आमि सर्वनाम्नः सुट्' (पा० सू० ७-१-५२) इति सुट् ॥ ४४ ॥

आधौ सति कथं क्षमा स्यादित्यत्राह—अक्षीणमित्यादि । क्षपय नाशय । 'क्षै जै षै क्षये' इत्यस्माद् णिचि 'अर्तिह्री–' (प० सू० ७-३-३६) इति पुकि लोट् । अयं मिदिति घटादौ ध्वनतावुक्तत्वाद्ध्रस्वः । ईदृशमाधिं कथं क्षपयेयम् इत्यत्राह—भद्रे इति । दुस्सहतरापकारिणि कथं प्रसीदेयमित्यत्राह—गुरुप्रमोदायेति । परं केवलम् ॥ ४५ ॥

एवं बहुप्रकारमुक्तेऽपि कोपशोकावेशां ताम् आलक्ष्य पुनरपि तन्निरसनोपायं प्रकारान्तरेणाह श्लोकद्वयेन—प्रश्रितमित्यादि । संश्रिता त्वं येन सः संश्रितत्वम् ॥ ४६ ॥

रुदामित्यादि । विदाङ्कुरु विद्धि । त्वमेव बुद्ध्या विमृशेति भावः । तत्सामर्थ्यमाह – विदां पुरोगे(इ ?)ति । रुदां मुदामिति हलन्तादपि टाब् वेति भागुरिपक्षे टाप् । विदाङ्कुरु इति 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' (पा० सू० ३-१-४१) इति लोटि आम् निपातितः । विदां विदुषीणाम् । वेत्तीति वित् । क्विप् च' (पा० सू० ३-२-७५) इति क्विप् । ईष्टे ईशो भवति । 'ईश ऐश्वर्ये' लट् । दिष्टं दैवम् ॥ ४७ ॥

कान्तारतो घोरतरक्षुरक्षो-
वृतात् पुरीं मेऽनुजिघृक्षया त्वम् ।
साधीयसीं साधय साध्वि! साधुः
साधौ जने साधुतरानुकम्पः ॥ ४८ ॥

भृगूद्भवे! पुत्रभुजिष्यभार्या
राज्यं विशालं विविधं च वित्तम् ।
यदस्ति चान्यन्मम वस्तुजातं
तवाद्य कृत्स्नं विदधे विधेयम् ॥ ४९ ॥

श्रुत्वा च तद्वाचमुवाच बालिका
सर्वं त्वदीयं तु मदीयमेव चेत् ।
दासीसहस्रेण युता सुतैव ते
दासीवदासीत सदा मदालये ॥ ५० ॥

---

एवं बहुविधैरपि अनुनयवचनैः तां तदवस्थामेवालक्ष्य वनात् पुरीगमनानुवादोऽपि मम परमानुग्रह इति मन्यमान आह—**कान्तारत** इति । घोरतरक्षुरक्षोवृताद् इत्यनेन तवात्रावस्थितिः ममात्यन्तपीडावहेति प्रकाश्यते । अनुजिघृक्षया अनुग्रहीतुमिच्छया । साधीयसीम् अतिशयेन साध्वीम् । साधय व्रज । साधौ समनःपीडे । साधुः साधाविति । साधूनां हि महत्तराधियुक्तेषु अगणितनिखिलापराधं दया समुत्पद्यते इत्यर्थः । अतो भवत्या मयि अनुजिघृक्षा स्यादेवेति भावः ॥ ४८ ॥

अनन्तरमुपायान्तरमन्तरजानन् सर्वस्वसमर्पणेनापि एनां प्रसाद्य नगरीं नेष्यामीति निश्चित्याह—**भृगूद्भवे** इत्यादि । भुजिष्याः किङ्कराः । 'नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः' इत्यमरः । कृत्स्नं सकलं । कृत्यते व्याप्यते स्थानादिकम् अनेनेति कृत्स्नम् । 'कृती वेष्टने' । विदधे करोमि । विधेयं, सत्यं ब्रूहीत्यादिवचनैराचार्येण विधातव्यत्वाद् विधेयः । अत्र तु अधीनमात्रवचनः ॥ ४९ ॥

**श्रुत्वे**त्यादि । बालिका, राज(क)न्यायास्तस्या दासीत्वापादनं न स्वन्तं स्यादित्यजानती । आसीत 'आस उपवेशने' । 'स्यादिन्द्रवंशा ततजै रसंयुतैः' ॥ ५० ॥

अनन्तरम् आत्मतनयातर्जितेन जर्जरितमतेः ऊर्जस्वतीसुतायाः ऊर्जस्वतीं सरस्वतीं दुःश्रवाम् उपश्रुत्य 'कथमद्य दिष्टबलादखिलजनमान्या ममापि कन्या देवयान्या भुजिष्यतां भविष्यत' इति भृशं दुर्मनायमानोऽपि भृगुपतेर्भीरुः अमरवैरिवीरोऽसौ, 'अस्मत्कुलगुरुं प्रतायमानगुरुतरक्रोधं प्रसादयितुं देवयान्याः प्रपन्नविपिनावन्या दासीभावमासीदेति दितिकुलशर्मनिष्ठां शर्मिष्ठां शंसे'ति सङ्गतिकानामसङ्गतां सन्देशहरां सपदि सन्दिदेश ॥

निजस्वामिनियोगेन ततः सा दूतिका जवात् ।
सदेशं वार्षपर्वण्या विवेश विवशाशया ॥ ५१ ॥

आयान्तीं दूतिकां तां द्रुतमतिविधुरां दूरतो रूपयन्ती
यान्ती सम्भ्रान्तिमन्तः स्वपितुरथ ततस्तावदाज्ञाय चाज्ञाम् ।
शर्मिष्ठा शर्म निर्मान्त्यखिलदनुभुवामूढदासीसहस्रा
सास्नायाः सा पदान्ते सपदि समपतद् देवयान्याः समन्योः ॥५२॥

अवददियमथैनामेतदेनो हि मृष्यं
रुषितपरुषितास्ये! दास्यमेषा विधास्ये ।
ननु तव विनता सा दैवतो दुर्निवारा-
दतिचिरमयि भद्रे! हन्त कद्र्वाः पुरेव ॥ ५३ ॥

---

अनन्तरमित्यादि । ऊर्जस्वतीं शक्तिमतीम् । दुःश्रवां दुःखेन श्रूयत इति दुःश्रवा । 'ईषद्दुस्सुषु–' (पा० सू० ३-३-१२६) इति खल् । भविष्यते प्राप्स्यति । दुर्मनायमानः दुर्मना भवन् । भृशादित्वात् क्यङ् । भीरुः 'भियः क्रुक्लुकनौ' (पा० सू० ३-२-१७४) इति क्रुः । प्रतायमानः वर्धमानः । दितिकुलशर्मनिष्ठाम्, अत्र तस्या वैमुख्यं न स्यादिति भावः । सङ्गतिकानामसङ्गतां सङ्गतिकानामयुक्ताम् । सन्देशहरां दूतीम् ।

निजेत्यादि । सदेशं सविधम् । वार्षपर्वण्याः शर्मिष्ठायाः ॥ ५१ ॥

आयान्तीमित्यादि । रूपयन्ती पश्यन्ती । निर्मान्ती निर्मातुमित्यर्थः ॥ ५२ ॥

अवददित्यादि । मृष्यं सह्यम् । 'ऋदुपधाच्च–' (पा०सू० ३-१-११०)

मानिनी देवयानी सा श्रुत्वा दैत्यसुतोदितम् ।
बभाषे परुषं तस्याः स्मरन्ती पूर्वदुर्वचः ॥ ५४ ॥

स्तोतुर्ग्रहीतुः कुमतेर्द्विजस्य
पुत्र्याः कथं प्राप्स्यसि दास्यमस्याः ।
स्तुत्यस्य दातुर्विमलाशयस्य
दैतेयनेतुर्दुहिता हिता त्वम् ॥ ५५ ॥

नवक्षतपतत्क्षारसदृक्षसकलाक्षराम् ।
आकर्ण्य ब्राह्मणीवाणीमराणीदासुरायणी ॥ ५६ ॥

बन्धूनामाधिसिन्धौ महति निपततां कार्यमार्ये! जवेन
श्रेयः श्रेयोभिकामैरिह जगति जनैः सर्वदा सर्वथापि ।
दास्ये तदे सर्वहास्येऽप्ययि तव निरता नित्यमुत्सेकहीना
वत्स्यामि त्वत्सकाशे मम खलु निखिलं स्वामिनि! त्वद्विधेयम् ॥

---

इति क्यप् । रुषितं रोषः । नपुंसके भावे क्तः । एषा एतत्कालविशिष्टा । एतस्मिन् क्षण एव (इत्यर्थः?) कृततदुचितसन्नाहेति यावत् ॥ ५३ ॥

मानिनीत्यादि । तदानीमपि मानस्यानपगमः प्रकाश्यते । उदितं वचनम् ॥ ५४ ॥

स्तोतुरित्यादि । स्तवनं कुर्वतः । 'ष्टुञ् स्तुतौ' । ग्रहीतुः प्रतिग्रहीतुः ॥ ५५ ॥

नवेत्यादि । ब्राह्मणीत्यनेन वाण्यास्तीक्ष्णत्वं प्रकाश्यते । 'नवनीतं हृदयं ब्राह्मणस्य वाचि क्षुरो निहितस्तीक्ष्णधारः । विपरीतमुभयं क्षत्रियस्य वाङ् नवनीतं हृदयं तीक्ष्णधारम् ॥' इति महाभारतोक्तेः । यद्वा ऋजुत्वाद् दाक्षिण्याभावः प्रकाश्यते । अराणीद् उक्तवती । 'अण रण वण भण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः' । आसुरायणी असुरपुत्री । 'कौरव्यमाण्डूकाभ्यां च' (पा० सू० ४-१-१९) इत्यत्र चकाराद् आसुरेश्च ष्फः । फस्यायनादेशः । षित्वाद् ङीष् । असुरस्यापत्यम् आसुरिः । ततः स्त्रियाम् आसुरायणी ॥ ५६ ॥

बन्धूनामित्यादि । उत्सेको गर्वः ॥ ५७ ॥

नित्याभियुक्तः प्रियमेव ते जनः
सर्वात्मनाप्येष वशी करिष्यते ।
सत्यापयाम्येव भवादृशे जने
को वान्यथाकर्तुमिहाभिवाञ्छति ॥ ५८ ॥

शर्मिष्ठा वचनैरुदारमधुरैः सन्तापसर्वङ्कषै-
रेवं तां शिशिरीचकार चतुरा तातप्यमानां शुचा ।
अत्यन्तातपतापितां नवलतां यद्वत्तुषारैरपा-
मासारैरविलम्बमम्बरतलव्यालम्बिकादम्बिनी ॥ ५९ ॥

तनयां सुनयामेनां निजादेशवशंवदाम् ।
निशाम्याथ व्यथापेतां मुमुदे दनुजेश्वरः ॥ ६० ॥

---

नित्येत्यादि । अयं जनः सर्वात्मनापि ते प्रियं करिष्यते इति वाच्योऽर्थः । वशीत्यनेन प्रियकरणे पीडाभावः । अत्र शब्दशक्त्या ते प्रियं भर्तारमेव वशीकरिष्यते इति ध्वन्यते । सत्यापयाम्येव सत्यमेव आचक्षे । 'सत्याप–' (पा० सू० ३-१-२५) इति णिच् ॥ ५८ ॥

शर्मिष्ठेत्यादि । सर्वं कषति हिनस्तीति सर्वङ्कषः । 'कष खष शिष जष झष शष वष मष रुष रिष हिंसार्थाः' इति दण्डकधातुः । 'सर्वकूल–' (पा०सू० ३-२-४२) इति खश् । 'अरुर्द्विषद्–' (पा० सू० ६-३-६७) इति मुम् । तातप्यमानाम् अत्यर्थं ताप्युक्ताम् । यङ् । यद्वद् यथा । तुषारैः शीतलैः । आसारो वेगवान् वर्षः । कादम्बिनी मेघसंहतिः । 'कादम्बिनी मेघमाला' इत्यमरः ॥ ५९ ॥

तनयामित्यादि । सुनयां शोभननीतियुक्ताम् । गुरोः शापादखिलमपि कुलं नश्येदिति दास्यम् अङ्गीकृतवतीति भावः ॥ ६० ॥

सेयं दासी ममासीदिति दनुजवरो मोदिनीं देवयानी-
मग्रे कृत्वाथ गत्वा व्यधित भृगुपतेरस्य पादे नमस्याम् ।
सोऽप्येनं दानवानामधिपतिमधिकं मानयन्नूनशोको
वास्तव्यस्तत्र वस्त्ये दनुजहितरतो रंरमीति स्म रम्ये ॥ ६१ ॥

भूयस्यनेहसि गतेऽथ भृगोस्तनूजा
प्रेष्यापरीतवृषपर्वसुतानुयाता ।
प्रक्रीडिता प्रमदभारभृशान्तरङ्गा
स्वैरं व्यगाहत तदेव वनं कदाचित् ॥ ६२ ॥

स्वादं स्वादं फलमुपहृतं बालिका बालसालात्
पायं पायं शिशिरसुरभि स्वादु तोयं समोदम् ।
वेशं वेशं बहलभसलं मञ्जुलं कुञ्जगेहे
गायं गायं मधुरमधुरं ताभिरेषाभिरेमे ॥ ६३ ॥

---

सेयमित्यादि । मोदिनीं मोदवतीम् । नमस्यां 'नमो वरिवश्चित्रङः—' (पा० सू० ३-१-१९) इति क्यच् । नमसः पूजायाम् । वास्तव्यः वसन् । 'वसेस्तव्यत् कर्तरि णिच्च' (वा०) इति तव्यत् । वस्त्यं भवनम् । 'धिष्ण्यं धाम निकेतनं च सदनं वस्त्यं च वास्तु क्षयः' इति हलायुधः । रंरमीति स्म अत्यर्थं रेमे । 'रमु क्रीडायाम्' । यङ्लुक् ॥ ६१ ॥

अथ विवाहसङ्घटनार्थं द्वारमुद्धारयति—भूयसीत्यादि । बहुतरे । प्रक्रीडिता क्रीडितुमारब्धा । 'आदिकर्मणि क्तः—' (पा० सू० ३-४-७१) इति कर्तरि क्तः । स्वैरं स्वच्छन्दम् । स्वबुद्ध्यनुसारेण ईरते गच्छतीति स्वैरः । 'ईर गतौ' पचाद्यच् । स्वादीरेरिणोर्वृद्धिर्वक्तव्या । 'मन्दस्वच्छन्दयोः स्वैरः' इत्यमरः । व्यगाहत प्रविष्टा । 'गाहू विलोडने' । तदेव, यत्र प्राग् ययातिना कूपादुद्धृताभूत् ॥ ६२ ॥

स्वादमित्यादि । स्वादं स्वादमित्यादिषु चतुर्षु 'आभीक्ष्ण्ये णमुल् च' (पा० सू० ३-४-२२) इति आभीक्ष्ण्ये णमुल् । आभीक्ष्ण्यं पौनःपुन्यम् । बहलभसलं बहुलभ्रमरम् । 'अलिर्द्विरेफो लोलम्बो भसलः पुष्पलोलुपः' इत्यभिधानरत्नमाला ॥ ६३ ॥

तदैव स महीपालो ययातिरुपयातवान् ।
उदन्ययोदकान्वेषी मृगयायासजन्यया ॥ ६४ ॥

तदनु मनुजपुङ्गवोऽयं मङ्गलाङ्गभङ्गिभाजनानाम् इङ्गभृङ्गपोतसुन्दरापाङ्गानाम् अङ्गमेजयरुचिरगाङ्गेयालङ्कारहारिणीनां मधुरतरहेलानाम् मध्ये महेलानामरं भासमानां रम्भासमानां तारकानिकरान्तरे चन्द्रलेखामिव सान्द्रलावण्यामृतवर्षिणीं वार्षपर्वणीं निखिलवरवर्णिनीवरां निर्वर्ण्य सहसा मनसि जातं कमपि मनसिजातङ्कमपिदधानः पुनरनयानुकृतविनयम् आपादितपादसंवाहनां देदीप्यमानां देवयानीमपि प्रेक्ष्य सरसमिमे समप्राक्षीत् ॥

युवकां युवलोकलोचनानां
नवपीयूषशलाकिकायमाने ।
कतमत् किल जन्मना कुलाग्र्यं
चरितार्थं प्रचरीकृथः प्रथीयः ॥ ६५ ॥

---

तदेत्यादि। उदन्यया पिपासया। 'अशनायोदन्य–' (पा० सू० ७-४-३४) इति निपातः। जन्यया उत्पन्नया ॥ ६४ ॥

तदन्वित्यादि। इङ्गः चलः। अङ्गम् एजयति राजयत इत्यङ्गमेजयः। 'एजृ भेजृ भ्राजृ दीप्तौ'। एजेः खश्। गाङ्गेयं स्वर्णम्। 'गाङ्गेयं स्याद् गैरिकं भूरि चन्द्रं राः कल्याणं निष्कमष्टापदं च' इति हलायुधः। हेला विलासः। 'शृङ्गारप्रौढिमा हेला भावाख्यो यौवने हि यः'। अरम् अत्यर्थम्। वरवर्णिनी स्त्रीषु उत्तमा। निर्वर्ण्य विलोक्य। सहसा अवितर्कितमेव। अपिदधानः तिरोदधत्। समप्राक्षीत् पृष्टवान्।

युवकामित्यादि। युवाम्। 'अव्ययसर्वनाम्नाम्–' (पा० सू० ५-३-७१) इति स्वार्थेऽकच्। शलाकिकायमाने शलाकिकेव आचरन्त्यौ। 'कर्तुः क्यङ्–' (पा०सू० ३-१-११)इति आचारे क्यङ्। कतमत् किम्। 'वा बहूनां जाति–' (पा० सू० ५-३-९३) इति डतमच् अजातेः प्रश्नेऽपीष्टम्। 'अदड्

एवमात्मना युक्तमनुयुक्तयोरनयोः दैत्यगुरुदुहिता निवेदितगोत्रनामादिनिखिलवृत्तान्तः प्रोक्तात्मीयवृत्तश्च रूपेण परमधन्यां दनुजकन्याम् असुलभां मन्यमानः सद्य एव यातुमयमुद्युयोज ॥

जगौ तद्गमनोद्योगदर्शनोद्विग्नमानसा ।
तदानीं देवयानी तं कामिनी मेदिनीपतिम् ॥ ६६ ॥

क्षितिपतिकुलमौले! दासिकाभिः सहाभि-
र्द्रुतमहमनुयामि प्रेष्ठ! शर्मिष्ठया च ।
अयि मम भव कान्तः कान्तिपीयूषसिन्धो!
निखिलगुणनिधिं त्वां का न वा कामयेत ॥ ६७ ॥

तदनु मनुजवरोऽयम् इमां दनुजगुरुदारिकाशारदां निशम्य धर्म्यां वाणीम् अवाणीत् ।

---

डतरादिभ्यः–' (पा० सू० ७-१-२५) इति अद्डादेशः । चरितार्थं कृतार्थम् । प्रचरीकृथः अत्यर्थं कुरुथः । कृञो यङ्लुक् । प्रथीयः अतिशयेन पृथु । 'द्विवचनविभज्य–' (पा० सू० ५-३-५७) इति ईयसुन् । कुलस्य श्रेष्ठत्वं प्रसिद्धत्वं चाकृत्यैव ज्ञायत इति भावः ॥ ६५ ॥

एवमित्यादि । अनुयुक्तयोः पृष्टयोः । दनुजकन्याम् असुलभां मन्यमान इति । पराधीनत्वादिति भावः । उद्युयोज उद्युक्तवान् ॥

जगावित्यादि । उवाच । 'कै गै शब्दे' ॥ ६६ ॥

क्षितिपतीत्यादि । प्रेष्ठः अतिशयेन प्रियः । 'अतिशायने–' (पा०सू० ५-३-५५) इति इष्ठन् । 'प्रियस्थिर–' (पा० सू० ६-४-१५७) इति प्रियशब्दस्य प्रादेशः ॥ ६७ ॥

तदन्वित्यादि । धर्म्यां धर्मादनपेताम् । 'धर्मपथ्यर्थन्यायाद्–'(पा० सू० ४-४-९२) इति यत् । अवाणीद् उक्तवान् ॥

स्नुषा स्वसा स्वैरचरी सगोत्रजा
परस्य भार्या पतिता च भिक्षुकी ।
वरावरा चेति विवाहगर्हिता-
स्ततो वरां त्वां न विवोढुमुत्सहे ॥ ६८ ॥
निशम्याथ विशालाक्षी विशामीशस्य तस्य गाम् ।
उदीरितवती वाचमुदीरितमनोभवा ॥ ६९ ॥
न चेह यत्नाहितपाकभागिनः
पचेलिमस्येव फलस्य माधुरी ।
तथापि नाथामितमन्मथव्यथां
नरेन्द्र! नाथामि जहीहि मैव माम् ॥ ७० ॥
सञ्जगौ स च न धृञ्जिता ह्ययं
त्वां जनोऽद्य भृगुकुञ्जराद् भिया ।
वञ्चिते द्विजवरेऽञ्चिते रुषं
पञ्चिते क इह मुञ्चते शुचम् ॥ ७१ ॥

---

स्नुषेत्यादि । स्वैरचरी स्वच्छन्दा । 'चरडि'ति पचादौ निपातनात् टित्त्वात् ङीप् । सगोत्रजा सगोत्राद् जाता । वरा उत्कृष्टवर्णा । 'जतौ तु वंशस्थमुदीरितं जरौ' ॥ ६८ ॥

निशम्येत्यादि । विशां नृणाम् । 'द्वौ विशौ वैश्यमनुजौ' इत्यमरः । उदीरितवती उक्तवती । उदीरितः वर्धितः ॥ ६९ ॥

न चेत्यादि । यत्नाहितपाकभागिनः प्रयत्नपक्वस्य । पचेलिमस्य स्वयमेव पक्वस्य । माधुरी माधुर्यम् । नाथामि याचे । जहीहि त्यज ॥ ७० ॥

एवं दीनदीनामस्या वाणीमाकर्ण्य कृपार्द्रहृदयो भार्गवस्यानुमतिर्जाता चेदिमां परिणेष्यामीति निश्चित्याह—सञ्जगावित्यादि । उक्तवान् । धृञ्जिता गन्ता । 'ध्रज ध्रजि धृज धृजि ध्वज ध्वजि गतौ' । भृगुकुञ्जराद् भृगुश्रेष्ठात् । अञ्चिते पूजिते । 'अन्चु गतिपूजनयोः' । द्विजवरे रुषं *वञ्चिते गते सति । †'पचि विस्तारवचने' ॥ ७१ ॥

---

* 'वन्चु गत्यर्थः' इति पुस्तकारे । † 'अत्र किञ्चिल्लुप्तं' भाति ।

श्रुत्वा धात्रीशवाणीं भृगुपतिदुहिता पञ्चबाणप्रणुन्ना
मा भैषीर्भार्गवात् त्वं क्षणमिह नृपते! तिष्ठ भूयिष्ठकीर्ते! ।
प्रोच्यैवं प्राज्यनीतिं पितरमुपतदं साथ नीत्वा तमूचे
तातास्मानर्पयास्मै प्रथमकरजुषे नाहुषायेति नम्रा ॥ ७२ ॥

श्रोत्रियः श्रोत्रयित्वा तां शारदामुशनाः पुनः ।
पुत्रीं धात्रीभृदासक्तां विदन्निदमुवाच तम् ॥ ७३ ॥

'अयि सुधांशुवंशवतंस! वसुधापते! मया विसृष्टाम् अस्पृष्टदोषाम् अस्मदात्मजाम् उपयन्तुरयं तु वर्णसङ्करजनिरवर्णस्तव मत्प्रभावदल्पोऽपि नोत्पद्येत। तदस्या हस्तम् अस्तशङ्कमह्नाय गृहीष्व। किञ्च चञ्चलाक्षीयमस्या दास्यकर्मनिष्ठा वार्षपर्वणी शर्मिष्ठा सदा विहितसहासिकाभिः दासिकाभिराभिः समं सम्माननीया। नेयमुपह्वर उपह्वानीया च' इति शंसितो महीशासिता महीयसीं रतिं दनुजदुहितरि दधानः प्रधानभूतां कूकुदेनानेन भृगुकुलककुदेन दत्तां देवयानीं पाणौकृत्य प्रतिष्ठासुरसौ प्रकृष्टादरममुं प्रणनाम ।

---

श्रुत्वेत्यादि । उपतदं तत्समीपम् ॥ ७२ ॥

श्रोत्रिय इत्यादि । श्रोत्रिय इत्यनेन धर्मसूक्ष्मज्ञता प्रकाश्यते । श्रोत्रयित्वा श्रोत्राभ्यां श्रुत्वा । 'कर्तृकरणाद्धात्वर्थे' (ग०सू०) णिच् । कर्तुः करणाद् धात्वर्थ इति सूत्रार्थः ॥ ७३ ॥

अयीत्यादि । विसृष्टां दत्ताम् । उपयन्तुः परिणेतुः । वर्णसङ्कराज्जनिः उत्पत्तिः यस्य सः । 'जनिरुत्पत्तिरुद्भवः' इत्यमरः । अवर्णः अपवादः । उपह्वरे रहः । 'रहोऽन्तिकमुपह्वरे' इत्यमरः । उपह्वयते मन्त्रालोचनार्थं धीसचिवमत्र इत्युपह्वरं, रहः। उपह्वानीया आह्वानीया। अनीयरोऽशित्त्वादात्त्वम्। 'ह्वेञ् स्पर्धायां शब्दे च'। कूकुदेन 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः' इत्यमरः। पाणौकृत्य उपयम्य । 'नित्यं हस्ते–' (पा० सू० १-४-७७) इति गतित्वात् 'कुगतिप्रादयः' (पा०सू० २-२-१८) इति समासः। प्रतिष्ठासुः गन्तुमिच्छुः ॥

अथ पृथुलानन्दथोरस्य भूगुपोरास्येन्दुतः इदं वचनामृतम् अस्यन्दत ।

प्रोद्यत्प्रोद्दामधामप्रकरहिमकरश्रीझरीसोदरीभि-
स्त्रैलोक्यं कीर्तिभिर्द्रागतनु सुरभयन् स्वर्धुनीस्पर्धिनीभिः ।
भ्रातस्त्वं सुप्रजस्त्वं नरवर! नचिरादाप्तवानात्तमोदं
धात्रीमैश्वर्यदात्रीं पृथुमहसि वसन्नालये पालयेथाः ॥ ७४ ॥

प्रकाशितार्थप्रकराभिराभिः
समेधयामास स गोभिरेनम् ।
राजानमारादवतिष्ठमानं
सन्मार्गनिष्ठं सवितेव काव्यः ॥ ७५ ॥

पुत्र्याः प्रेमैकपात्र्या लघुसमुपनतप्रस्थितेर्विप्रवास-
ध्यानादाध्यानभाजा वरवरवरणान्मोमुदेनापि तेन ।
काव्येनाव्याजमेवं नयनजलकणानस्यताशास्यमानो
मानिन्या देवयान्या सह स नरवरो निर्जगाम स्वधाम ॥७६॥

---

अथेत्यादि । आनन्दथुः आनन्दः । 'ट्वितोऽथुच्' (पा० सू० ३-३-८९)इत्यथुच् । अस्यन्दत स्रुतम् ॥

प्रोद्यदित्यादि । श्रीझरी शोभाप्रवाहः । भ्रातः, भ्रातः इत्यनेन स्नेहपात्रता लक्ष्यते । प्रेम्णः स्थिरत्वं व्यङ्ग्यम् । शोभना प्रजा यस्य सः सुप्रजाः । 'नित्यमसिच्–' (पा० सू० ५-४-१२२) इत्यसिच् समासान्तः । 'तस्य भावस्त्वतलौ' (पा० सू० ५-१-११९) इति त्वः । अत्र प्रोद्यदित्यादिविशेषणाभ्यां सुरभयन्नित्यनेन (च) कीर्तीनां कविसमयसिद्धानि धावल्यमाधुर्यसौरभ्याण्युक्तानि ॥ ७४ ॥

प्रकाशितेत्यादि । अर्था अभिधेयाः, पदार्थाश्च । गोभिः वाग्भिः, रश्मिभिश्च । राजानं नृपं, चन्द्रं च । आरात् समीपे, दूरे च । सन्मार्गे सतां मार्गे, खे च ॥

पुत्र्या इत्यादि । लघु सहसेत्यर्थः । आध्यानम् उत्कण्ठा । मोमुदेन अत्यर्थं मुदितेन, यङ्लुक् । मानिन्या अभिमानयुक्तया, स्वोत्साहसाधितनिजेप्सितयेत्यर्थः ॥ ७६ ॥

तदनु मेदिनीपतिः स्वाहेव शुक्रजाताभिकाङ्क्षितात्मा, भार्गवीव परजनार्दनमनाः, प्रसीददसीमदासीविभासितोदारदारपरीतात्मसन्दर्शन-कन्दलितमन्देतरानन्दवन्दिवृन्दवाद्यमाननिरवद्यापदानः लोकमहित-विवाहमहविलुलोकयिषुपौरलोकपरिलालितललितवारविलासिनीविविध-विलासविलोकनीयां पोपुष्यमाणवादित्रघोषजोघुष्यमाणां विधुरीकृत-विबुधपुरीं(वरीयसीं)पुरीमुपेतकुतुकमुपेत्य दैत्यराजतनयाम् अतिक्रमनीय-कायाम् अनुगतदासीनिकायां अतिकामनीयकायाम् अशोकवनिकायां निरतिशयं निलयं विधायात्र निधाय निजमनोरथपम्फुलासंफुल्लहृदय-पङ्कजया जाजायमानमनसिजया जायया समम् अरंरम्यत ॥ ततश्च—

कदाचिदस्यामुदपादि मेदिनी-
विनेतुरस्मात् सुविनीतमानसः ।
यदुर्यदीयान्वयभूः स्वभूरभूत्
स तुर्वशुर्वा यवना यतोऽभवन् ॥ ७७ ॥

---

तदन्वित्यादि । शुक्रेऽग्नौ जाताभिकाङ्क्षित आत्मा मनो यस्याः, शुक्रजातया देवयान्या अभिकाङ्क्षित आत्मा (स्वं? स्वः) यस्य, सा च स च । भार्गवी लक्ष्मीः । परजनार्दने परमपुरुषे विष्णौ, परजनानां शत्रूणाम् अर्दने हिंसने च, मनो यस्याः यस्य च । मह उत्सवः, तं विलुलोकयिषुः विलोकयितुमिच्छुः । जोघुष्यमाणां भृशं शब्दायमानाम् । वरीयसीम् अतिशयेन श्रेष्ठाम् । अतिक्रमनीयः कायो यस्याः ताम् । अतिशयितं कामनीयकं कमनीयत्वं यस्याः तस्याम् । 'योपधाद्—' (पा० सू० ५-१-१३२) इति वुञ् । निरतिशयम्, अतिशेत इत्यतिशयः । 'पचाद्यच् सर्वधातुभ्यो वक्तव्यः' इति भाष्यकृत् । निर्गतः अतिशयः यस्मात् स निरतिशयः, अविद्यमानातिशयित इत्यर्थः । पम्फुला भृशनिष्पत्तिः । यङन्तादप्रत्यये 'यस्य हलः' (पा० सू० ६-४-४९) इति यलोपः । 'उत्परस्यातः' (पा० सू० ७-४-८८) इत्युकारः । जाजायमानः अत्यर्थं जायमानः । यङि 'ये विभाषा' (पा० सू० ६-४-४३) इत्यात्त्वविकल्पः । अरंरम्यत अत्यर्थम् अरमत । 'रमु क्रीडायां' यङन्ताल्लङ् ॥ ततश्च,

लालारसस्नपनकम्रमुखारविन्दौ
लीलारसेन मृदुजानुकरेण मन्दम् ।
लोलालकौ विदधतुर्भवनाङ्कणेषु
बालाविमौ तदनु चङ्क्रमणं क्रमेण ॥ ७८ ॥

अव्यक्तमधुरालापावामुग्धमृदुलस्मितौ ।
सोऽभिनन्दन्निमौ रेमे पृथुकौ पृथुकौतुकम् ॥ ७९ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
द्वितीयः स्तबकः ।

---

कदाचिदित्यादि । उदपादि उत्पन्नः । 'पद गतौ', 'चिण् ते पदः' (पा०सू० ३-१-६०) इति कर्तरि चिण् । स्वभूः भगवान् विष्णुः ॥ ७७ ॥

लालेत्यादि । 'सृणिका स्यन्दिनी लाला' इत्यमरः । जानुकरेणेति, 'द्वन्द्वश्च प्राणितूर्य–' (पा० सू० २-४-२) इत्येकवद्भावः । चङ्क्रमणं गतागतम् ॥ ७८ ॥

अव्यक्तेत्यादि । अव्यक्तोऽत एव मधुर आलापो ययोः । अभिनन्दयन् लालयन् । पृथुकौ अर्भकौ ॥ ७९ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य टिप्पणे कृष्णीये
द्वितीयः स्तबकः ।

दनुजवरतनूजा वत्सराणां सहस्रे
गतवति गुरुशोकादेकदाशोकमेका ।
निभृतमुपगतैवं सा ययाचे ययातिः
पतिरयमिह मे स्याद् देवयान्या यथास्याः ॥ १ ॥

एवमेनमेव मेदिनीनाथं नाथं नाथयन्ती सन्तायमानसन्तापा निजकायकामनीयकेन काममपि कामं कनयन्तं नहुषतनयं तं दरीदृशितुकामा कृशोदरीयं यदृच्छया सविधमुवमागच्छन्तं प्रेमार्द्रया च दृशा निभृतमात्मानम् उपगूहन्तममुम् आलोकयन्ती तत्क्षणोदितहर्षमन्दाक्षसाध्वसाकुलमनाः कथमपि समुपगम्य प्रणयमधुरां प्रणतिम् अतानीत् ।

एषा तदात्वसमुदित्वरचित्तवृत्ति-
भेदाकुला पुलकजालसमावृताङ्गी ।
आसादितावसरसूनशरासनोग्र-
बाणान् निरोद्धुमिह कञ्चुकितेव जाता ॥ २ ॥

---

अथ शर्मिष्ठापरिणयनं प्रस्तौति—दनुजवरेत्यादि अशोकम् अशोकतरुम् । निभृतं रहसि ॥ १ ॥

एवमित्यादि । नाथयन्ती याचमाना । कनयन्तम् अल्पं कुर्वन्तम् । 'युवाल्पयोः—' (पा० सू० ५-३-६४) इति कनादेशः । दरीदृशितुकामा, अत्यर्थं द्रष्टुकामा । अत्र भृशार्थेन सम्यक्त्वमुक्तम् । यङि 'न धातुलोप—' (पा० सू० १-१-४) इति गुणाभावः । उपगूहन्तम् आश्लिष्यन्तम् । 'गुहू संवरणे' स्वरितेत् । गुणे कृते 'ऊदुपधायाः—' (पा० सू० ६-४-८९) इति ऊत् । प्रणयेन, तदनुभावभूतैः कटाक्षवीक्षणरोमाञ्चवेवथुप्रभृतिभिरित्यर्थः, मधुराम् ॥

एषेत्यादि । तदात्वे तत्काले दर्शनसमये इत्यर्थः, समुदित्वरः साधूद्यन्, चित्तवृत्तिभेदः मनोवृत्तिविशेषः, रतिपरिपोष इत्यर्थः, तेन आकुला । कञ्चुकितेव कवचितेव ॥ २ ॥

उर्वीपतेः कुर्वतोऽपि सर्वकण्टकलुण्टनम् ।
पुर एवाविरासंस्ते तच्चित्रमबलाश्रयाः ॥ ३ ॥

सुभगम्भावुका सेयमभिकम्भाविकाथ तम् ।
मधुरामवचद् वाचं विधुरा स्मरसायकैः ॥ ४ ॥

दिष्टयाद्य तप्तरहसं मम दृष्टिवीथी-
माविष्टवानसि चिरार्थितमेव चैतत् ।
तद्दीनलोकपरितापविनोदन! त्वां
किञ्चिद् वदामि कृपणा करुणापयोधे! ॥ ५ ॥

---

उर्वीत्यादि । कण्टका दुष्टाः, रोमोद्गमाश्च । 'सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः' इत्यमरः । लुण्टनं स्तेयम् । अपनयनमित्यर्थः । 'लुण्ट स्तेये' । अबलाश्रयाः अबलः अबला च आश्रयो येषां ते । अबलो दुर्बलः । अबला स्त्री ॥ ३ ॥

सुभ(गे? गम्भावुके)त्यादि । सुभगम्भावुकम् असुभगा सुभगा भूता । 'कर्तरि भुवः–' (पा० सू० ३-२-५७) इति खुकञ् । अत्र च्व्यर्थेन नृपस्य गूढ-वीक्षणादिना अहमिदानीं सुभगा जातेति तन्मनोवृत्तिर्ध्वन्यते । अभिकम्भाविका कमितारं भावयितुम् । ण्यन्ताद् भवतेः 'तुमुन्ण्वुलौ क्रियायाम्–' (पा० सू० ३-३-१०) इति क्रियार्थायां क्रियायामुपपदे ण्वुल् । 'प्रत्ययस्थात् कात्–' (पा० सू० ७-३-४४) इति इकारः । अभिकमिति 'अनुकामिक–' (पा० सू० ५-२-७४) इति निपातः । 'अकेनोः–' (पा० सू० २-३-७०) इति षष्ठीनिषेधः । अवचद् उक्तवती । 'वच भाषणे' युजादिः ॥ ४ ॥

दिष्टयेत्यादि । दिष्टयेत्यानन्दे । तप्तरहसम् अत्यन्तं रहः तप्तरहसमिति हरः । 'अन्ववतप्ताद् रहसः' (पा० सू० ५-४-८१) इत्यच् समासान्तः । तद् एवमतिदुर्लभरहोदर्शनलाभात् ॥ ५ ॥

माता पितापि मम बन्धुजनोऽपि हन्त
सर्वं त्वमेव ननु वेत्सि तदार्तबन्धो! ।
तत्पूरयाशु मनुजेश! मनोरथं मे
बालाङ्गसङ्गसुधया परमुत्सुकास्मि ॥ ६ ॥

किञ्चाहमृतुसमेता पञ्चशरोऽपि प्रसह्य रम्याङ्ग! ।
निशिततरैः शरनिकरैर्मम बत हृदयं दुनोति विदयमयम् ॥ ७ ॥

अवददयमथैनां मानिनि! त्वद्गुणाली-
निगलितहृदयं मां विद्धि विद्धं स्मरेण ।
तदपि भृगुवराज्ञा हन्त वेलेव सिन्धुं
जनमिममिह रुन्धे तत् प्रिये! किं करोमि ॥ ८ ॥

तदनु तदीयनिगदितनिशमनोदितनिजमनोरथनिरोधविशङ्कया विशङ्कटातङ्कविवशतराशया सा विशांपतिं सप्रत्याशमिदं प्रत्यशंसत् ।

---

मातेत्यादि । बालाङ्गसङ्गसुधया पुत्रसमाश्लेषामृते परमत्यर्थम् उत्सुका औत्सुक्यवती । 'प्रसितोत्सुकाभ्यां–' (पा० सू० २-३-४४) इति तृतीया । बाला अहम् अङ्गसङ्गसुधया भवदाश्लेषामृते इत्याभ्यन्तरोऽर्थः ॥ ६ ॥

किञ्चेत्यादि । ऋतुसमेता रजोयुक्ता । 'ऋतुः पुंस्यार्तवं रक्तं पुष्पं च' इति वैजयन्ती । ऋतुसमेतेत्यनेन कालौचित्यम्, पञ्चशरोऽपीत्यनेन विलम्बनासहत्वम् ॥ ७ ॥

अवददित्यादि । मां त्वद्गुणालीनिगलितहृदयं विद्धि । अत एव स्मरेण विद्धम् । निगलितं बद्धमित्यर्थः । निगलवत् करोतीति 'तत् करोति–' (ग०सू०) इति णिचि अनेकाल्त्वात् टिलोपः ॥ ८ ॥

तदन्वित्यादि । तदीयं, 'त्यदादीनि च' (पा० सू० १-१-७४) इति वृद्धसंज्ञायां 'वृद्धाच्छः' (पा०सू० ४-२-११४) इति (छः) । विशङ्कटः विशालः । 'वेः शालच्छङ्कटचौ' (पा० सू० ५-२-२८) इति शङ्कटच् । सप्रत्याशम्, अपवृत्ताया आशायाः पुनःप्रवृत्तिः प्रत्याशा, तया सहितमिति क्रियाविशेषणम् ॥

जीवनापहृति जीवनात्यये
स्त्रीषु नर्मणि विवाहकर्मणि ।
पातकाय न महामतेऽनृतं
सप्ततन्तुषु यथा पशोर्वधः ॥ ९ ॥

किञ्चोदञ्चितया सदैव दयया हे नाथ! ते नाथते
लोकायायमभीष्टदाननियमो जागर्ति धात्रीपते! ।
तस्मादस्मदभीप्सितं दिश भवत्पार्श्वं प्रविष्टो जनः
को वा दुर्लभवस्तुलग्नहृदयोऽप्याभग्नकामो गतः ॥ १० ॥

धर्म्यां रम्यां गिरमिति निशम्योपयम्यैष मोदा-
देनां दूनां मनसिजरुजा रागवेगाकुलात्मा ।
लोलापाङ्ग्या निखिलभुवनोन्मादिलावण्यवेण्या
भागीरथ्या हर इव रहो रामया तत्र रेमे ॥ ११ ॥

अनन्तरमात्मना सहैवं रहसि विहरमाणं दोर्मूलकूलङ्कषनिजकुच-कलशकाठिन्यसर्वंसहममुं सर्वंसहापतिं कमपि कालमुपचरन्ती निरतिशय-

---

जीवनेत्यादि । जीवनापहृति जीवनस्य यापनसाधनस्य अपहरणे अपहर्तरि वा । सम्पदादित्वाद् भावे क्विप्, 'क्विप् च' (पा० सू० ३-२-७६) इति कर्तरि वा । जीवनस्य जीवितस्य अत्यये इह लोके पातकाय न भवेदिति । शर्मिष्ठा रहसि नोपहानीयेति भार्गवाज्ञाया मद्विवाहविषयमन्यथाकरणं विवाहादिषु अनृतस्यादुष्टत्वात् तव न दोषयेति भावः ॥ ९ ॥

किञ्चेत्यादि । अपिच किञ्च अन्यच्च समुच्चये । उदञ्चितया प्रशस्तया । हे नाथ! ते तव । नाथते याचमानाय । 'आशिषि नाथः' (पा०सू० २-३-५५) इति नाथतेः आशिषि एव आत्मनेपदस्य नियमितत्वाद् अत्र परस्मैपदम् ॥१०॥

धर्म्यामित्यादि । धर्म्यां धर्मादनपेताम् । वेणी प्रवाहः । 'वेणी तु केशबन्धे जलस्रुतौ' इति निघण्टुः ॥ ११ ॥

अनन्तरमित्यादि । कूलं कषतीति कूलङ्कषः । 'सर्वकूल–' (पा०सू० ३-२-४२) इति खच् । काठिन्यस्य सर्वंसहं, 'पूःसर्वयोः–' (पा०सू०३-२-४१) इति खच् । अत्र रामः–'असंज्ञार्थमिदं, संज्ञायां तु वक्ष्यति । सर्वंसहः

सम्मदाविष्टा शर्मिष्ठा शर्वाणीव शत्रुवर्गगर्वसर्वङ्कषशक्तियुक्तं प्रीणित-राजशेखरं मह्यां महितं द्रुह्युं नाम कमपि कुमारमामोदितविबुधचक्रं जनयाश्चक्रे ॥

श्रुत्वा दास्यास्तदास्या लघु तनयजनिं म्लायदास्या तदास्या-
स्थानं गत्वाच्छपुत्री विवशमथ सुतावाप्तिमेतामपृच्छत् ।
साप्येनामभ्यधत्त द्विजवरकुलजः कश्चनारीरमन्मां
कान्तस्ते मास्तु शङ्का समजनि च सुतस्तावदेव स्मरामि ॥ १२ ॥

इति मायिकयामुकया दनुजबालिकया निवेदिता तस्या गिरमिमां तथ्यामेव निश्चिन्वाना विगतशङ्कातङ्का देवयानी निजमेव निलयमियमियाय ॥

अनन्तरमन्तरान्तरा केषुचिद्दिनेषु तां दनुजगुरुदारिकाम् उल्लसितरागवेगाम् उल्लापयमानो मदापादकैः पदार्थैर्मत्तामापाद्य उन्मत्तामिव आर्तविविधप्रलापां परिरिरक्षिषुः अक्षीणचेताः कुब्जवामनादीन्

---

सर्वं सम्पादयितुं समर्थः' इति । सर्वंसहापतिं भूपतिम् । शक्तिः आयुधविशेषः, बलं च । राजशेखरः चन्द्रचूडः, नृपश्रेष्ठश्च । विबुधा देवाः, सन्तश्च । चक्रं सैन्यं, समूहश्च ॥

श्रुत्वेत्यादि । जनिम् उत्पत्तिम् । तदास्यास्थानं तस्या निवासस्थानं, बाहुलकाद् भावे क्यप् । सुतावाप्तिमपृच्छत् कस्ते पुत्रदातेति । द्विजवरकुलजः ब्राह्मणवंशजः कश्चन कान्तः माम् अरीरमत् ते शङ्का मास्तु इति बाह्योऽर्थः । द्विजवरेत्यत्र श्लेषेण सोमवंशजः ते भर्ता माम् अरीरमत् । शङ्का मास्तु इत्याभ्यन्तरः । समजनि जातः । 'दीपजन—' (पा० सू० ३-१-६१) इति कर्तरि णिच् ॥ १२ ॥

इतीत्यादि । मायिकया मायावत्या । व्रीह्यादित्वान्मत्वर्थे ठन् । अमुकया असुया । 'अव्ययसर्वनाम्नाम्—' (पा० सू० ५-३-७१) इत्यकच् । 'रुक्तापशङ्कास्वातङ्कः' इत्यमरः ॥

अनन्तरमित्यादि । उल्लापयमानः वञ्चयन् । 'लियः सम्मानन' (पा०सू० १-३-७०) इत्यत्र चकारात् प्रलम्भने तङ् । मदापादकैः मदोत्पादकैः । परिरिरक्षिषुः परिरक्षितुमिच्छुः, सन्नन्तादुः । वामनः ह्रस्वः । उपवदमानः रहसि

आदिश्य अशोकवनिकामाविश्य दनुजराजतनयामुपवदमानो मेदिनी-पतिः अरमयमिमाम् अरमयत् ॥

अनन्तरमनुद्रुह्युं पूरुं च विनयान्वितम् ।
दैत्यपुत्र्यामयं देवयानीजानिरजीजनत् ॥ १३ ॥

तदनु कदाचन,

शुक्रतनूजाप्रहितः शक्रसमानस्तया भिया च युतः ।
प्रक्रीडितुमगमदसावाक्रीडं वार्षपर्वणीसहितम् ॥ १४ ॥

तदनु तया दनुजगुरुतनूजया निजानुकानुकारान् कुमारान् बहुकुमारानिह शर्मिष्ठासदननेदिष्ठभुवि भरितकुतुकं परिक्रीडमानान् परिलोक्य सपदि पोपुष्यमाणरोषकालुष्यभाजा सहसोपसृत्य 'ननु

---

उपच्छन्दनं कुर्वन् । 'भासनोप-' (पा० सू० १-३-४७) इति उपमन्त्रणे आत्मनेपदम् । उपमन्त्रणं रहस्युपच्छन्दनम् । उपच्छन्दनम् उपलालनम् ॥

अनन्तरमित्यादि । देवयानीजानिः देवयान्या एव प्रधानमहिषीत्व-प्रसिद्धिरिति द्योत्यते, विनयान्वितमित्यनेन राज्यार्हता च । देवयानी जाया यस्य सः देवयानीजानिः । 'जायाया निङ्' (पा० सू० ५-४-१३४) इति निङादेशः समासान्तः ॥ १३ ॥

तदनु कदाचन कस्यचित् कालस्यापगमे ॥

शुक्रेत्यादि । प्रहितः प्रेरितः । अत्र तस्याः कर्तृत्वोक्त्या 'द्विजवर-कुलजः कश्चनारीरमन्मां कान्तस्ते मास्तु शङ्के'ति शर्मिष्ठोक्तेः तात्पर्यपर्यालोचने सा शङ्का नापगता प्रत्युत प्रवृद्धैवेति द्योत्यते । भिया राज्ञः तद्धृदयपरिज्ञानाद् भीः, शुक्रतनूजा इत्यनेन अलङ्घनीयत्वं सूच्यते, शक्रसमान इत्यनेन भोग-लौल्येन विपत्प्राप्तिश्च । आक्रीडम् उद्यानम् । वार्षपर्वणी शर्मिष्ठा ॥ १४ ॥

तदन्वित्यादि । अनुकः भर्ता । 'अनुकाभिक-' (पा० सू० ५-२-७४) इति निपातः । बहुकुमारान् स्कन्दकल्पान् । 'विभाषा सुपः-' (पा० सू० ५-३-६८) इति बहुच् । नेदिष्ठभुवि अन्तिकतमे प्रदेशे । 'इष्ठनि अन्तिकबाढयोः-' (पा० सू० ५-३-६३) इति नेदादेशः । परिलोक्य दृष्ट्वा ।

परिचारिकाचारसमाचरणैकनिष्ठे! शर्मिष्ठे! नियतं भवती मदप्रिये व्याप्रियते स्मे'ति निगदिता दितिजदुहितेयम् 'अयि भामिनि! भवत्पदकुशेशयाभ्यां शपे त्वत्प्रियलाभलोलुपैव सर्वदा वर्वृतीमि' इति तामधिकमत्सरार्तामात्तकैतवमवर्तयत् ॥

सातङ्का सा सशङ्का पुनरपि नितरां मानिनी देवयानी
को वा तातः किशोराः! प्रवदत भवतामित्यमूनन्वयुङ्क्त ।
धात्र्या धार्ष्ट्यातिरेकात् कथयत न कुतो विप्र इत्येवमुक्ते
प्रान्ते प्रादर्शयंस्ते स्थितमथ नृपतिं तर्जनीसंज्ञया तम् ॥ १५ ॥

---

परिचारिकाचारेत्यनेन अत्यन्तानौचित्यं प्रकाश्यते । नियतं निश्चितम् । मदप्रिये प्रियसम्भोगरूपे मदनिष्टे । व्याप्रियते स्म व्यापृतवती । भामिनि! क्रोधने। 'भाम क्रोधने'। भवत्पदकुशेशयाभ्यां शपे, 'शप उपालम्भने' (वा०)इति तङ् । 'उपालम्भनं वाचा शरीरस्पर्शनम्' इति वृत्तिः । अत्र **हरदत्तः**- 'त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येवंरूपः शपथविशेषः' इति । 'श्लाघह्नुङ्–' (पा० सू० १-४-३४) इति सम्प्रदानसंज्ञा । त्वत्प्रियस्य त्वदिष्टस्येति बाह्यः । प्रियशब्दस्य श्लिष्टत्वात् त्वद्भर्तुः प्राप्तौ सश्रद्धेत्याभ्यन्तरः । वर्वृतीमि अत्यर्थं वर्ते । 'वृतु वर्तने', यङ्लुगन्ताल्लट् । मत्सरेण ऋतां मत्सरार्ता । 'ऋते च तृतीयासमासे-ऽवर्णान्ताद् वृद्धिर्वक्तव्या' (वा०) इति वृद्धिः । 'ऋ गतौ' । अवर्तयद् उक्तवती । वृतु भाषार्थः; अनित्यणिच्कः ॥

**सातङ्के**त्यादि । पुनरपि सातङ्केत्यनेन तया शपथे कृतेऽपि बालेषु प्रियसारूप्यादिना रूढपदा सा शङ्का तदवस्थैवेत्युक्तम् । नितरां मानिनीत्यनेन इममपराधं सद्यः प्रत्यक्षीकृत्य तत्प्रतीकारं करिष्यामीति तस्या व्यवसायः प्रकाश्यते । धात्र्या उपमात्रा । 'धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि' इत्यमरः । धार्ष्ट्यातिरेकात् प्रागल्भ्यातिशयात् । 'ञि धृषा प्रागल्भ्ये' । तस्मात् क्तः, ष्यञ् । 'निस्साध्वसत्वं प्रागल्भ्यं प्रयोगेषु च सर्वत्र' इति **भावप्रकाशः** । तर्जनीसंज्ञया तर्जन्या कृतार्थसूचनया । 'संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचने' इत्यमरः ॥ १५ ॥

आज्ञाय राज्ञो निकृतीरथासावुद्दामधामा गिरमुद्ववाम ।
निरित्वरक्रोधभरातिरक्तनेत्रेण रूक्षं मुहुरीक्षमाणा ॥ १६ ॥

शशाङ्कवंशजनुषो नाहुषेरुचितं तव ।
प्रेष्यया यद्रतिं प्राज्ञ! प्रच्छन्नं सम्प्रयच्छसे ॥ १७ ॥

प्रभो! दासीं प्रकुर्वाणः प्रमत्तहृदयो भवान् ।
प्रवर्धमानगर्धां मामगर्धयत हा कथम् ॥ १८ ॥

कृत्वाविचारं कुपतेऽपकारं
क्षोदिष्ठ! मह्यं शठ! तिष्ठसे यत् ।
धिग् धिक् चरित्रं तव धिक् च राज्यं
धिक् सौहृदं धिक् च बहुज्ञभावम् ॥ १९ ॥

---

आज्ञायेत्यादि । निकृतीः शाठ्यानि । उद्दामधामा क्रोधेन ज्वलन्ती । उद्ववाम उदीरयामास इत्यर्थः । 'टु वमु उद्गिरणे' । अनेन श्रोतॄणामसह्यत्वं व्यज्यते । निरित्वरेण साधु निर्गच्छता । रूक्षं परुषम् ॥ १६ ॥

शशाङ्केत्यादि । नहुषस्यापत्यं पुमान् नाहुषिः । उचितमिति काक्वा प्रश्नः । नोचितमित्यर्थः । यद्वा त्वद्वंशकूटस्थपितृपर्यालोचने उचितमेवेदम् । सोमो हि पुरा भोगलौल्येन तारां नाम बृहस्पतेर्दारान् अपहृतवान् । नहुषस्तु पुरुहूतजायाम् अभिलषितवान् । प्रेष्यया दास्यै । * अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् इति तृतीया । सम्प्रयच्छसे ददासि 'दाणश्च सा चेत्—' (पा० सू० १-३-५५)इति तङ् ॥ १७ ॥

प्रभो! इत्यादि । दासीं प्रकुर्वाणः अविचार्य अभिगच्छन् । 'गन्धनावक्षेपण—' (पा० सू० १-३-३२) इति साहसिक्य आत्मनेपदम् । गर्धा स्पृहा । 'गृधु अभिकाङ्क्षायाम्' घञ् । अगर्धयत वञ्चितवान् । 'गृधिवञ्च्योः—' (पा० सू० १-३-६९) इति प्रलम्भने तङ् ॥ १८ ॥

कृत्वेत्यादि । कुपते! भूपते । कुत्सितः पतिः इत्यपि स्फुरति । क्षोदिष्ठ! क्षुद्रतर, अल्पमते, अतिनृशंसेति वा । क्षुद्रशब्दाद् 'अतिशायन—' (पा० सू०

---

* 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकम् ।

एनां समानीय निजावरोधनं
भुङ्क्ष्वाद्य भोगानिह निस्सपत्नकम् ।
दास्योचितं दासि! ननु त्वया कृतं
वाचा कृतं दानवधर्मकर्मठे! ॥ २० ॥

एवमवधीरयन्तीयम् अनवधीरयन्ती गुरुचरणम् एव शरणमिति दृढमवधारयन्ती रभसोदितदीर्घश्वसनविचलितेन विगलद्धारावलिना पयोधरेण भरितरुक्पदारविन्दपतितं राजहंसमलमुद्वेजयन्ती भृगुकुल-वैजयन्ती तत्सङ्गमाशया सह सहसा विभूषणावलीं विधूय परिकुचपरि-पतदश्रुधारातारहारालङ्कृता मन्तूयन्तं नितान्ततन्तस्यन्तम् अनुनयन्तं

५-३-५५) इतीष्ठनि 'स्थूलदूर--' (पा०सू० ६-४-१६६) इति यणादिपरलोपः, पूर्वस्य गुणश्च । 'क्षुद्रो दरिद्रे कृपणे नृशंसेऽल्पनिकृष्टयोः' इति वैजयन्ती । मह्यं, 'श्लाघह्नुङ्--' (पा०सू० १-४-३४) इति सम्प्रदानसंज्ञा । शठ! गूढविप्रिय-कारिन्! । तिष्ठसे 'प्रकाशन--' (पा० सू० १-३-२३) इति तङ् । धिक् चरित्रम् इत्यादिषु 'उभसर्व--' (वा०) इति द्वितीया । चरित्रं धिक् । ते चरित्रं निन्दित-मेवेत्यर्थः । राज्यं राजभावम् ॥ १९ ॥

एनामित्यादि । निस्सपत्नकं सपत्नीरहितम् इत्यर्थः । दास्योचितमित्यादिं विपरीतलक्षणा । वाचा कृतम् अलम् । कृतं वारणे । वारणार्थयोगे तृतीया वक्तव्या । कर्मणि घटमाना, चेष्टाम् अत्यर्थं कुर्वाणा कर्मठा । 'कर्मणि घटोऽठच्' (पा० सू० ५-२-३५) इत्यठच् ॥ २० ॥

एवमित्यादि । अवधीरयन्ती निन्दन्ती । ईरयन्ती वदन्ती । रभसाद् वेगात्, क्रोधाच्च । उदितेन दीर्घश्वसनेन दीर्घेण वायुना, दीर्घश्वासेन च (वि)च-लितेन । विगलन्ती धारावलिर्यस्य, विगलन्ती हारावलिर्यस्य स च । पयोधरेण, 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । भरितरुक्पदं पूर्णकान्तिसदनं च तद् अरविन्दं च भरितरुक्पदारविन्दं, तत् पतितं प्राप्तम् । भरितरुग् भरितपीडं यथा तथा अरविन्दसदृशे पदे पतितं प्रगतं च । राजहंसं हंसं, राजश्रेष्ठं च । सङ्गमाशया सहेति सहोक्तिः । परिकुचं कुचयोः । 'परिप्रती अपि सप्तम्यर्थौ' इति माधवः । तार उज्ज्वलः । मन्तूयन्तं कृतापराधमित्यर्थः । 'मन्तू अपराधे' 'रोष इत्यपरे'

**चतुरचाटुवचनैः अनुपदमुपवदमानमेनम् अपदयमपवदमाना माना-कुलमानसा मन्तूयन्ती जनकनिकटमेव जवादटन्ती पृथग्भूय प्रियतमा-गमप्रतीक्षमवस्थितं सात्त्विकं स्वान्तमिव वेगविगलितं धवलोत्तरासङ्गम-प्यनवेक्षमाणा, पल्लवपेलवयोरनयोः पदतल्लजयोर्दवीयसीं पदवीं सत्वरं गत्वरयोः गगनसरस्सरोजवल्लालस्यमानयोः आलस्यमपास्यामीति विचार्येव कबर्या सहसावतीर्य वयस्ययेव भुजाग्रेण मुहुर्मुहुः संवाह्यमान-चरणयुगला, ललाटतटघटितविकटभ्रुकुटितया प्रकटोर्ध्वपुण्ड्रमण्डितेव अविरतस्फुरदधरपुटतया घोरतरसंसारसागरतरणनिपुणतरं मन्त्रमिव जपन्ती कैवल्यभूषितात्मा विष्णुपदरोचिष्णुः अतिरक्तनेत्रा प्रव्रजितेव सर्वैः प्रेक्षमाणा क्षणादभिपत्य पित्रे वैवहित्रं दुश्चरित्रचक्रमावेदयाञ्चक्रे ॥**

---

इति सुब्धातुवृत्तिः । नितान्ततन्तस्यन्तम् अत्यर्थमनुभूयमानशोकम् । 'तन्तस् पम्पस् दुःखे' इति सुब्धातुवृत्तिः । अनुपदं पदे पदे । उपवदमानं सान्त्वनं कुर्वाणम् । 'भासनोपसम्भाषा–' (पा० सू० १-३-४७) इति उप-सम्भाषायां वदेरात्मनेपदम् । उपसम्भाषा सान्त्वनम् । अपवदमाना निन्दन्ती । 'अपाद् वदः' (प० सू० १-३-७३) इत्यात्मनेपदम् । मानेन आकुलम् । 'स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये' । मन्तूयन्ती क्रुध्यन्ती । अटन्ती गच्छन्ती । पृथग्भूय बहिर्निष्क्रम्य । प्रियतमागमं प्रतीक्षत इति प्रियतमागमप्रतीक्षम् । 'ईक्षिक्षमिभ्यां च' (वा०) इति कर्मण्युपपदेऽण् । सात्त्विकं स्वान्तमिवेति उत्प्रेक्षायां धवलत्वं निमित्तम् । उत्तरासङ्गः उत्तरीयम् । दवीयसीं दूरतराम् । गत्वरयोः गमनशीलयोः । 'गत्वरश्च' (पा०सू० ३-२-१६४) इति निपातः । लालस्यमानयोः अत्यर्थं लसतोः । भुजाग्रेण कुटिलाग्रेण । 'भुज कौटिल्ये' । इगुपधलक्षणः कः । हस्ताग्रेण च । संवाह्यमानं, 'संवाहनं मर्दनं स्याद्' इत्यमरः । घटिता बद्धा । 'घट चेष्टायाम्' । कैवल्येन भूषित आत्मा देहो यस्याः । अनलङ्कारेति यावत् । कैवल्यभुवि अपवर्गाश्रयभूते विष्णौ उषितः आत्मा मनो यस्याः सा च । विष्णुपदे आकाशे रोचिष्णुः शोभनशीला । 'अलङ्कृञ्–' (पा०सू० ३-२-१३६) इति इष्णुच् । विष्णुपदमिति

तदानीमेव स देवयानीजानिरपि भृगुवरवाग्वज्रपातातिभीतचेताः सत्वरमुपेत्य दुस्सहतरनिकारानुस्मरणोत्पन्नानल्पबाष्पधोरणीसारणीयमाननयनयानया तनयया सह समासीनमूर्जस्वतीप्राणनाथममुम् ऊर्जस्वलरोषवेगशोणनयनकोणं प्राणंसीत् ॥

अथ समिन्धानरभसभरान्धमानसो निरतिशयतेजोभरनिराकृतदिवाकरः स खलु दिवाचरो लब्धवर्णमपि लब्धावर्णममुं वर्णपालकं सभ्रभङ्गमीक्षमाण एवमाचचक्षे —

साक्षान्नक्षत्रनाथस्त्रिपुरहरजटाजूटसंस्थः किलासौ
कूटस्थो यत्कुलस्य स्मर स हि नहुषो यस्य तातो मनीषी ।
विश्वक्षेमङ्करो यः स्वयमपि सततं धार्मिकः कार्मिको वा
स त्वं सत्यप्रहाता भवसि बत कुतः क्षोणिजाने ! न जाने ॥ २१ ॥

---

लाञ्छनार्थं ध्रियमाणभगवत्पदप्रतिबिम्बं च । तेन रोचिष्णुः । नेत्रं नयनं, वस्त्रं च । प्रव्रजिता भिक्षुकी । विवोढुरिदं वैवहित्रम् । 'वहेस्तुरणिट् च' (वा०)। इटि झलपरत्वाभावाद् ढत्वादिनिवृत्तिः ॥

तदानीमित्यादि । वाग्वज्रं शापः । निकारः परिभवः । बाष्पधोरणी बाष्पप्रवाहः । सारणीयमानं सारणीवदाचरत् । सारणी कुल्या । 'प्रसरः सारणी स्वल्पसरित्' इति विश्वप्रकाशः । ऊर्जस्वलः ऊर्जस्वी । 'ज्योत्स्नातमिस्रा—' (पा० सू० ५-२-११४) इति निपातः । प्राणंसीत् प्रणतवान् ॥

अथेत्यादि । दिवाचरः शुक्रः । 'शुक्रो दूतो दिवाचरः' इति वैजयन्ती । 'लब्धवर्णो विचक्षणः' इत्यमरः । लब्धावर्णं प्राप्तदोषम् । वर्णपालकं राजानम् ॥

साक्षादित्यादि । जटाजूटः जटाबन्धः । कूटं सङ्घातः तत्र प्राधान्येन तिष्ठतीति कूटस्थः । आदिपुरुष इति यावत् । क्षेमं करोतीति क्षेमङ्करः । 'क्षेमप्रिय—' (पा० सू० ३-२-४४) इति खच् । धार्मिकः धर्मं चरन् । 'धर्मं चरति' (पा० सू० ४-४-४१) इति ठक् । कर्मभिः संस्कृतः कार्मिकः । 'संस्कृतम्' (पा० सू० ४-४-३) इति ठक् । क्षोणिः जाया यस्य सः क्षोणिजानिः । 'जायाया निङ्' (पा० सू० ५-४-१३४) ॥ २१ ॥

साध्वेतत् साधु यत् त्वं शिवशिव पठिती धर्मशास्त्रे समस्ते-
ऽप्यन्याय्यं खल्वकार्षीर्युवतिसुखकृता यौवनेनाद्य माद्यन् ।
तस्मान्मच्छासनोल्लङ्घनपर! जरसा तादृशा तूर्णमेव
व्याकीर्णाशेषवर्ष्मा भव धरणिपते छद्मसद्मायितात्मन्! ॥ २२ ॥

इति शप्तो नृपः सोऽभूत् तरसा जरसा वृतः ।
स्त्रैणस्येह कथं न स्युरापदो भुवनत्रये ॥ २३ ॥

अतिरक्ततयैवायं समयं समलङ्घयत् ।
इतीव जरसा सोऽमुमाततान सितं सितः ॥ २४ ॥

तदनु तातप्यमानमना धात्रीपतिरसौ शापमुक्तिलिप्सया शारदा-मेवमुदाजहार ॥

---

साध्वित्यादि । शिवशिवेत्याश्चर्यद्योतकः । पठिती पठितमनेनेति विगृह्य 'इष्टादिभ्यश्च' (पा० सू० ५-२-८८) इति इनिः । धर्मशास्त्रे मानवादौ । 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' (वा०) इति कर्मणि सप्तमी । ज्ञातसकल-स्मृत्यर्थसतत्त्व इत्यर्थः । न्याय्यं न्यायादनपेतम् । तस्मादन्यद् अन्याय्यम् । 'धर्मपथ्यर्थ–' (पा० सू० ४-४-९२) इति यत् । युवतिसुखं करोतीति युवति-सुखकृत् तेन यौवनेन । तादृशा जरया । युवतिसुखं कृन्ततीति च जरापि युवतिसुखकृत् । छद्मनः व्याजस्य । 'व्याजो मिषं छलं छद्म निभं च कपटोऽस्त्रि-याम्' इति वैजयन्ती । सद्मायितः सद्मवदाचरन् आत्मा यस्य ॥ २२ ॥

इतीत्यादि । तरसा उक्तमात्र एव । स्त्रैणस्य स्त्रीसक्तस्य ॥ २३ ॥

अतीत्यादि । सितं धवलम् आततान । अत्र हेतुरुत्प्रेक्षते । अति-रक्ततयेत्यत्र श्लेषः ॥ २४ ॥

तदन्वित्यादि । तातप्यमानं अत्यर्थं तप्तम् । लिप्सया लब्धुमिच्छया । 'स्कोः संयोगाद्योः–' (पा० सू० ८-२-२९) इति सलोपः ॥

अयि जहिहि दयालो! रोषवेगं जनेऽस्मि-
न्नुशन विशतु मा मा कुत्सिता विस्रसा माम् ।
शरणमिह शरण्यं भावयेऽहं भवन्तं
ननु जगति दयार्द्राः साधवो दीनलोके ॥ २५ ॥

त्वत्तनयाविरहभयादिद्धरुजो मे वतैष शापस्ते ।
गण्डस्योपरि पिटकोद्भेदो भृगुवंशतिलक महितमते! ॥ २६ ॥

पादाब्जे भवतो नतोऽस्मि भवतु क्षिप्रं कृपास्मासु ते
पुत्र्यां दैत्यपतेर्गुरो मम परो रागः समुज्जृम्भते ।
नान्यस्यामनुरागिणं जनमिमं जानीहि पाहि प्रभो!
तारुण्यं तरुणीमणेस्तदधुना मा मा वृथास्याः कृथाः ॥ २७ ॥

---

अयीत्यादि । जहिहि त्यज । 'ओहाक् त्यागे' । 'आ च हौ' (पा० सू० ६-४-११७) इति विकल्पेन इकारः । उशन!, 'सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम् । माध्यन्दिनिर्वष्टि' । मा मा विशतु अत्र माशब्दः न माङ् । तेन 'माङि लुङ्' (पा० सू० ३-३-१७५) इति लुङभावः । अत्र प्रविष्टाया अपि जरायाः अप्रवेशनार्थनया तस्याः स्थैर्याभावः प्रार्थ्यते । भवत्कृप-यैषा क्षणादपयात्विति यावत् । शरणं रक्षितारम् । शीर्यत इति शरणं गृहम् । शृणाति रक्षणीयस्य आपदं हिनस्ति इति शरणं रक्षिता । 'शॄ हिंसायाम्' । 'कृत्यल्युटः—' (पा० सू० ३-३-११३) इति कर्तरि कर्मणि च ल्युट् । शरणे श्रयणे साधुः शरण्यः । यद्वा शरणं गृहं तद्वदाश्रयभूतः, शाखादित्वादिवार्थे यः । भावये प्राप्नोमि ॥ २५ ॥

त्वदित्यादि । गण्डस्य गडोः उपरिभागे पिटकाया उद्भेदः ॥ २६ ॥

एवं प्रार्थितेऽप्यनानुकूल्यमालक्ष्य सुतास्नेहपरतन्त्रोऽयम् अनया नीत्या प्रसाद्य इति उरसिकृत्य वक्रोक्त्यासत्योक्तिदोषमपि परिहरन्नाह—पादेत्यादि । कृपा क्षिप्रमस्मासु भवतु । दैत्यपतेर्गुरो! ते पुत्र्यां मम परो रागः समुज्जृम्भते इति बाह्यः । ते कृपा क्षिप्रमस्मासु भवतु । गुरो! मम दैत्यपतेः पुत्र्यां परो रागः समुज्जृम्भते इत्याभ्यन्तरः ॥ २७ ॥

समस्तवस्तूनि निरर्थयन्त्या
शापोत्थया ते जरया रयेण ।
सितत्वमाप्तस्य ममाद्य पुत्र्यां
कथं नु सन्मार्गरते रतिः स्यात् ॥ २८ ॥

एवमभिहितो महितकृपापूरभरितमतिरसौ भृगुपतिः 'अयि वत्स! तव विस्रसा स्यादिति मम सरस्वती न विस्रसा भवेत् । तदेनामेकस्मिन्नुरस्ये विन्यस्यानया सह यौवनं वरिष्ठमनुबोभूयिषीष्ठाः । किञ्च, उदञ्चितवरेण्यपुण्यपूरो राज्यभरभाग् यशोनिधिः प्राज्यतरभाग्यः स सुतो भवताद्' इति युवजरन्तमनुनयपरं तमनन्ताधिभृतम् अनन्ताधिपतिमनुगतादरम् अनुजरीगृहीति स्म ॥

---

समस्तेत्यादि। निरर्थयन्त्या निरर्थानि कुर्वत्या। जरया सितत्वं डिण्डीरपिण्डवत् श्वेतत्वम् आप्तस्य मम अद्य ते पुत्र्यां कथं रतिः स्यादिति बाह्यः। सितत्वं शुक्लत्वमाप्तस्य अद्य मम पुत्र्यां कथं रतिः स्यादिति च स्फुरति। सन्मार्गे रतिर्यस्य सः। एतत् षष्ठ्यन्तं सम्बुद्ध्यन्तं वा॥ २८॥

एवमित्यादि। विस्रसा स्यात् जरा स्यादिति सरस्वती वाणी विस्रसा अनृता। 'मिथ्या मृषा विस्रसानृते।' उरस्ये आत्मसुते। 'उरसोऽण् च' (पा० सू० ४-४-९४) इति यत्। उरसा निर्मित उरस्यः पुत्रः। अत्र आत्मार्थः उरश्शब्दः। अनुबोभूयिषीष्ठाः अत्यर्थमनुभूयाः। यङन्तादाशिषि लिङ्। किञ्च स सुतः उदञ्चितवरेण्यपुण्यपूरत्वादियुक्तो भवतादिति अनन्ताधिपतिं राजनम् अनुजरीगृहीति स्म पुनः पुनः अनुगृहीतवान् इति प्रकृतोऽर्थः। अत्रातीन्द्रियज्ञानवतः भार्गवस्य वचसि विचार्यमाणे सति सहृदयानां हृदि हे उदञ्चितवरेण्यपुण्य पूरो! त्वं राज्यभरभाक् प्राज्यतरभाग्यः ससुतश्च भवतादिति निजपुत्रीवल्लभस्य आज्ञामूरीकरिष्यन्तं पूरुं प्रत्यपि प्रसेदुषा भाव्यवस्थावेदिना भृगुणा आशीः कृतेत्यपि स्फुरति। अत्र भवतादिति मध्यमः। युवैव जरन् युवजरन्। 'युवा खलति–' (पा० सू० २-१-६७) इति समासः॥

नत्वा नृपस्तं समुदाथ पत्न्या
पुरं प्रति प्रीतमनाः प्रतस्थे ।
पुत्रीप्रियाप्त्या परिपूर्णकामो
मोदं प्रपेदे स भृगूद्वहोऽपि ॥ २९ ॥

देवदेश्यो नृदेवोऽसौ देवयान्या समन्वितः ।
जरन् जगाम विवशैः पुरं जनशतैर्वृतम् ॥ ३० ॥

एवं भार्गवशापतो नरपतिर्घोरां प्रपन्नो जरां
नारीणां विरसामसावथ तया सत्रैव पुत्र्या भृगोः ।
सम्प्राप्तः स्वपुरं पुरन्दरपुरप्रख्यं समाख्यद्यदुं
ज्यायांसं जरसं प्रतीच्छ सुत! मे यच्छ त्वदीयं वयः ॥ ३१ ॥

---

नत्वेत्यादि । प्रतस्थे जगाम । धात्वर्थवैपरीत्ये प्रशब्दः । समुदा एवंविधं निकारमितः परं कदाचिदपि न करिष्यतीति प्रसन्नया ॥ २९ ॥

देवेत्यादि । देवदेश्यः प्रायेण देवतुल्यः । अत्र देश्यप्रत्ययेन जराया अनपगमेऽपि तदपगमोपायलब्ध्या प्रसन्नहृदयत्वादतीव शोभमान इति प्रकाश्यते । किञ्च तदनुग्रहेण जराविनिमयसामर्थ्यमप्यस्य जातमिति च प्रकाश्यते । 'ईषदसमाप्तौ–' (पा० सू० ५-३-६७) इति देश्यः । समन्वितः सम्यगन्वितः । अनेन तस्या रोषशान्तिश्च । जरन् जीर्णः । 'जीर्यतेरतृन्' (पा० सू० ३-२-१०४) इति भूते अतृन् । विवशैः, राज्ञो जराभिभूत्या वैवश्यम् ॥ ३० ॥

एवमित्यादि । घोराम् अभीष्टविषयानुभवनिराकरणशीलेति सर्वेषां भयावहाम् । पुरन्दरपुरप्रख्यं पुरन्दरपुरस्येव प्रख्या ख्यातिः यस्य तत् । समाख्यत् आख्यातवान् । 'अस्यतिवक्ति–' (पा० सू० ३-१-५२) इत्यङ् । ज्यायांसं ज्येष्ठम् । वृद्धशब्दस्य ईयसुनि 'ज्य च' (पा० सू० ५-३-६१) इति ज्यादेशः । प्रतीच्छ प्रतिगृहाण । यच्छ देहि । 'पाघ्रा–' (पा० सू० ७-३-७८) इति दाणो यच्छादेशः । त्वदीयं वयः यौवनम् ॥ ३१ ॥

कामानां सुहितो न चास्मि सुत! तत्ते यौवनेनामुना
लालष्ये खलु जुष्यभोग्यनिवहं भोक्तुं सहस्रं समाः।
निर्विद्यालमियन्तमङ्ग! समयं निर्विश्य निर्विण्णधी-
र्विस्रब्धो भव विस्रसामयि! पुरा गृह्णामि चाह्नाय ताम् ॥ ३२ ॥

इति भरिताभिलाषमभिभाषितेन तेन यदुना धर्मसूक्ष्मवेदिना पातालभुवमिव महाबलिपरीतां, वासवमिव वलाभावकृतं, धावल्यजननी-मपि वनिताजनोद्वेजिनीं, वृद्धजनसुलभामपि बालजालस्पष्टदृष्टां, विरसां

---

एवम् आत्मवचोनिशमने खिन्नभावममुमालक्ष्य नूनमयं यावज्जीवमहं जीर्ण एव स्यामिति मन्वान एव मद्वचनं नोरीकृतवानिति शङ्कमानो जीर्ण-ताया अवधिं निर्दिशन् पुनरप्याह — कामानामित्यादि। कामानां सुहितः कामैस्तृप्तः। 'पूरणगुण–' (२-२-११) इति समासप्रतिषेधः। सुहितार्थाः तृप्त्यर्थाः। एतस्मादेव निषेधात् सुहितार्थयोगे करणे षष्ठी अनेनैव ज्ञाप्यते। लालष्ये अत्यर्थमिच्छामि। 'लष कान्तौ' यङ्। जुष्यं सेव्यम्। समाः 'काला-ध्वनोः–' (पा० सू० २-३-५) इति अत्यन्तसंयोगे द्वितीया। निर्विद्य अलं निर्वेदेन अलम्। 'अलंखल्वोः–' (पा० सू० ३-४-१८) इति क्त्वा। निर्विश्य अनुभूय। 'निर्वेश उपभोगः स्यादि'त्यमरः। निर्विण्णधीः विरक्तधीः। पुरा गृह्णामि निश्चितं ग्रहीष्यामि 'यावत्पुरा–' (पा० सू० ३-३-४) इति भविष्यति लट्। अत्र पुराशब्दो निश्चयार्थः, सद्योऽर्थो वा। यावच्छब्दो निश्चयार्थ एव ॥ ३२ ॥

इतीत्यादि। भरितः, 'भृ भरणे' श्ना। धर्मसूक्ष्मवेदिना युवत्वे पित्रे दत्ते सति मदीयेन यौवनेन मन्मातुरेव उपभोगः स्यात्, तदयुक्तमेवेति मत्वेति भावः। महाबलिः असुरः, महत्यो वलयश्च। वलस्य वलासुरस्य, बलस्य शक्तेश्च अभावं करोतीति। 'क्विप् च' (पा० सू० ३-२-७६) इति क्विप्। धावल्यं, 'निसर्गरमणीयो यः स्त्रीणां स धवलः स्मृतः'। तद्भावो धावल्यम्; जरसा शौक्ल्यं च। बालः शिशुः, चिकुरश्च। 'केशाः शिरसिजमूर्धजकचचिकुर-शिरोरुहाः स्मृता वालाः' इति अभिधानरत्नमाला। बिभरिषामि भर्तुमिच्छामि।

जरसं नरर्षभ! न बिभरिषामीति प्रातीपिकेन तेन प्रत्यादिष्टो रुष्टमतिर्ययातिः प्रेमपाशावपाशितोऽपि, 'जाल्म! त्वदन्ववायजन्मानो राज्यभाजो न भवेयुः' इति सत्वरं शप्त्वा दुर्वशाशयः तुर्वशुं द्रुह्युमनुद्रुह्युमप्ययं 'यवनतां यौवनोदय एवा(प्य ? त्य)यं वाहनविहीनतामपि जिहीथाः' इत्यनाश्रवान् अनाश्रितानुक्रोशलेशम् अशाप्सीत् ॥

भृगुशापोत्थजरसा प्रसितोऽपि महीपतिः ।
स भृशं यौवनेनापि प्रसितः किमिदं बत ॥ ३३ ॥

तदनु दुरवसानविषयरसदुरभिनिवेशपङ्किलं विविधविपत्सङ्गसङ्कुलं सङ्कुसुकतापदं सकलतापदमपि हन्त यौवनम् अतिचिरमनुबुभूषुरेव पुरुषवरं पूरुमादरादारादाहूय पुरोवदेव पुरुविनयम् एनमात्माभिमतमभिदधे ॥

---

प्रातीपिकेन प्रतीपं वर्तमानेन । 'तत्प्रत्यनुपूर्वं–' (पा० सू० ४-४-२८) इति ठक् । अवपाशितो बद्धः । जाल्मो जडः । 'जल घातने' घातनं जडत्वम् । जलति बुद्धितैक्ष्ण्याभावादिति जाल्मः । यवनतां यवनत्वम् । अ(प्य ? त्य)यं मृतिम् । जिहीथाः प्राप्नुयाः । अनाश्रवान् अनुक्तकारिणः । 'वचने स्थित आश्रवः' इत्यमरः । अशाप्सीत् शप्तवान् । 'शप आक्रोशे' लुङ् ॥

भृग्वित्यादि । जरसा हेतुना प्रसितः प्रकर्षेण सितः श्वेतोऽपि महीपतिः भृशम् अत्यर्थं यौवनेनापि प्रसितः श्वेतोऽभूत् । किमिदं किमेतत् । बत आश्चर्यमित्यर्थः । इति विरोधः । यौवनेन यौवने प्रसितः प्रसक्तोऽभूदिति परिहारः । अत्र यौवनेनेति 'प्रसितोत्सुकाभ्यां–' (पा० सू० २-३-४४) इति तृतीया । प्रसितः प्रसक्तः ॥ ३३ ॥

तदन्वित्यादि । दुष्टमवसानं येषां ते दुरवसानाः । दुरभिनिवेशः दुराग्रहः । 'निबन्धोऽभिनिवेशः स्याद्' इति वैजयन्ती । सङ्कुसुकता अस्थिरता । 'कस गतौ' 'समि कस उकन्' (उणादि० १९७) कसति गच्छति इति कसुकः अस्थिरः । बाहुलकात् सङ्कुसुक इत्यन्ये । 'चले सङ्कुसुकोऽस्थिरः' इति वैजयन्ती । अनुबुभूषुः अनुभवितुमिच्छुः । पुरुविनयमित्यनेन वचनात्पूर्वमेव अयं मदाज्ञां परिग्रहीष्यतीति राज्ञो बुद्धिरुत्पन्ना इति प्रकाश्यते ॥

पूरो! पुरुकृपापूरपारावारपरायणम् ।
त्वमेवाद्य विपद्यस्यां तदाज्ञां प्राज्ञ! मे कुरु ॥ ३४ ॥

आसन्नमाज्ञातसमस्तवेद्यं
न त्वामृते वत्स! परं प्रपद्ये ।
विक्रीय को वा दधिशिक्यसंस्थं
व्रजेत् प्रतोलीं नवनीतहेतोः ॥ ३५ ॥

अद्याशेषसमुद्यमानपि जवादेषा जरा मेदुरा
दुर्वारा बत दुर्विधेर्विलसितादद्धा दनीध्वंस्ति मे ।
कामः सम्प्रति मां प्रतीह च शरीचापी जरीजृम्भते
तद्दित्सामि च विस्रसां तरुणतां धित्सामि वत्साधुना ॥ ३६ ॥

---

पूरो इत्यादि । परायणम् आश्रयः । पुरुकृपापूरपारावारेत्यनेन कृपायाः अपरिच्छिन्नत्वोक्तेः सर्वव्यापित्वं ध्वन्यते । तेन सर्वज-ाधिनिवारणैकलोलुपस्य तव मदाधिनिवारणे भ्रातॄणामिव कथमुदासीनता स्यादिति द्योत्यते । त्वमेवेत्येवकारेण मन्निदेशे त्वयापि निराकृते अहमशरण एवेति द्योत्यते । अस्यां त्वयापि विदितपूर्वायां विपदि सङ्कटे । प्राज्ञः प्रज्ञावान् । 'प्रज्ञाश्रद्धा—' (पा० सू० ५-२-१०१) इति णः । 'उत्तमश्चिन्तितं कुर्यात् प्रोक्तकारी तु मध्यमः । अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥' इत्यादिकमभिजानासीति भावः ॥ ३४ ॥

आसन्नमित्यादि । प्रपद्ये आश्रये । प्रतोलीं रथ्याम् । 'रथ्या प्रतोली विशिखा' इत्यमरः ॥ ३५ ॥

अद्येत्यादि । दनीध्वंस्ति अत्यर्थं ध्वंसते । 'ध्वन्सु गतौ च' यङ्लुक् । इह च अस्यामवस्थायामपि । जरीजृम्भ्यते अत्यर्थं जृम्भते । 'ज(भ? भी) जृभि गात्रविनामे', इदित्त्वान्नलोपाभावः । दित्सामि दातुमिच्छामि । धित्सामि धर्तुमिच्छामि । उभयत्रापि 'सनि मीमा—' (पा० सू० ७-४-५४) इति इस् । 'अत्र लोपो—' (पा० सू० ७-४-५८) इत्यभ्यासलोपः ॥ ३६ ॥

तदनु तदीयमुदितं विरसमपि तरसा गुरुगौरवादुरुतराद् अर-मयमुररीकृत्य सकलशास्त्रतत्त्वविज्ञः पितरमेवं व्यजिज्ञपत् ॥

यस्मादशेषपुरुषार्थविधौ समर्थं
त्वत्तः शरीरमुदपादि गुरो! ममेदम् ।
तस्य प्रभो! तव वचो यदि नाकरिष्यं
तद्गर्दभादपि च कष्टतरोऽभविष्यम् ॥ ३७ ॥

तस्मादस्मि तवेप्सितं द्रुततरं कुर्यामपर्याकुलः
प्रोच्यादादिति यौवनं स हरये देहं दधीचिर्यथा ।
राजासौ सहसाशिषा सह जरां तस्मै समर्प्यार्पित
तेनादत्त च यौवतस्य मनसा साकं मुदा यौवनम् ॥ ३८ ॥

---

(तदन्वित्यादि ।) विरसमपि सर्वेषामिति शेषः । तत्त्वं, 'रूपं तत्त्वं सतत्त्वं च स्वरूपं च' इति वैजयन्ती । तस्य विज्ञः । व्यजिज्ञपत् विज्ञापितवान् । 'ज्ञा अवबोधने' चङ् ॥

यस्मादित्यादि । उदपादि उत्पन्नम् । 'चिण् ते पदः' (पा० सू० ३-१-६०) इति कर्तरि चिण् । अशेषपुरुषार्थविधौ चतुर्वर्गसाधने । समर्थम्, मर्त्यदेहेनैव हि धर्मादयः साध्यन्ते । गर्दभादपीति, विड्भुक्त्वादतिनिकृष्टो हि गर्दभः । अकरिष्यम् अभविष्यम् इति 'लिङ् निमित्ते–' (पा० सू० ३-३-१३९) इति क्रियातिपत्तौ भविष्यति लृङ् । कुतश्चित् कारणवैगुण्यात् क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः ॥ ३७ ॥

तस्मादित्यादि । द्रुततरं नात्र किञ्चिदपि विचारणीयमिति भावः । हरये इन्द्राय । दधीचिर्नाम कश्चिन्मुनिः । 'त्वचं कर्णः शिबिर्मांसं जीवं जीमूतवाहनः । ददौ दधीचिरस्थीनि किमदेयं महात्मनाम् ॥' 'जीमूतवाहस्य शिबेर्दधीचे'रिति चैकान्तरत्वेन प्रयोगः । आशिषा सहेति 'सहयुक्ते–' (पा०सू० २-३-१९) इति तृतीया । 'आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः' इति वैजयन्ती । यौवतस्य युवतिसमूहस्य । मनसा साकमिति सहोक्त्या तत्क्षणमेव अभिरूपोऽभूदिति प्रकाश्यते ॥ ३८ ॥

पूरुः पूरुषपुङ्गवः पुरुलसत्तारुण्यपूर्णद्युतिः
कालाम्भोदकलिन्दजौघसुभगं कान्तं वहन् कुन्तलम् ।
डिण्डीरोदरपाण्डराभचिकुरो दण्डी जरन्नाहुषि-
र्नारीणां सुखदावुभौ व्यतिबभूवाते प्रमोदाकुलौ ॥ ३९ ॥

राजा दारैरुदारैरथ नगरवरे रंरमीति स्म तस्मिन्
पादान्तालोलवालैर्घनरुचिरुचिरैः पुष्कराञ्चत्कराग्रैः ।
स्फायद्दानो महाविग्रहविजितमहीभृद्गणः पद्मशुम्भ-
द्व्यक्तः कान्तारमध्ये कलितरुचि यथा हास्तिकैर्हस्तिराजः ॥ ४० ॥

---

पूरुरित्यादि । (ओघः) 'ओघः प्रवाहो वेणी च धारा स्रोतो रयः स्मृतः' इति वैजयन्ती । (डिण्डीरः) 'डिण्डीरोऽब्धिकफः फेनः' इत्यमरः । जरन् जीर्णः । नहुषस्य अपत्यं नाहुषिः । सुखं ददाति खण्डयतीति च तथा । 'शुभानि खानि येनैतत् सुखमित्यभिधीयते । दूयन्ते खानि येनैतद् दुःखमित्यभिधीयते ॥' इति भावप्रकाशः । व्यतिबभूवाते 'भूसत्तायामि'त्यस्माल्लिटि 'कर्तरि कर्मव्यतीहारे' (पा० सू० १-३-१४) इति तङ् । कर्मव्यतीहारः क्रियाविनिमयः, युवत्व-जरत्वयोर्व्यत्यासो भूत इत्यर्थः । 'व्यत्याचरेते विप्राङ्ग्यौ' इतिवत् । अत्र युवत्वेन भवनं पूरोः क्रिया, जरत्वेन भवनं ययातेः क्रिया, तयोर्विनिमयो भूत इत्यर्थः । प्रमोदेन आकुलौ, भग्नप्रायाया अप्याशाया यथावत् परिपूरणेन राज्ञः प्रमोदः । अनितरलब्धाया दुष्करतराया गुर्वाज्ञाया अहमेव पात्रं जात इति पूरोः प्रमोदः ॥ ३९ ॥

राजेत्यादि । (उदारः) 'उदारो दातृमहतोः' इत्यमरः । रंरमीति स्म अत्यर्थं रेमे । वालः वालधिः, चिकुरश्च । घनः मेघः, घना निबिडा च । पुष्करेण जलेन, पुष्करं तामरसमिव च अञ्चत् शोभमानम् । स्फायद् वर्धमानम् । 'स्फायी ओप्यायी वृद्धौ' । दानं मदजलं, दानं च । विग्रहः, देहः, युद्धं च । महीभृतः पर्वता, राजानश्च । पद्मं बिन्दुजालकं, पङ्कजं च । 'महारण्ये दुर्गपथे कान्तारम्' इत्यमरः । हस्तिनीनां समूहा हास्तिकानि । '*अचित्तहस्ति-' (पा०सू० ४-२-४७) 'भस्याढे तद्धिते' (वा०) 'पुंवद्भावो वक्तव्यः' (वा०) इति पुंवद्भावः । स्फायदिति । 'चक्षिङ् व्यक्तायां वाची'त्यत्र इकारस्य अनुदात्तत्वम् । 'अनुदात्तेतश्च-'

गोवृन्दैर्विबुधावलीं कमलिनीहर्षं मुदा हर्षयन्
द्दप्यद्वैरिसमूहमन्धतमसध्वंसं लघु ध्वंसयन् ।
भञ्जन्नाशु खलोत्करं कुमुदिनीभञ्जं सदा मोदयन्
कोकामोदमयं जनान् दिवसकृल्लासं ललासान्वहम् ॥ ४१ ॥

यो वा किल सततापादितसकलाशापालनो निखिलानपि दिशामधीशान् निजगृहकृत्यमात्रलग्नहृदयान् आततान । यं वा किल निरुपमविक्रमं निजं पतिमिव परिचचार परमभाग्यसुलभा भगवती भार्गवी । येन किल काशरुचिभरनिरासिना निरतिशययशोवरासिना पतिव्रतावृत्तिमुपाश्रितवती वसुमती निचोलवतीव वितेने । यस्मै किल विस्मायकरूपपरिभूतभूतनाथपरिपन्थिने स्पृहयांबभूव निधुवननिधौ

---

(पा० सू० ३-२-१४९) इति युजर्थमवश्यं कर्तव्यमेव । तेनैव तङि सिद्धे पुनस्तङर्थः क्रियमाणो ङकारः अनुदात्तेत्त्वप्रयुक्तस्य तङोऽनित्यत्वज्ञापनायैव प्रभवति । तेन ताळैः शिञ्जदिति, तृष्णे जृम्भसीति, स्फायन्निर्मोकेत्यादि च सिद्ध्यति ॥४०॥

गोवृन्दैरित्यादि । गावो रश्मयः, वाचः, यज्ञाश्च । विबुधाः सन्तः, देवाश्च । कमलिनीहर्षमित्यादिषु चतुर्षु 'उपमाने कर्मणि च' (पा०सू० ३-४-४५) इति कर्मण्युपपदे णमुल् । कमलिनीमिव हर्षयन्नित्यर्थः । दिवसकृल्लासं दिवसकृदिव । अत्र 'कर्मणि चे'त्यत्र चकारात् कर्तरि णमुल् । सर्वत्र कषादिष्विति यस्माद्धातोर्णमुल् तस्यैवानुप्रयोगः । अन्धयतीति अन्धं, अन्धं च तत् तमश्चेति अन्धतमसम् । 'अवसमन्धेभ्य–' (पा० सू० ५-४-७९) इत्यच् समासान्तः । खलानां पापानां । 'खल सञ्चये' । पापानि सञ्चिनोति इति खलः । ललास शुशुभे । अन्वहं अहन्यहनि, वीप्सायामव्ययीभावः ॥ ४१ ॥

यो वेत्यादि । निजगृहपालनमेव तेषामधिकार इति भावः । यमित्यादि । विक्रमः पराक्रमः, पदविक्षेपश्च । परमभाग्यानां सुलभा । भार्गवी श्रीः । येनेत्यादि । यश एव वरासिः यशोवरासिः निबिडतरं वासः । 'वरासिः स्थूलशाटकः' इत्यमरः । निचोलः प्रच्छदपटः । वितेने कर्मणि लिट् । यस्मै इत्यादि । 'स्पृहेरीप्सितः' (पा० सू० १-४-३६) इति सम्प्रदानसंज्ञा ।

निजधवेषु तदात्मतापादनेन आपादितहृदयक्षोभः सकलोऽपि नाकवामालकालोकः । यस्मात् किल परित्रस्ताः समस्ताः प्रतीपभूपा निरस्तमहावना अपि स्वधर्मः कदाचिदपि नोल्लङ्घनीय इत्युरसिकृत्येव ऊरीकृतमहावनाः गुहामुखनिलीनमहाहरिनिनादनिकामचकितचेतसः विहस्तानां विजितस्वस्त्रीजनानां स्वस्त्रीजनानाम् अग्रहस्तान् बाहाग्रेण परिगृह्योदग्रतरुशाखाशिखाग्राधिरूढाः तत्रत्यकोटरजालोदरगतकाकोदरगणगरलोद्गारिशूत्कारनिशमनेन निबिडां भीतिमुद्वहन्तो 'गरुडाय नम' इत्युच्चरन्तः कथमपि वसन्ति स्म । यस्य किल बाहाभिधाने वर्षणवारिवाहे द्रविणविसरं विहततर्षं वर्षति किम्पचानसङ्घानां संहननेषु भूपासंहतिं भवनेषु विभवसंहतिं हृदयेषु मोदभारोऽपि जातुचिदपि न माति स्म । यस्मिंश्च महीपतौ महितापदाने निहतविहितमहितापदाने सततमहितापदानेतरि महीमहीनामनुशास्त्रमनुशासति राहौ द्विजवरोपप्लवरुचिः, वारिप्रवाहे सेतुभङ्गः, पद्मायां परपूरुषसङ्गः, दन्दशूके द्विजिह्वता,

---

भूतनाथपरिपन्थी कामः । निधुवनविधौ रतिसमये । धवा भर्तारः । तदात्मतेत्यादि । स्वभर्तृषु तदात्मताभावनेन हृदयक्षोभम् उत्पादितवानित्यर्थः । यस्मादित्यादि । निरस्तमहावनाः निरस्तं महदवनं रक्षणं यैस्ते । ऊरीकृतमहावनाः वनगता इत्यर्थः । हरयः सिंहाः । स्वस्त्रियः स्वर्गस्त्रियः, आत्मीयाः स्त्रियश्च । काकोदराः फणिनः । यस्येत्यादि । विहतोऽर्थिनां तर्षो यस्मिन् वर्षणे इति क्रियाविशेषणम् । किम्पचाना दरिद्राः । संहननेषु शरीरेषु । न माति स्म न प्रबभूव । यस्मिंश्चेत्यादि । अपदानम् अद्भुतकर्म । मह्याः तापदानं महितापदानम् । विहितं महितापदानं यैः ते विहितमहितापदानाः । निहता विहितमहितापदाना येन सः निहतविहितमहितापदानः । तस्मिन् । अहितानाम् आपदानेता । अहीनां अखण्डाम् । अनुशास्त्रम् अनुसृतशास्त्रं, क्रियाविशेषणम् । अनुशासति परिपालयति । द्विजवरः ब्राह्मणश्रेष्ठः, चन्द्रश्च । सेतुः मर्यादा, जलप्रतिबन्धश्च । पद्मम् अस्या अस्तीति पद्मा, अर्श आदित्वादच् । परपूरुषः विष्णुश्च ।

पयोनिधौ पोतसंस्थितिः, वनिताविलग्ने क्षीणता, ग्रहेषु वक्रगतिः, षट्पदेषु मधुप्रसक्तिः, कृषीवलगृहेषु खलावस्थितिः, ओषधीशे दोषोपसङ्गः वृषध्वजे विषादिता, वृद्धजनेषु दण्डधारणम्, रतौ वैपरीत्यं, वारणविग्रहेष्ववग्रहः, कामिनीकुचकलशयोरुद्वृत्तता च केवलमाविरासीत् ॥

तदनु तनयरूप्येण यौवनेन कमनीयरूप्ययं ययातिः अयातयामानखिलानपि कामान् अनुदिनमनुभुञ्जानः चतुरं चतुरम्बुराशिरशनापरित्रौकितां भूतिदात्रीं भूतधात्रीम् अमित्रोत्थपरित्रासहीनं परित्रायमाणः, समासहस्रावसाने विस्रसां मङ्क्षु परिजिघृक्षुः पुरुषाग्रगण्यं पुरुगुणाकरं पूरुममृतकिरा गिरा व्याजहार—

---

'द्विजिह्वौ सर्पसूचकौ' इत्यमरः । पोतः शिशुः, यानपात्रं च । संस्थितिः मृतिश्च । मधु मद्यं, पुष्परसश्च । खला दुष्टाः । खलं लूनधान्यप्रक्षेपस्थानम् । 'खल सञ्चये' । खल्यते सञ्चीयते भूधान्यादिकम् इति खलम् । 'खनो घ च' (पा० सू० ३-३-१२५) इत्यत्र हरदत्तः— "घित्करणसामर्थ्यादन्येभ्योऽप्ययं भवतीति नहि खनः कश्चिदवयवः कुत्वभागस्ति । तेन खलं भग इत्यादि भवती"ति । दोषो दोषा च । विषादिता दुःखभाक्त्वं, विषभक्षकत्वं च । वैपरीत्यं पुरुषायितम् इत्यर्थः । 'नायकस्यानुमत्या वा स्वमनीषिकयाथवा । पुंवत् स्त्री रमते रागात् पुरुषायितमुच्यते ॥' इति रतिरत्नदीपिका । अवग्रहः वर्षप्रतिबन्धः । 'अवे ग्रहो--' (पा० सू० ३-३-५१) इत्यच् । करिणां ललाटं च । 'अवग्रहो ललाटं स्याद्' इत्यमरः । आविरासीद् आविर्बभूव ॥

तदन्वित्यादि । तनयरूप्येण तनयस्य भूतपूर्वेण । 'षष्ठ्या रूप्य च' (पा० सू० ५-३-५४) इति रूप्यः । अयातयामान् नूतनान् । 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्' इत्यमरः । परित्रौकितां परितः प्राप्ताम् । 'त्रौकृ गत्यर्थः' । भूतिः सम्पत् । (भूतधात्री) 'विपुला गह्वरी धात्री भूतधात्र्यब्धिमेखला इत्यमरः । अमृतं किरतीति अमृतकीः ॥

पूरो! पुत्री त्वयास्मिन्नजनिषि जनुषि प्रीतिमान् प्राप्नुहीदं
तारुण्यं त्वं वरेण्यं द्रुतमयि जगतां पूज्य! राज्येन साकम् ।
व्युत्क्रान्तौ मास्तु शङ्का तदखिलजगतीं पाहि पाहीति पाहि
प्राज्ञैराज्ञा गुरूणामिह भुवनतले वत्स! मीमांस्यते किम् ॥ ४२ ॥

एवमभिभाष्यैनम् अखिलदिक्षु विदितमभिषिषिक्षुरेष नहुषनन्दनो वरीयसा पुरोधसा वर्षीयसा मन्त्रिवृषपौरजानपदजनेन च गरीयांसं ज्यायांसमतिक्रम्य कथङ्कारं कनीयांसं सूनुमभिषेक्तुकामोऽसीत्यभिहितः पित्रादेशकर्तुरेव हि पुत्रतेत्युक्त्वा पवित्रे मुहूर्ते निजनियुक्तेरायुक्तं पूरुं

---

पूरो इत्यादि । पुत्री प्रशस्तपुत्रवान् । उभयलोकसुखमपि त्वदायत्तमेवेति भावः । अजनिषि जातोऽस्मि । जनुषि जन्मनि । अस्मिन्निति विधेयांशः । व्यत्क्रान्तौ क्रमोल्लङ्घने । पाहि पाहीति पाहि अत्यर्थं पालय । 'क्रियासमभिहारे–' (पा०सू० ३-४-२) इति लोट् । क्रियासमभिहारेणात्र सम्यक्त्वम् । लोटो हि 'क्रियासमभिहारे द्वे भवत इति वक्तव्य'मिति द्विर्वचनम् । 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' (पा० सू० ३-४-४) इति तस्यैव धातोरनुप्रयोगः । मीमांस्यते विचार्यते किं श्रवणसमनन्तरम् अनुष्ठीयत एव । 'मान्बध–' (पा०सू० ३-१-६) इति जिज्ञासायां सन् । ततः कर्मणि लट् ॥ ४२ ॥

एवमित्यादि । अखिलदिक्षु विदितमिति एतदभिषेकेच्छाया लोकाक्रोशहेतुत्वं न स्यादिति भावः । अभिषिषिक्षुः अभिषेक्तुमिच्छुः । वरीयसा उरुतरेण । वर्षीयसा वृद्धतरेण । गरीयांसं गुरुतरम् । एषां त्रयाणाम् ईयसुनि 'प्रियस्थिर–' (पा० सू० ६-४-१५७) इत्यादिना वर्षिगर इति आदेशः । कथंकारं कथमित्येवार्थः । 'अन्यथैवं--' (पा० सू० ३-४-२७) इति णमुल् । ज्यायांसं ज्येष्ठम् । 'वृद्धस्य च' (वा०) इति ज्यादेशः । कनीयांसं कनिष्ठम् । 'युवाल्पयोः–' (पा० सू० ५-३-६४) इति कनादेशः । पुत्रतेति पुत्रं विहायान्यं कमभिषेक्ष्यामीति भावः । पवित्रे 'पुवः संज्ञायाम्' (पा० सू० ३-२-१८५) इति करणे इत्रः । अत्र लक्षणया पवित्रो देश इतिवत् करणमात्रे । निजनियुक्तेरायुक्तं निजनियोगे तत्परम् । 'आयुक्तकुशलाभ्यां–' (पा० सू० २-३-४०) इति षष्ठी । आसेवा तात्पर्यम् । विषयान्तेषु

पुरोहितैः पुरुहिताभिलाषिभिः अभिषेचयन्नमुं प्राज्यतरराज्यभारभरणे नियुज्य पुनरन्यान् विषयान्तेषु विन्यस्य स्वयमपि विषयान्तमुपेयिवान् विपिनान्तमुपगम्य दान्तमतिरुत्तमेन तपसोत्तपमानैः तापसनिवहैः सह गृहीताभ्यन्तराभिमातिविततिः निखिलजनविस्मयावहं तपस्तप्यते स्म ॥

त्रिंशद्वर्षाणि तोयप्रति तदनु पिबन् वत्सरं वायुभक्षः
पश्चात् पञ्चाग्निमध्यस्थितिकृदपि परं नित्यमेकान्तचेताः ।
पादाङ्गुष्ठेन तिष्ठन्नधिपृथिवि पुनः स्थाणुवन्मासषट्कं
मध्येऽरण्यान्यतप्त प्रचुरमिति तपः सोऽभ्यपप्तच्च नाकम् ॥ ४३ ॥

अनन्तरं निजान्तिकमायान्तं निखिलहरिदन्तरालमुच्चैरुच्चरमाणया रुचा विरोचनमिव विरोचमानं त्रैलोक्यविदितापदानमेनमालोक्य निर्जराधिपतिरूर्जितमोदमलमार्जिहत् ॥

---

जनपदसीमासु । विषयान्तं विषयाणाम् इन्द्रियार्थानाम् अन्तम् । अत्र शाब्दो विरोधः । उत्तपमानैः दीप्यमानैः । 'उद्विभ्यां तपः' (पा० सू० १-३-२७) इति तपेरकर्मकात् तङ् । आभ्यन्तराभिमातयः कामक्रोधादयः । अभिमन्यते प्रतिपक्षमित्यभिमातिः शत्रुः । 'आभिमातिरिति केचिदि'ति **सुबोधिनी** । तपस्तप्यते स्म तपः आर्जितवान् । 'तपस्तपःकर्मकस्यैव' (पा० सू० ३-१-८८) इति कर्मवद्भावः । 'तप सन्तापे' ॥

त्रिंशदित्यादि । तोयप्रति स्वल्पं तोयम् । 'सुप्प्रतिना मात्रार्थे' (पा० सू० २-१-९) इत्यव्ययीभावः । मात्रार्थोऽल्पार्थः । परम् उपरितनम् । वत्सरमित्यनुषङ्गः । एकम् अन्तम् अग्रस्थितं ज्ञेयमस्येति एकान्तम् । अधिपृथिवि पृथिव्याम् । 'अव्ययं विभक्ति–' (पा० सू० २-१-६) इति विभक्त्यर्थेऽव्ययीभावः । 'विभक्तीति सप्तम्यर्थो विवक्षितः' इति **नीविकारः** । मध्येऽरण्यानि महारण्यमध्ये । 'पारे मध्ये–' (पा० सू० २-१-१८) इत्यव्ययीभावः । तपोऽतप्त तप आर्जितवान् । पूर्ववत् कर्मवद्भावः । अभ्यपप्तद् अभ्यगमत् । 'पतः पुम्' (पा० सू० ७-४-१९) इत्यङि पुमागमः । अत्र चकारेण तपःफलस्य कालान्तरितत्वाभावः । सशरीरस्वर्गप्राप्तिश्च द्योत्यते ॥ ४३ ॥

अनन्तरमित्यादि । हरिदन्तरालम् उच्चरमाणया उत्क्रम्य गच्छन्त्या । 'उदश्चरः–' (पा० सू० १-३-५३) इति आत्मनेपदम् । आर्जिहत् पूजितवान् ।

सौवान् सर्वानसौ भोगान् सौवपुण्यसमार्जितान् ।
सहस्रं वत्सरानत्र बुभुजे भूभुजां वरः ॥ ४४ ॥

अनन्तरम् अनन्तसुकृतपरम्परासाधनीयं विश्वसृजः सदनं विविश्यायम् अनुसृतामरसभेन तामरसभवेन सभाजितः शरदां दशशतीम् अतिसुखेनात्र यापयित्वा पुनरपि मन्दाकिनीसमुदञ्चितकाञ्चनारविन्दसन्दोहान्दोलनकेलिखिन्दानमन्दमारुतापातसुभगंभावुकम् अखिलजनप्रियंभावुकं मधुपकुलनयनोद्याननन्दनोद्यानमासाद्य वृन्दारकवधूवृन्दारिकाभिः सह हिन्दोलिकान्दोलनप्रभृतिभिः क्रीडाभिः परिक्रीडमानः प्रयुतं वत्सरान् अक्षिन्नवात्सीत् ॥

प्रौढधीरयमाढौक्य निवासाय बिडौजसः ।
कदाचित् कथयाश्चक्रे कथास्तास्ता विकत्थनः ॥ ४५ ॥

---

'अर्ह पूजायां' चङ् । तत्तपोनुरूपाणां भोगविशेषाणाम् अभिनन्दनपूर्वकम् अनुभवानुमतिरत्र अर्हणम् ॥

सौवानित्यादि । सौवान् स्वभुवान् । 'तत्र भवः' (पा०सू०४-३-५३) इत्यण् । अव्ययत्वात् टिलोपः । सौवैः स्वसम्बन्धिभिः पुण्यैः समार्जितान् ॥ ४४ ॥

न केवलं तत्तादृशतपसः फलम् इन्द्रलोकसुखानुभवमात्रमेवाभूदित्याह— अनन्तरमित्यादि । विविश्य प्रविश्य । दशशतीं सहस्रम् । नयनोद्यानं नयनोत्सवम् । 'वृन्दारकौ रूपिमुख्यौ' इत्यमरः । हिन्दोलिका दोला । परिक्रीडमानः, 'क्रीडोऽनुसंपरिभ्यश्च' (पा० सू० १-३-२१) इत्यात्मनेपदम् । प्रयुतं दशलक्षम् । 'शतं सहस्रमयुतं नियुतं प्रयुतं तथा । कोटिरर्बुदवृन्दे द्वे ज्ञेया दशगुणोत्तराः' ॥

प्रौढेत्यादि । प्रौढधीः बहुविधकथाकथनसमर्थः । आढौक्य उपगम्य । ढौकृ गत्यर्थः । निवासाय, 'गत्यर्थकर्मणि–' (पा० सू० २-३-१२) इति चतुर्थी । बिडौजसः इन्द्रस्य । विकत्थनः आत्मश्लाघावान् । एतद् भाविनः पतनस्य हेतुगर्भं विशेषणम् । 'कत्थ श्लाघायाम्' ॥ ४५ ॥

अथ कथान्तरे तुरासाहा 'तपस्यया कस्य सदृशोऽसी'ति पृष्टो वरिष्ठम्मन्यो राजन्यवर्यः 'अधुना त्रिभुवने सुरनरकिन्नरमुनिप्रभृतिषु प्रवरोऽहमेवे'ति प्रवदन्नयम्, अनेन रभसोदितरभसभरेण 'यदसि-समान् अनवमानप्यवमन्यसे तस्मादस्माल्लोकात् क्षीणपुण्यः क्षणात् पतिष्यसी'ति भाषितः, पुनरस्यैव पुरुतरार्दनया दयार्द्रहृदयेन 'सत्समीप-पाती भवे'त्यनुगृहीतः, तदैव क्रूररूपेण केनचिद् देवदूतेन रभसा-दभिपत्य प्लावितेन स्वरेण 'अपसरे'त्यभिहितः पतन् भागधेयशेषादष्टक-प्रतर्दनवसुमनःशिबिनामधेयैरतिरुचिररूपधेयै राजर्षिभिः साक्षात्कृत-ब्रह्मभिः महाब्रह्मैरपि परिबृंहिताभां यज्ञवाटीम् आटीकत ॥

आचष्ट नष्टदिष्टं तं दृष्ट्वा भ्रष्टमथाष्टकः ।
कं हेतुमृक्षपातं त्वं पतितः पततां पथः ॥ ४६ ॥

---

अथेत्यादि । तुरासाहा महेन्द्रेण । पृष्ट इति । अतुलतपसमप्यमुं सकल-दोषातिशायिन्या बहुविधकथाकथनाभिव्यज्यमानया अहम्मत्या प्रक्षीणपुण्यं निश्चित्य आत्मलोकात् पातयिष्यन् तामेवाहम्मतिं विस्पष्टयितुमेवम् अपृच्छदित्यव-गन्तव्यम् । वरिष्ठम्मन्यः आत्मानम् अतिशयेन वरं मन्यमानः । 'आत्ममाने–' (पा० सू० ३-२-८३) इति खश् । 'वरीयांस्तूरुवरयोः' इत्यमरः । अनवमान् उत्तमान् । अत्र नञः तद्विरुद्धार्थत्वम् । अवमन्यसे निन्दितवानसि । 'वर्तमानसामीप्ये–' (पा० सू० ३-३-१३१) इति भूते लट् । क्षीणपुण्यः, महदवमानेन क्षणादेव सर्वपुण्यक्षयो जात इत्यर्थः । तदुक्तम् बोधो-त्पत्तिप्रकरणे— 'महन्निन्दां वेदनिन्दां गुरुनिन्दां च वैदिकः । हरिशङ्करयोर्निन्दां ज्ञाननिन्दां च वर्जयेत् ॥' इति । अर्दनया याच्ञया । 'याच्ञा भिक्षार्थना-र्दना' इत्यमरः । प्लावितेन प्लुतीकृतेन । उच्चैस्तरेणेति यावत् । नामधेयेत्यादिषु त्रिषु भागरूपनामभ्यः स्वार्थे धेयप्रत्ययो वक्तव्य इति धेयः । महाब्रह्मैः महद्भिः ब्राह्मणैः । 'कुमहद्भ्यां–' (पा० सू० ५-४-१०५) इति टच् समासान्तः । आटीकत प्राप्तवान् । टीकृ गत्यर्थः ॥

आचष्टेत्यादि । कं हेतुं किं निमित्तम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति द्वितीया । ऋक्षपातं ऋक्षमिव । 'उपमान–' (पा० सू० ३-४-४५) इति कर्तरि णमुल् ॥ ४६ ॥

तदनु तेन भूपतिना 'निखिलभूतावमानाद् ईदृशीं दशाम् आलम्बिषी'ति भाषित एष 'मालं विषीदतु भवान्; अनल्पमत्पुण्यजितान् अजितलोकदेश्यान् सपदि लोकानाविश्य यथामनोरथं सुख्यतुतमाम्' इत्येवमाचख्यौ ॥

अनन्तरम् अखिलराजन्यचूडामणिरसौ धरणीपतिः अनणीयसीं वाणीं अनाणीत् —

'अधिकुर्वे कथं क्षत्रवंशजोऽहं प्रतिग्रहे ।
अन्त्यवर्णः श्रुतेर्वर्णे यथावर्णविघूर्णने' ॥ ४७ ॥

एवं निजपुण्यनिचयेनात्मनः सौवर्गमनिकानां प्रतर्दनादीनामपि अर्दनां निजधर्मार्दनकरीं न पुनरयमूरीचकार ॥

---

तदन्वित्यादि । आलम्बिषि आश्रितवानसि । अजितलोकदेश्यान् प्रायेण वैकुण्ठलोकसदृशान् । सुख्यतु सुखमनुभवतु । 'सुख दुःख तदनुभवे' इति कण्ड्वादौ ।

अनन्तरमित्यादि । अनणीयसीम् उत्कृष्टां क्षत्रजात्युचिताम् । अवाणीद् उक्तवान् ॥

अधीत्यादि । अधिकुर्वे अधिकारी भवामि । अत्राधिकरोतिः योग्यतामात्रवचनः । तथा च नैषधे—'पातुं श्रुतिभ्यामपि नाधिकुर्वे' इति । वर्णस्य क्षत्रजातेः । विघूर्णने वल्गापादके । क्षत्रजातेः प्रतिग्रहस्याविहितत्वात् । अन्त्यवर्णः शूद्रजातिजः । श्रुतेः वर्णे अक्षरे । 'अस्त्रियौ वर्णमर्णं च' इति वैजयन्ती । कीदृशे वर्णे । अवर्णविघूर्णने दोषविनाशने । अत्र वाक्यार्थोपमायाम् अधिकाराभावमात्रमेव साधर्म्यं साक्षाद् विवक्षितम् ॥ ४७ ॥

एवमित्यादि । आत्मनः सौवर्गमनिकानां स्वर्गगमनं ब्रुवताम् । 'तदाहेति माशब्दादिभ्य उपसंख्यानम्' (वा०) इति ठक् । अर्दनां याच्ञाम् । अर्दनं हिंसनम् ॥

एतस्मिन्नन्तरेऽस्मिन्नभिपतितवती गृह्णती धूमगन्धं
माता तेषां समेषां मृगनिवहवृता माधवीनामधेया ।
मार्गाहारैकसर्गा विलसदजिनवासाः सुतानीक्षमाणा
द्वन्द्वौघं साहुषी सा पुरत इह पुरा नाहुषी तोतुषीति ॥ ४८ ॥

या खलु पुरा ययातेः स्वपितुरालयम् अलङ्कुर्वाणा, विप्रवरवर-प्रभावभावितप्रतिप्रसवावसानसमयजन्यकन्यकाभावा, कदाचिददृष्टधन-लवाय विशिष्टविद्यापारगाय गालवाय निजनिर्बन्धभरसमिन्धानरोष-कलुषिताशयकौशिकादेशाद् एकतो हरितकर्णहरिणवर्णवाजिसार्थलाभो-त्पन्नवाजितार्थाय प्रार्थिताय वैनतेयमित्राय पित्रा भूसुरत्राकरणरिक्त-रिक्थेन मनागिव विमनायमानेन 'ननु मुनिवृषभ! धनैषिणा भवता मनीषिणी मम सुतैव इयमादीयताम्, अनयैव तव मनोरथवल्लरी मनोहरफलोल्लासिनी स्यादि'ति सादरं दत्ता, गालवादेशवशंवदा बालिका,

---

एतस्मिन्नित्यादि । अभिपतितवती आगता, अभूद् इति शेषः । तेषाम् अष्टकादीनाम् । समेषां सर्वेषाम् । माता माधवीनामधेया ययातेः पुत्री । मार्गः मृगसम्बन्धी तृणादिः । 'तस्येदम्' (पा०सू० ४-३-१२०) इत्यण् । सर्गः स्वभावः । द्वन्द्वौघं शीतोष्णादिकम् । साहुषी सोढवती । पुरा तोतुषीति अत्यर्थं तुष्टाभूत् । अत्र पुराशब्दस्य नार्थः । 'पुरि लुङ्—' (पा० सू० ३-३-१२२) इति भूते लट् ॥ ४८ ॥

या खल्वित्यादि । या माधवीति दत्तेत्यादिभिः प्रथमान्तैः पूर्वं सम्बध्य पुनः सञ्चचारेत्यनेन सम्बध्यते । विप्रवरस्य कस्यचिद् ब्राह्मणश्रेष्ठस्य वरप्रभावेन भावितः प्राप्तः, प्रतिप्रसवावसानसमयं प्रसवावसानसमये प्रसवावसानसमये, वीप्सायाम् अव्ययीभावः; जन्यो जातः कन्यकाभावो यस्याः सा । एकतः एकस्मिन् भागे । हरितकर्णानां श्यामैककर्णानामित्यर्थः । हरिणवर्णानां श्वेतानां वाजि-सार्थानाम् अष्टशतानामित्यर्थः; लाभेन उत्पन्नः वाजितार्थो मनोरथो यस्य तस्मै । *'वाजितार्थो मनोरथः' इति वैजयन्ती (?) । प्रार्थिताय आगताय । भूसुरत्राकरणेन

---

* 'वाञ्छा कामो मनोरथः ।' इति मुद्रितवैजयन्तीपाठः । 'वाञ्छितोऽर्थो मनोरथः ।' इति हलायुधः ।

कोसलकाशिभोजेश्वराणां हर्यश्वदिवोदासोशीनराभिधानां नराधिपानां वसुमनःप्रतर्दनशिबिनामकान् अतिमहितधामकान् अरिकुलदारकान् दारकान् उत्पन्नमोदमुत्पादितवती, इह शुल्कभूतैः शुभ्रवर्णैरेकतः श्याम-कर्णैस्ततस्ततो द्विशतशः समासादितैः सैन्धववरैः समिन्धानपरिसरेण इतरद्विशताश्वानवाप्तिपरितप्तहृदयेनानेन मुनिवरेण 'प्रियसख! अल-मलमतः परं प्रयत्नेन । प्रागृचीकेन जातगाधिसुतारुचीकेन प्रचेतसः प्रसादादासादितानाम् एतादृशानां हयानां सहस्रे परमेत एवावशिष्टाः, तदितरद्विशतापूरणाय एनामेव गुरवे त्वमनल्पादरमर्पय' इति वैनतेय-वचनेन आशु कुशिकसुतोपशल्यम् उपगम्य षट्च्छतैरेतैः सह समर्पिता, तत्र तस्यापि पुष्टगुणम् अष्टकाभिधानं कमपि सुतं प्रसूतवती, गुरु-निष्क्रयनिष्पादनानल्पसम्मदेन तपश्चरणैकलोलुपेन अनेन पुनः पितृ-समीपमेव प्रापिता, तेन स्वयंवरार्थमानीतानाम् अखिलपृथ्वीपतीनां मध्ये रथवरमध्यारोप्य चञ्चलाक्षीभिः सह सञ्चारिता, खर्वेतरनिर्वेद-भागिनी, मान्यमपि राजन्यकमेतद् विगणय्य धन्यधन्या मृगचर्यैव वर्येति मनसि कलयन्ती, वनमेव परं वरयन्ती, सपदि विपिनावनीमति-पावनीम् उपगम्य मृगगणैरमा तत्र हरितमणिहारीणि मधुररसधारीणि मृदुतराणि तरुणानि तृणाङ्कुराणि परितृणन्ती, दुरितचयशमनानि अमृतमददमनानि महिततरलघिमानि शीतलानि विमलानि जलान्या-पिबन्ती, विगतनिखिलाभिमानं मनसि परमेव धाम कलयन्ती, सञ्चितरसं सञ्चचार ॥

---

दानाद् विप्राधीनत्वसम्पादनेन । 'तदधीनवचने', 'देये त्रा च' (पा० सू० ५-४-५४; ५५) इति त्रा । रिक्तं शून्यं रिक्थं धनं यस्य तेन । इवेति वाक्यालङ्कारे । विमनायमानेन दुःखितेन । ननु हे । द्विशतशः द्विशतं द्विशतम् । 'सङ्ख्यैकवचनाच्च वीप्सायां–' (पा० सू० ५-४-४३) इति शस् । जातगाधि-सुतारुचीकेन जाता गाधिसुतायां सत्यवत्याख्यायां रुची इच्छा यस्य तेन । 'शेषाद् विभाषा' (पा० सू० ५-४-१५४) इति कप् । इतरद्विशतापूरणायेत्यनेन निर्बन्धकुपितेन कौशिकेन 'एकतः श्यामकर्णाः शुभ्रवर्णाः अष्टशतं हया भवता

सेयं वरेण्यपुरुपुण्यपयोधिरेन-
मुर्वीमुपर्युपरि संस्थितमात्मतातम् ।
दृष्ट्वा त्रिविष्टपगतं सहसा नमस्या-
मस्यातनिष्ट पदयोरतनिष्ठमोदा ॥ ४९ ॥

तदनु वसुमनसा 'सुमनसा समानः कोऽयमि'ति परिपृष्टेयं 'पुरा पूरुं मम सोदरं सादरं धरित्रीपरित्राणे नियुज्य निजपुण्यपूरनिर्जितां निर्जरेन्द्रनगरीम् आसवान् मम जनको जगतीपतिर्ययातिरयम् । अयि वत्स! सोऽयम् अद्य पुनः कस्मै निमित्ताय असिन्नापतितः स्यादि'त्युदितशङ्कम् उदीरयन्ती 'निहतसकलभन्दनान्निखिलजननिन्द-नात् परिभ्रष्ट' इति तेनैव निर्दिष्टा संभ्रमाविष्टा पितरमिदमभाषिष्ट —

तात! ते पुरुपुण्यस्य हन्त दुर्दशयानया ।
दूये त्वदीयदौहित्रैरेतैर्निर्विण्णधीरपि ॥ ५० ॥

---

गुरुनिष्क्रयार्थम् आनेतव्या' इत्युक्तमित्युक्तं भवति । खर्वेतरः अनल्पः । निर्वेदः विषयविरक्तिः । राजन्यकं क्षत्रियसमूहम् । 'गोत्रोक्ष–' (पा० सू० ४-२-३९) इति वुञ् । धन्यधन्या अत्यर्थं धन्या । मृगचर्या मृगाणां चर्या । हरितमणिः मरकतम् । परितृणन्ती भक्षयन्ती । 'तृणु अदने' ॥

सेयमित्यादि । उर्वीमुपर्युपरि उर्व्याः समीपोपरिभागे । 'उभसर्व-तसोः–' (वा०) इति द्वितीया । 'उपर्यध्यधसः–' (पा० सू० ८-१-७) इति द्विर्वचनम् । नमस्यां नमस्कारम् । 'नमस्या तु नमस्कारः' इत्यभिधानरत्नमाला । अतनिष्ट कृतवती । अतनिष्ठमोदा अतनिष्ठः अतिशयेनातनुः अधिकः मोदो यस्याः सा ॥ ४९ ॥

तदन्वित्यादि । कस्मै निमित्ताय केन हेतुना । आपतितः स्यादिति सम्प्रश्ने । सम्प्रश्ने लिङ् । सम्प्रश्नः विचारः । भन्दनं कल्याणम् । 'भदि कल्याणे सुखे च' ॥

तातेत्यादि । दुर्दशया दुरवस्थया । दूये परितपामि । निर्विण्णधीः विरक्तधीरपि ॥ ५० ॥

आस्माकीनतपस्यासिद्धान्त त्वं क्रमस्व शक्रपुरीम् ।
पुत्रैरपि दौहित्रैरार्जितमात्मार्जितं विदुर्मुनयः ॥ ५१ ॥

ततः श्रोत्रयुगप्राभृतीभूतपुत्रीभाषितो धात्रीपतिरसौ मुदाविष्टमतिः इदमभाषिष्ट —

यद्येवमद्य सम्पन्नमिष्टं दिष्टविपाकतः ।
प्रतारितोऽहं मानेन युष्माभिरपि तारितः ॥ ५२ ॥

दौहित्रैर्दिवमस्मि हन्त गमितः स्फीतैररित्रैर्यथा
नौः पारं तदतः परं ननु सुते! श्राद्धे धरित्र्यामिह ।
दौहित्रस्तिलवत् तथा कुतपवच्चातीव मुख्यो भवे-
दित्युक्ते तु शताङ्गपञ्चकमथादर्शि क्षणादम्बरे ॥ ५३ ॥

---

आस्माकीनेत्यादि । आस्माकीना अस्मदीया । मम च अष्टकादीनां चेत्यर्थः । 'युष्मदस्मदोरन्य–' (पा० सू० ४-३-१) इति खञ् शेषेऽर्थे । 'तस्मिन्नणि च–' (पा० सू० ४-३-२) इत्यस्माकादेशः । क्रमस्व प्राप्नुहि । 'अनुपसर्गाद् वा–' (पा० सू० १-३-४३) इति तङ् । यद्वा अप्रतिबन्धेन गच्छ । 'वृत्ति–' (पा० सू० १-३-३८) इति तङ् । दौहित्रैः दुहितुरपत्यैः । 'अनृष्यानन्तर्ये–' (पा० सू० ४-१-१०४) इत्यञ् । अनृष्यानन्तर्य इत्यस्य अयमर्थः — ये पुनरत्र अनृषिशब्दाः पुत्रदुहित्रादयः तेषामनन्तरापत्य एवाञिति । 'आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥'

तत इत्यादि । प्राभृतम् उपायनम् । अभाषिष्ट उक्तवान् ॥

यदीत्यादि । दिष्टविपाकतः दैववशात् । प्रतारितः वञ्चितः ॥ ५२ ॥

दौहित्रैरित्यादि । दौहित्रैरिति पुत्र्या अप्युपलक्षणम् । तदनुक्तिस्तु दौहित्रेष्वेव श्राद्धे मुख्याधिकारित्वविधित्सया । अरित्रैः, अर्तिलूधू–' (पा०सू० ३-२-१८२) इतीत्रः । 'अरित्रं केनिपातकः' इत्यमरः । कुतपवत् 'अंशोऽष्टमोऽह्नः कुतपोऽस्त्रियाम्' इत्यमरः । कुं महीं कार्त्स्न्येन तपतीति कुतपः । शताङ्गः रथः । अदर्शि दृष्टः, कर्मणि लुङ् ॥ ५३ ॥

रथमारुह्य शान्तात्मा रसापोऽथ रथाश्रितैः ।
प्रातिष्ठत प्रहृष्टैस्तैरष्टकाद्यैस्त्रिविष्टपम् ॥ ५४ ॥

अनन्तरमौशीनरं शिबिं सर्वानतीत्य दुर्वारवेगं पुरतः सरन्तं दृष्ट्वा अयमष्टको विस्मयाविष्टः सन्निकृष्टं प्रविष्टो महान्तं मातामहमिदम् अन्वयुङ्क्त ।

कस्मादस्मानतीत्यायं प्रयात्यौशीनरः पुरः ।
इत्यञ्जसानुयुञ्जानं जगौ तं जगतीपतिः ॥ ५५ ॥

वत्स! शेश्वीयितयशःश्वेतितनिश्शेषविश्वः पुरुसुकृतराशी राजर्षिः औशीनरः पुरा महीयसि महीसुरगणे दशविधकपिलमाहानां समर्पणम् अनल्पफलायेति विपश्चिदयं विनिश्चित्य विक्रयिकाभिलषितातिरिक्तेन रिक्थेन क्रीतानां महिष्ठतरनिजगोष्ठपरित्रौकितानां यथाविधिवितीर्ण-विविधतृणपूलतर्णनपरिस्फीतानां यथासमयसमर्पितविमलसलिलपीति-परिप्रीतानां महारजतमयालङ्कारवरपरिष्कृतानाम्, अमूल्यमणिमाल्य-

---

रथमित्यादि । शान्तात्मा विगताहम्मतिरित्यर्थः । रसापः भूपः । प्रातिष्ठत गतवान् । धात्वर्थवैपरीत्ये प्रशब्दः । त्रिविष्टपं, प्रतिरर्थलभ्यः ॥ ५४॥

अनन्तरमित्यादि । सन्निकृष्टं समीपम् । अन्वयुङ्क्त पृष्टवान् ।

कस्मादित्यादि । अनुयुञ्जानं पृच्छन्तम् । जगौ उक्तवान् ॥ ५५ ॥

वत्सेत्यादि । शेश्वीयितम् अत्यर्थं वृद्धम् । 'टु ओश्वि गतिवृद्ध्योः' यङन्तात् कर्तरि क्तः । श्वेतितं धवलितम् । दशविधकपिलमाहानाम् । अत्र श्रीवैष्णवपुराणम्—"दशेह कपिलाः प्रोक्ताः स्वयमेव स्वयम्भुवा । या दत्त्वा श्रोत्रियेभ्यो वै स्वर्गं गच्छन्ति ताः शृणु ॥ प्रथमा स्वर्णकपिला द्वितीया गौर-पिङ्गला । तृतीया रक्तपिङ्गाक्षी चतुर्थी गुलपिङ्गला ॥ पञ्चमी बभ्रुवर्णा स्यात् षष्ठी च श्वेतपिङ्गला । सप्तमी कृष्णपिङ्गाक्षी ह्यष्टमी खुरपिङ्गला ॥ नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला । दशैताः कपिलाः प्रोक्ताः तारयन्ति नरान् सदा ॥"

निकरपरिश्रितानां, तत्समानपरिष्कृतशकृत्करिविमिश्रितानां, मृदुलतरदुकूलवरपरिस्तृतानां घटोध्नीनां पयसीयसीनां यवीयसीनां समांसमीनानां समीचीनशीलानां च कपिलानां निकरैः, किञ्च ग्रामे ग्रामे विरचितासु विततासु विमलसलिलापूर्णकूपवापीविशोभितासु विशोधितान्तिकासु कनकमयभित्तिशालासु भुक्तिशालासु बीज्यगुणसंभृतैः प्राज्यगुणसंयुतैः आज्यरससङ्गतैः, व्यञ्जनमात्रसशोभैरपि समग्रस्वरसशोभैः, समग्रस्वरसशोभैरपि अवर्णरहितैः, अखण्डवर्णात्मकैरपि अप्रयत्ननिर्वर्तितैः, आश्रितानेककनकभाजनैः आमोदापतितसभाजनैः अमलतरभोजनैः धर्मरूप्यैरहितरूप्यैरधिकरूप्यै रूप्यैकमयै रुक्मैकमयैरपि भाजनैरपारैः कनकभारै रुचिरतराकारैरगारैः स्वमनोनुकूलैः अमलतरदुकूलैः अनर्घैर्भूषणोद्धैरन्यैरपि मान्यैर्निस्तुलवस्तुजालैः अनूचानान्

---

इति। विक्रयिकाभिलषितातिरिक्तेन विक्रयिकाणां विक्रेतॄणाम् अभिलषिताद् अतिरिक्तेन समधिकेन। रिक्थेन धनेन। महिष्ठतरम् अतिशयेन महत्। परिलौकितानां प्रासानाम्। पूलः तृणसञ्चयः। तर्णनम् अदनम्। पीतिः पानम्। महारजतं काञ्चनं, महद् रजतं च। अमूल्यानि अनर्घाणि। शकृत्करिः वत्सः। 'स्तम्बशकृतोरिन्' (पा० सू० ३-२-२४) इतीन्। 'व्रीहिवत्सयोरिति वक्तव्यम्' (वा०)। परिस्तृतानां छादितानाम्। घट इव ऊधो यासां ताः घटोध्न्यः। 'ऊधसोऽनङ्' (पा० सू० ३-२-६४) इति अनङ् समासान्तः। 'बहुव्रीहेरूधसो ङीष्' (पा० सू० ४-१-२५) इति ङीष्। पयसीयसीनाम् अतिशयेन पयस्विनीनाम्। यवीयसीनाम् अतिशयेन यौवनवतीनाम्। समांसमीनानां 'समांसमां विजायते' (पा० सू० ५-२-१२) इति खः। विजायते प्रसूयते। 'समांसमीना सा यैव प्रतिवर्षं प्रसूयते' इत्यमरः। समीचीनं सम्यक्। विशोधितं अन्तिकं सविधमूर्यासां, यद्वा विशोधिता अन्तिका चुल्लिर्यासु तासु। 'अन्तिका तु स्त्रियां चुल्ल्यां समीपे मेचलिङ्गका' इति केशवः। कनकमयीभिः भित्तिभिः शाल्यन्ते श्लाघ्यन्ते इति कनकमयभित्तिशालाः। बीज्याः कुलीनाः, 'बीज्यस्तु कुलसम्भवः' इत्यमरः। गुणयन्ति पुनः पुनः वचनक्रियामावर्तयन्ति इति गुणाः वाचकाः। प्राज्या बहुलाः। व्यञ्जनमात्रेण केवलैर्हल्भिः। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः।

अनूनानूकमाननीयान् दानीयान् द्युतिविजितबाडवान् बाडवान् अपरानप्यमितान् मितम्पचान् प्रार्थितयिषया प्रार्थितान् तत्तदर्थिततत्ताद्दशपदार्थसार्थसमर्थनेन श्रद्धाभक्तिभरविशुद्धान्तरङ्गोऽनुदिनम् अतितथामतीनतीतृपत् ॥

भूरिणानेन दानेन भूषणैरधिकोज्ज्वलः ।
भूरिभूषितयानेन पुरः सञ्चरते शिबिः ॥ ५६ ॥

---

समग्रस्वैः सकलाज्भिः, सशोभैरिति विरोधः । व्यञ्जनमात्रैः सकलैर्व्यञ्जनैः । 'निष्ठानं तेमनं तच्च व्यञ्जनं स्याद् घृतादि च' इति वैजयन्ती । समग्रेण पूर्णेन स्वरसेन आत्मरसेनेति परिहारः । अवर्णा अष्टादशविधाः, दोषाश्च । अखण्डेति । वर्णो धावल्यादिः, अक्षराणि च । अप्रयत्ननिर्वर्तितैः स्पृष्टतादिरहितैः, अप्रयासेन सम्पादितैश्च । कनकभाजनानि स्थाल्यादीनि । आमोदेन सहापतिताः सभाजना यैर्हेतुभिः । धर्माद्धेतुभूतादागतानि धर्मरूप्याणि । अहितेभ्य आगतानि अहितरूप्याणि । 'हेतुमनुष्येभ्यः—' (पा० सू० ४-३-८१) इति रूप्यः । अधिकरूप्यैः अधिकं प्रशस्तरूपैः । 'रूपादाहत—' (पा० सू० ५-२-१२०) इति मत्वर्थे यप् । 'रूप्यः प्रशस्तरूपेऽपि' इत्यमरः । रूप्यं रजतम् । रुक्मं कनकम् । भूषणोद्धैः प्रशस्तैर्भूषणैः । 'सङ्घोद्धौ—' (पा० सू० ३-३-८६) इति निपातः । साङ्गाध्ययनं अनुवचनं तत्कृतवन्तः अनूचानाः । 'अनूचानः प्रवचने साङ्गेऽधीती--' इत्यमरः । अनूनानूकेन विशिष्टेन अभिजनेन, शीलेन च; 'शीलान्वयावनूके द्वे' इत्यमरः; माननीयान् । दीयतेऽस्मायिति दानीयः । 'कृत्यल्युटः--' (पा०सू० ३-३-११३) इति बहुलग्रहणात् सम्प्रदाने कृत्यः । बाडवः बडवानलः । बाडवान् विप्रान् । मितम्पचान् निस्स्वान् । प्रार्थितयिषया प्रार्थयितुमिच्छया । 'सनन्तादप्रत्ययादि'ति अकारप्रत्ययः । प्रार्थितान् आगतान् । 'याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः ॥' श्रद्धा साधनमिदं साध्यं न व्यभिचरतीति विश्वासः । अतीतृपत् सन्तोषितवान् ॥

भूरिणेत्यादि । भूरिभूषितं स्वर्णालङ्कृतम् । यानेन सञ्चरते 'समस्तृतीयायुक्ताद्' (पा० सू० १-३-५४) इति तङ् ॥ ५६ ॥

श्रुत्वैवं निखिलजगत्प्रहर्षणीयं वृत्तं तद् भृशमहितं शिबेरमुष्य ।
तत्तादृक्कुतुकभराकुलाशयोऽमुं हृष्टोऽलं बहुमनुते पुराष्टकोऽम् ॥५७॥

वदन् वरिष्ठस्य गरिष्ठधर्मणः
शिबेः प्रथिष्ठामिति दाननिष्ठताम् ।
ययातिरिष्टैरयमष्टकादिभि-
स्त्रिविष्टपं तुष्टमतिः प्रविष्टवान् ॥ ५८ ॥

सर्वाङ्गीणेन सोऽयं सपदि विकसितेनेक्षणानां गणेन
प्रत्यापत्तिं ययातेः प्रतिहततमसः प्रेक्ष्य दुष्प्रेक्ष्यधाम्नः ।
नानन्दामास देवो घनरसपरिपूर्णाशयो वृत्रवैरी
पद्मव्रातेन पद्माकर इव तरणेः सत्पथे संस्थितस्य ॥ ५९ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
तृतीयः स्तबकः ।

---

श्रुत्वैवमित्यादि । प्रहर्षिणीयं प्रहर्षणसाधनम् । बहुमनुते पुरा बहुमन्यत । वृत्तनामाङ्कितोऽयं श्लोकः । 'म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षणीयम्' ॥ ५७ ॥

वदन्नित्यादि । प्रथिष्ठां पृथुतमाम् । 'अतिशायने–' (पा० सू० ५-३-५५) इतीष्ठन् ॥ ५८ ॥

सर्वेत्यादि । सर्वाङ्गीणेन सर्वाङ्गं व्याप्नुवता । 'तत्सर्वादेः–' (पा० सू० ५-२-७) इति खः । ययातेः प्रत्यापत्तिं प्रथमं भ्रष्टस्य पुनरात्मलोकप्राप्तिम् । तमः निखिलावमानजं पापं, तिमिरं च । "तमस्तु क्ली पापे नरकशोकयोः" इति निघण्टुः । नानन्दामास अत्यर्थं तुतोष । यङ्लुगन्तात् लिट् । घनेन रसेन घनरसेन, जलेन च । सत्पथे साधुमार्गे, नक्षत्रमार्गे च । तरणिः सूर्यः ॥ ५९ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये तृतीयः स्तबकः ॥

चतुर्थः स्तबकः ।

आत्मन्याधाय राज्यं पितरि गतवति प्राज्यपुण्यार्जितं तत्
स्वाराज्यं भूरितेजास्सकलवसुमतीं पालयामास पूरुः ।
दानैः सर्वानमेयैः सुरतरुसदृशस्तोषयन्नेष पौर्षीं
योषाभूषायमाणामथ विधिवदुपायंस्त शस्ते मुहूर्ते ॥ १ ॥

अनन्तरम् अनया सह कुलोचितान् धर्माननुदिनमनुतिष्ठन् प्रतिष्ठानपुरमधितिष्ठन् प्रोद्दण्डदोर्दण्डमण्डनायितचण्डमण्डलाग्रचाखण्ड्यमानाखण्डसपत्नमण्डलः माधव इव सुमनोगणविकासकृद्, ईशान इव नन्नम्यमानसेनानीशिरोविसरवतंसायमानपादपङ्कजः, विरोचन इव सर्वदास्पृष्टदोषः, वारान्निधिरिव वाहिनीशतपरिगतः, त्रिमूर्तिदयिता-

---

अथ पूरुचरितं वर्णयति—आत्मनीत्यादि । स्वाराज्यं स्वर्गलोकम् । स्वाराड् इन्द्रः, तस्य कर्म स्वाराज्यम् । ब्राह्मणादेराकृतिगणत्वात् कर्मणि ष्यङ् । परिपालनलक्षणं धर्मम् । अत्र लक्षणया तदधिकरणभूतः स्वर्गलोकः स्वाराज्यम् । सुरतरुसदृश इति सर्वानित्यस्य विशेषणं च । अर्थिनोऽपि दातृत्वं प्राप्ता इत्यर्थः । उपायंस्त उदूढवान् । 'उपाद्यमः—' (पा० सू० १-३-५६) इति तङ् । 'विभाषोपयमने' (पा० सू० १-२-१६) इति वा कित्त्वम् ॥ १ ॥

अनन्तरमित्यादि । पुरमधितिष्ठन् पुरे तिष्ठन् । 'अधिशीङ्—' (प० सू० १-४-४६) इत्यधिकरणस्य कर्मसंज्ञा । मण्डलाग्रः करवालः । चाखण्ड्यमानं अत्यर्थं खण्ड्यमानम् । 'खड खडि भेदने' यङन्तात् कर्मणि शानच् । माधवो वसन्तः, विष्णुर्वा । सुमनसां पुष्पाणां, देवानां, सतां च । नन्नम्यमानस्य अत्यर्थं नमतः । सेनान्यः षण्मुखस्य, शिरोविसरस्य शिरस्समूहस्य वतंसायमानं वतंसवद् आचरत् पादपङ्कजं यस्य सः । सेनान्यां वाहिनीपतीनां च । अस्पृष्टदोषः अस्पृष्टा दोषा निशा, दोषाश्च । 'निशा च दोषा रजनी च यामिनी' इत्यभिधानरत्नमाला । वारान्निधिः समुद्रः । 'तत्पुरुषे कृति बहुलम्'

त्रयीव कमलोपशोभितास्यातिरुचिः, इन्द्राणीव सर्वदाखण्डलसित-कान्तिः, दोषज्ञोऽपि दुष्कृतकृद्, उग्रभूतिरप्यनुग्रः, चतुस्सिन्धुरशना-बन्धुरवसुन्धरावनधुरन्धरः, मध्यमलोकमध्युषितमखिलमपि जनमयं राजवृन्दारकोऽलमनन्दत् ॥

कल्पान्तोत्कटकङ्कटीकनिटिलज्वालाग्निकीलावली-
कल्पानल्पतरप्रतापतपनव्यालुप्तदुर्हृत्तमाः ।
पूरुः पूरितविश्व एष यशसा निश्शेषविश्वम्भरा-
भारं भूरितरं करे दधदरं रम्ये पुरेऽरंरमीत् ॥ २ ॥

---

(पा०सू० ६-३-१४) इति बहुलोक्तेः वारान्निध्यापांपतिवाचस्पतिदिवस्पतीत्यादिषु अलुक् । वाहिन्यः नद्यः, सेनाश्च । कमलोपशोभितास्यातिरुचिः कमले पद्मे उपशोभितो ब्रह्मा तेन सहास्यायां स्थितौ अतिरुचिः यस्याः सा । कमलेनोप-शोभितो विष्णुः । कमलेन मृगेण उपशोभितो हरः । 'स्यात् कुरङ्गेऽपि कमलम्' इत्यमरः । कमलवद् उपशोभितेन आस्येन अतिरुचिश्च । सर्वदाखण्डलसित-कान्तिः, सर्वदा आखण्डले सिता बद्धा कान्तिः इच्छा यस्याः सा । अखण्डं पूर्णं यथा तथा लसिता कान्तिः शोभा यस्य सः । दोषज्ञः विद्वानपि दुष्कृतकृद् दुष्कृतं दुरितं करोतीति; दुष्कृतान् दुष्टकर्मणः कृन्ततीति च । भूतिः भस्म, ऐश्वर्यं च । उग्रः शम्भुः, क्रूरश्च । मध्यमलोकं भूमण्डलम् । 'उपान्वध्याङ्वसः' (पा० सू० १-४-४८) इति कर्मसंज्ञा । राजवृन्दारकः राजश्रेष्ठः । 'वृन्दारकनाग--' (पा० सू० २-१-६२) इति समासः । अनन्दत् नन्दयामास, चङ् ॥

कल्पेत्यादि । कल्पान्तः प्रलयः, अत्र उत्कटस्य निखिलमपि जगत् संहर्तुम् अतिभीषणं रूपं परिगृह्य प्रकाशमानस्य, कङ्कटीकस्य शम्भोः, 'कृशानुरेता जोटिङ्गः कङ्कटीक उमापतिः' इति वैजयन्ती । ज्वलतीति ज्वालः स चाग्निश्च । 'ज्वलितिकसन्तेभ्यो णः' (पा० सू० ३-१-१४०) इति णः । कील अर्चींषि । व्यालुप्तानि दुर्हृदः शत्रवः एव तमांसि येन सः । अरंरमीत् अत्यर्थं रेमे । यङ्लुगन्ताल्लुङ् । दधदरंरमीदित्यनेन भूभारधारणे प्रयासाभावो दर्शितः ॥ २ ॥

संव्युष्टासु समासु कासुचिदसौ पौष्यां महिष्यां ततो
विख्यातान् जनयाञ्चकार तनयान् वीरान् प्रवीरादिकान् ।
एतेषां प्रथमात् कृताहितदमादासीदसीमद्युति-
र्नित्योदित्वरदोर्बलोद्धृतधरादस्युर्नमस्युर्नृपः ॥ ३ ॥

अभ्रेषभ्रेजमानादजनिषत ततस्त्वर्भकाः सुभ्रुमुख्या-
स्तस्माद्वा सुन्वदाद्या अत इह गुरुसम्पद्वरीयान् यवीयान् ।
रुद्राश्वाग्र्याश्च जातास्तत उरुमहसोऽस्माद्दचेपुः प्रधाना-
स्तान्तामित्रोऽन्तिनारोऽप्यजनि तत इतोऽत्रस्नवस्त्रस्नुपूर्वाः ॥४॥

त्रस्नोरस्य महीं कृत्स्नामञ्जसा भुञ्जतस्ततः ।
कालिन्दीनामिका कन्या प्रपेदे महिषीपदम् ॥ ५ ॥

---

अथाप्रसिद्धान् नृपान् प्रवीरप्रमुखान् नामोद्देशमात्रेणानुक्रामति—संव्युष्टास्वित्यादि । संव्युष्टासु समाप्तासु । 'उच्छी विवासे' विवासः समाप्तिरिति तरङ्गिण्याम् । 'श्वीदितः—' (पा० सू० ७-२-१४) इति इडभावः । वीरान्, यथोपक्रमणं निर्वहणसमर्थो वीरः । दस्यवः तस्करादयः ॥ ३ ॥

अभ्रेषेत्यादि । अभ्रेषोऽन्यायः । भ्रेजमानात् शोभमानात् । 'एजृ भ्रेजृ भ्राजृ दीप्तौ' । अजनिषत जाताः । अस्मादित्यनेन समासे गुणीभूतः सुभ्रुः परामृश्यते । 'अथ शब्दानुशासनं केषां शब्दानामिति', 'धरण्याक्षेपस्फुटवैरिण्युपगते हिरण्याक्षेपस्ताम्' इति च शास्त्रकाव्ययोः प्रयोगदर्शनात् । 'सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य' (काव्या० सू० ५-१-११) इति वामनोक्तेश्च । गुरुसम्पदा वरीयान्, श्रियैव राज्ञां सत्कारलाभ इत्युक्तं महाभारते—'श्रियो हि कारणाद् राजा सत्क्रियां लभते पराम् । सास्य गूहन्ति पापानि वासो गुह्यमिव स्त्रियाः' ॥ इति ॥ यवीयानिति नाम । अत्रस्नवः अत्रसनशीलाः । 'त्रसिगृधि—' (पा० सू० ३-२-१४०) इति क्नुः । त्रस्नुपूर्वाः त्रस्नुप्रभृतयः ॥ ४ ॥

त्रस्नोरित्यादि । भुञ्जतः पालयतः ॥ ५ ॥

अथ तरणिसुता सा विश्वविज्ञानकीर्तिं
बलिनमिलिलसंज्ञं मेदिनीपालमौलिम् ।
सुतमलभत तस्माद्यामिनीयामभागा-
च्चरमत इह लोके चेतनेव प्रसादम् ॥ ६ ॥

गोत्रादानातिलोलात् परवलविनिहन्तुस्सदानन्दनोत्का-
द्धात्रीनागादमुष्मादभवदथ यथा वृत्रहन्तुर्जयन्तः ।
दुष्यन्ताख्यो नितान्तं विबुधजनमनोमोदनो मेदिनीशो
विश्वं विश्वम्भराया वलयमिदमयं रक्षरक्षेत्यरक्षत् ॥ ७ ॥

---

अथेत्यादि । तरणिसुता कालिन्दी । बलिनमिति, भूम्नीनिः, एतन्मेदिनीपालमौलित्वे हेतुः ॥ ६ ॥

अथ सार्धेन स्तवकद्वयेन दुष्यन्तचरितं विस्तरेण वर्णयति—**गोत्रेत्यादि** । गोत्रा गोसमूहः, 'खलगोरथात्' (पा० सू० ४-२-५०) 'इनित्रकट्यचश्च' (४-२-५१) इति सामूहिकस्त्रः, भूमिश्च; तस्या दाने विसर्जने, रक्षणे च । 'देङ् रक्षणे' । अतिलोलाद् अतितृष्णात् । गोत्रस्य पर्वतस्य आदाने पक्षखण्डने । परबलस्य शत्रुसैन्यस्य, उत्कृष्टस्य वलासुरस्य च । 'रलयोरैक्यमिच्छन्ति केचिदित्याह **वृत्तिकृत्** । डलयोर्बवयोश्चाहुरभेदं **माधवादयः** ॥ रेखा लेखा जलजडौ बिन्दुर्विन्दुरिति क्रमात् । डलयोरुक्तिभेदस्तु ळकारो नाक्षरान्तरम्' ॥ इति **सर्वस्वे** ॥ सदानन्दने सतामानन्दे । सदा सर्वदा नन्दने च । उत्कांद् उत्सुकात् । 'उत्क उन्मनाः' इति **निपातः** । रक्षरक्षेत्यरक्षत् अत्यर्थं रक्षितवान् । 'क्रियासमभिहारे–' (पा०सू० ३-४-२) इति लोट् । लोटो हि क्रियासमभिहारे द्वे भवत इति वक्तव्यम् इति द्विर्वचनम् । नन्वत्र स्रग्धरावृत्ते यतिः कथम्, एषां त्रिमुनियतियुता । अत्र तु 'परवलविनिहन्तु'रित्यत्र महत्यत्र यतिः । सा पदमध्यस्था । अत्र वृत्तरत्नाकरव्याख्या **कविचिन्तामणिः**—'ननु यतिः पदच्छेदः पदावसानं, तत्कथं पदमध्ये स्यात् । पदमध्यस्य पदत्वाभावात् । न खलु वृक्ष इत्यत्र 'वृ' इति किञ्चित् पदं 'क्ष' इति किञ्चित् पदमिति भवति । उच्यते—कल्पनया भवति । किमिति तथा कल्प्यते इति चेत् । श्रवणोद्वेगाभावादिति ब्रूमः । श्रवणोद्वेगभावाभावानुविधायिनौ हि यतिभङ्गाभङ्गौ । तत एकमपि पदं द्विधा विभज्य

मार्गंमार्गमशेषमार्गणगणानश्रान्तमश्रान्तधी-
यों विश्राणनमाततान करुणापूरेण पूर्णाशयः ।
जायेरन्निह जातरूपरुचिरा स्वस्थानसंस्थायिनः
सामोदाः सततं समे पुनरिमे कल्पद्रुकल्पा यथा ॥ ८ ॥

सङ्ग्रामाङ्गणवेदिकासु महितो यस्य प्रतापाभिधो
वैतानाग्निरतिप्रवृद्धरुधिरौघाज्यैरजाज्वल्यत ।
हुत्वा यत्र विशिष्टजीवितपुरोडाशं विपक्षाः क्षणा-
दारोहन्त्यखिलामरीगणमुखोद्गीतापदाना दिवम् ॥ ९ ॥

क्वापि वैरिभयं नाभूत् तस्मिन् भुञ्जति भूतलम् ।
विहिता नवनलीलात्मा तेन यद्वैरिसंहतिः ॥ १० ॥

---

पूर्वभाग एकं पदमिति कल्प्यते । उत्तरभागोऽपि तथा । अतः पदमध्येऽपि यत्या भवितव्यम्' इति । एवं चात्र यतिभङ्गो नात्यन्तदोषाय । उपर्यपि 'अङ्के तां पङ्कजाक्षीमि'ति, 'भो भो धर्माध्वविध्वंसने'त्यादावपि द्रष्टव्यम् ॥ ७ ॥

मार्गमित्यादि । मार्गंमार्गम् अन्विष्य अन्विष्य । 'मार्ग अन्वेषणे' । 'आभीक्ष्ण्य—' (पा०सू० ३-४-२२) इति णमुल् । मार्गणाः याचकाः । अश्रान्तधीः अखिन्नबुद्धिः । कदाचिदपि दाने वैमुख्यलेशोऽपि नाभूदिति भावः । क्वचित् कोणे निःस्वः कश्चिद् विद्यते न वेत्यन्विष्य दाने करुणेत्यादि हेतुः । जातेन यथेष्टभोजनलाभादिना उत्पन्नेन रूपेण आकृतिसौरूप्येण, जातरूपेण स्वर्णेन च, रुचिराः । स्वस्थानम् आत्मस्थानं, स्वर्गश्च । आमोदः हर्षः, सौरभ्यश्च । समे सर्वे । कल्पद्रुकल्पाः प्रायेण कल्पतरुसदृशाः ॥ ८ ॥

संग्रामेत्यादि । प्रताप इत्यभिधा यस्य सः प्रतापाभिधः । वैतानः यज्ञ-सम्बन्धी । अजाज्वल्यत अत्यर्थं ज्वलितोऽभूद्, यङन्ताल्लङ् । पुरोडाशः हविर्विशेषः । हुत्वा, 'हु दानादानयोः' । अत्र धात्वर्थः प्रक्षेपमात्रम् । स च स्वभावाच्चोदिताधारहविषी नियमेनापेक्षते । तस्मादग्नौ हविःप्रक्षेपो होमः । क्षणादारोहणस्य पुरोडाशादीनां विशिष्टत्वं हेतुः ॥ ९ ॥

कापीत्यादि । भुञ्जति पालयति सति । 'भुजोऽनवने' (पा० सू० १-३-६६) इति पालने तङ्निषेधाच्छतृ ॥ १० ॥

अनन्तरमयं तु कदाचित् पामरजन्तुनिकरमुपरमन् निरर्गलनिर्गतनिखिलपौरवर्गविमर्ददुर्गमपुरोमार्गः समुत्पतनजवपरिस्फुटितवारिवाहनिवहया शतकोटिकट्टुतरशफकोटिपाटितधरणितलया निरतिशयरयेभ्यः पादेभ्यो गुरुभ्यो जवाधिक्यमध्येतुमभ्यागतैर्जनमनोभिरिवाणुपरिमाणै रेणुभिर्निषेव्यमाणनिकटया घोटकघटया कवलितहरिदन्तरालो राजन्यवर्यो जन्यधुर्यं रथमधिरूढवानूढकुतुकं नगर्या निर्ययौ ॥

गहनगमिनि तस्मिन् मार्गयैरास्तृताशे
मुनिनिवहनिपीडानाशनाशे नरेशे ।
धरणितलसमुत्थं व्यानशे व्योमदेशे
रज इह शलभोत्थप्रख्यमुद्भावकाशे ॥ ११ ॥

---

अनन्तरमित्यादि । पामरा दुष्टाः । उपरमन् उपरमयन्, उपशमयन् । 'उपाच्च--' (पा० सू० १-३-८४) इति परस्मैपदित्वे 'लक्षणहेत्वोः--' (पा० सू० ३-२-१२६) इति शता । अन्तर्भावितण्यर्थोऽत्र रमिः । शफकोटिः खुराग्रम् । गुरुभ्यः बृहद्भ्यः, आचार्येभ्यश्च । अणुपरिमाणैः, अणुपरिमाणं मनः इति तार्किकाः । काव्यस्य सर्वमताङ्गीकारादत्र तन्मतेनोक्तिः । घोटकघटया वाजिसमूहेन । धुरं वहतीति धुर्यः । 'धुरो यड्ढकौ' (पा०सू०४-४-७७) इति यत् । जन्ये धुर्यः जन्यधुर्यः । 'इहानुक्तैस्समासार्थं द्वितीयेत्यादि खण्ड्यताम् । कृता बहुलमित्येतद् बाहुल्यं वा विजृम्भताम्' ॥ इति सर्वस्वे ॥

गहनेत्यादि । गहनगमिनि वनं गमिष्यति । 'भविष्यति गम्यादयः' (पा० सू० ३-३-३) इति भविष्यति साधु । मार्गयैः मृगयायां कुशलैः । 'कृतलब्ध–' (पा० सू० ४-३-३८) इत्यण् । धरणितलात् समुत्तिष्ठतीति धरणितलसमुत्थम् । 'सुपि स्थः' (पा० सू० ३-२-४) इति कः । व्यानशे व्याप्तम् । 'अशू व्याप्तौ' । 'अश्नोतेश्च' (पा० सू० ७-४-७२) इति नुट् । शलभानाम् उत्थानं शलभोत्थम् 'सुपि स्थः' इत्यत्र स्थ इति योगविभागात् सुपि भावे कः । शलभोत्थं उत्थिताः शलभा इत्यर्थः । क्रिया हि द्रव्यं लक्षयति सामीप्यात् ॥ ११ ॥

धूलीपाली तदा सा इहह विदधती विश्वमन्धम्भविष्णुं
सन्ध्येवोज्जृम्भमाणा गगनभुवि दृगध्यक्षमाशु व्यघुक्षत् ।
पश्यन्नेतस्य शश्वद्रिपुतिमिरभरध्वंसनिघ्नं प्रतापं
प्रौढव्रीलस्तिरोभूद् द्युमणिरिति मतिर्येन जाता जनानाम् ॥ १२ ॥

तदनु स महीपतिः अतिमहितमहीरुहनिवहशाखाशतान्तरितान्तरिक्षान्तरालं, सुरसिन्धुरमिव बहुकुञ्जबन्धुरं, सिन्धुमिव ललितप्रवालरागमिलितं, कैलासमिव बहुविलासिनीलकण्ठं, वैकुण्ठलोकमिव अकुण्ठतरविक्रमहरिसमाक्रान्तं, शरभर्क्षतरक्षुमातङ्गसारङ्गप्लवङ्गप्रमुखमृगनिवहनिनादमुखरितनिखिलदिशामुखं गहनतमं गहनपदम् अवगाह्य मार्गं मार्गं सकुतुकं मार्गमार्गम् अश्वितरसं सञ्चरन्, इषुततितुषारधारानिर्वापितनिखिलकमलकुलो रोषपोषपात्रभूतं प्राप्तं पोत्रिणां गणं पत्रिणां

---

धूलीत्यादि । अनन्धम् अन्धं भवतीति अन्धम्भविष्णुः 'कर्तरि भुवः–' (पा० सू० ३-२-५७) इति खिष्णुच् । दृगध्यक्षं सूर्यम् । 'रश्मिमाली दृगध्यक्षः कर्मसाक्षी त्रयीतनुः' इति वैजयन्ती । व्यघुक्षत् पिहितवती । 'गुहू संवरणे' । 'शल इगुपधात्–' (पा० सू० ३-१-४५) इति च्लेः क्सः । येन दृगध्यक्षसंवरणेन । शश्वद्रिपुतिमिरेत्यत्र 'सुप्सुपा' इति समासः । शश्वदिति व्यतिरेको लज्जाया हेतुः, सा तिरोभावे ॥ १२ ॥

तदन्वित्यादि । सुरसिन्धुर ऐरावतः । कुञ्जा दन्ताः, निकुञ्जाश्च । 'कुञ्जो दन्तेऽपि न स्त्रियाम्' इत्यमरः । प्रवालानां विद्रुमाणां, पल्लवानां च । 'प्रवालो वल्लकीदण्डे विद्रुमे नवपल्लवे' इति शाश्वतकोशः । विलासिनः सर्पाः ; विलासः नृत्तं, तद्वन्तश्च । नीलकण्ठः शिवः, नीलकण्ठा बर्हिणश्च । हरिः विष्णुः, सिंहश्च । 'शरभस्तु गजारातिरुत्पादश्चाष्टपादपि' इति वैजयन्ती । प्लवङ्गः वानरः । 'गुङ् गतौ' । मार्गं मृगसम्बन्धिनम् । मार्गं पन्थानम् । मार्गमार्गम् अन्विष्यान्विष्य । इषुततिरेव तुषारधारा तया । कमलानि मृगाः, पद्मानि च । 'स्यात् कुरङ्गेऽपि कमलम्' इत्यमरः । पोत्रिणां सूकराणाम् । पोपुथद् अत्यर्थं निघ्नन्, यङ्लुगन्तात् शता । 'पुथ हिंसायां' दिवादिः । अनिदित्त्वान्नलोपः । विपाठधाटया शरसमूहेन । नष्टास्यताम् आस्यरहितत्वम् । पाटयन्नष्टास्यतामित्यत्र

निकरेण यूथशः पोपुथत्, सत्वरम् आगत्वरम् आत्तरभसव्यात्ततरवक्त्र-कोटरम् उद्भटतरनेत्रयुगलपरिभ्रमणपरित्रासितप्रपञ्चं पञ्चास्यमपि विपाठधाटया पाटयन्नष्टास्यतां प्रापयन्, अपराण्यपि दुष्टसत्त्वानि मेथमानो वानमाथिकस्तृषा विषीदन्, अपयातमृगयातृषोऽपि वनमन्वेष-मन्वेषमेषमाण एष परिमालिनीतीरमवततार ॥

ततश्च—

विकचसरसिजोद्यत्सौरभीलोभनीया
विचलमधुकरालीचारुझङ्काररम्या ।
श्रमभरमपनिन्ये मालिनी तस्य सद्यः
शिशिरविशदपाथोवाहिनी वाहिनी सा ॥ १३ ॥

तदनु तदीयतीरभुवि विराजमानामाश्रमावनीम् अतिपावनीम् आरान्निशाम्य द्वारोपशल्यनिवेशितपृथुवरूथिनीकोऽसौ पुरोहितपुरस्सरः पुरुविनयभास्वरोऽभ्यन्तरभुवम् अभ्यगाहत ॥

---

संहिताभेदाद् अष्टास्यतामिति प्रतीतेर्विरोधाभासः । मेथमानः निघ्नन्, 'मिद्द मेद्द मेधाहिंसयोः' । 'थान्तावेता'विति क्षीरस्वामी । धान्ताविति न्यासे । वनमाथं धावन् वानमाथिकः । माथशब्दः पथिपर्यायः । 'माथोत्तरपद—' (पा० सू० ४-४-३७) इति ठक् । वनं जलम्, अरण्यं च । अन्वेषमन्वेषम् अन्विष्यान्विष्य । 'आभीक्ष्ण्ये—' (पा० सू० ३-४-२२) इति णमुल् । एषमाणः गच्छन् । 'एषृ गतौ' । परिमालिनीतीरं मालिनीतीरे ॥

ततश्च, विकचेत्यादि । मालिनी वाहिनी मालिनी नाम नदी । सौरभी सौरभ्यम् । सौरभ्यशब्दात् ङीषि 'हलः—' (पा० सू० ६-४-१५०) इति यलोपे रूपम् । अत्र श्रमभरापनयनाभिप्रायत्वेन बहूनां विशेषणानामुक्तत्वात् परिकरोऽलङ्कारः । विशेषणसाभिप्रायत्वं परिकरः । वृत्तनामाङ्कितोऽयं श्लोकः । 'ननमयययुतेयं मालिनी भोगिलोकैः' ॥ १३ ॥

तदन्वित्यादि । द्वारोपशल्यभुवि निवेशितेति आश्रमबाधाभावार्थम् । 'शेषाद्विभाषा' (पा० सू० ५-४-१५४) इति कप् । पुरः सरतीति पुरस्सरः । 'पुरोग्रत—' (पा० सू० ३-२-१८) इति टः । अभ्यगाहत प्राप्तवान् ॥

ततस्तस्यां चन्दनस्पन्दनकुन्दमन्दारमाकन्दतिन्दुकसिन्दुवार-तालहिन्तालतमालकृतमालकपित्थाश्वत्थकर्णिकारत्वचिसारकेरकङ्केलिकुर-वकमरुवकपनसपलाशनागपुन्नागवकुलसरलप्रियालप्रायैः फलेग्रहिभिः उदग्रपलाशपेशलैः अनेकैरनोकहैरसूर्यम्पश्यायां, क्वचिद् अक्षपादो-पज्ञगहनतरन्यायविज्ञानवैज्ञानिकैः, कुत्रापि कणादप्रणीततर्कप्रवीणैः, कुतचिद् अमलकापिलनिरीश्वरसाङ्ख्यसङ्ख्याननिरतैः, क्वापि फणी-श्वरफणितसेश्वरसाङ्ख्यपारदृश्वभिः, कुहचन जैमिनीयसूत्रविवरणपारीण-हृदयैः, कुत्रचन व्यासव्यासूत्रितोत्तरमीमांसोत्तरलचित्तैः, कुहचित् शौन-कीयशैशिरीयादिशीक्षाशिक्षणविचक्षणैः, क्वचन पाणिनिभाषितव्याक-रणविवरणधुरीणधिषणैः, क्वचिद् अल्पेतरकल्पपठनतत्परैः, कुत्रचन निरुक्ताध्ययनादत्तचित्तैः, कुत्रचित् छन्दोविचितिविहितचेतनैः, क्वचित्

---

तत इत्यादि । चन्दनादयः षड्विंशतिर्वृक्षविशेषाः । फलेग्रहिभिः अवन्ध्यैः । 'फलेग्रहिरात्मम्भरिश्च' (पा० सू० ३-२-२६) इति निपातः । असूर्यम्पश्यायां सूर्यमपि न पश्यन्त्याम् । 'असूर्यललाटयोः—' (पा०सू० ३-२-३६) इति खश्, शप्, पश्यादेशः । नैयायिकवैशेषिकभेदेन द्विविधं तर्कशास्त्रम् । अक्षपादोपज्ञं चासौ न्यायश्च । अक्षपादेन प्रथममुपज्ञातः, अक्षपादकृतप्रथमारम्भ इत्यर्थः । 'उपज्ञोपक्रमं—' (पा० सू० २-४-२१) इति नपुंसकत्वे समासः । न्यायः तर्कः, तस्य विज्ञाने वैज्ञानिकैः कुशलैः । 'प्रयोजनम्' (पा०सू० ५-१-१०९) इति ठ(क् ? ञ्) । सेश्वरनिरीश्वरभेदेन द्विविधं सांख्यशास्त्रम् । फणीश्वरोऽनन्तः । पारदृश्वभिः पारं दृष्टवद्भिः । 'दृशेः क्वनिप्' (पा० सू० ३-२-९४) इति क्वनिप् भूते । जैमिनीयं जैमिनिना प्रोक्तं पूर्वमीमांसासूत्रम् । पारीणं पारगामि । 'अवारपार—' (पा०सू० ५-२-११) इति खः । 'अवारपार' इति सङ्घातविगृहीत-विपर्यस्तग्रहणम् । शौनकेन प्रोक्ता शौनकीया । 'शौनकादिभ्यश्छन्दसि' (पा०सू० ४-३-१०६) इति वेदे णिनिः, अन्यत्र छः । शैशिरीयाः शिशिरेण प्रोक्ताः । अकारादिवर्णानां स्थानकरणप्रबोधिका 'ऋटुरषाणां मूर्धा' इत्यादिका शीक्षा । साधुशब्दानां व्याख्यानं व्याकरणम् । यागक्रियाणामुपदेशः कल्पः । 'वर्णागमो वर्णविपर्ययश्च' इत्यादिना निश्चयेनोक्तं निरुक्तम् । छन्दसां गायत्र्यादीनां

ज्योतिषिकाभ्यसनाभ्यधिकमानसैः, कुहचन महितधर्मशास्त्रपारायण-पठनपरायणैः, ऐतिहासिकैः, पौराणिकैः, चातुर्वैद्यैः, त्रैविद्यैः, द्विवेदैः, एकवेदैः, पदकैः, क्रमकैः, सायंप्रातिकाग्निहोत्रोपास्तिपरास्तसमस्तदुष्कृतस्तोमैरास्तिकैः, अस्तशौवस्तिकविभवग्रहैश्च ब्रह्मर्षिकुलैः, ब्रह्मवर्चस-

---

विचितिः शास्त्रं छन्दोविचितिः । ग्रहणादीनां गणनशास्त्रं ज्योतिषम् । 'अधिकृत्य कृते ग्रन्थे–' (पा॰ सू॰ ४-३-८७) इत्यण् । 'संज्ञापूर्वको विधिरनित्यः' (परि॰) इत्यवृद्धिः । धर्मशास्त्राणि याज्ञवल्क्यमनुव्यासादिप्रणीताः स्मृतयः । 'साकल्यासङ्गवचने पारायणपरायणे' इत्यमरः । ऐतिहासिकैः इतिहासम् अधीयानैः । इतिहासो महाभारतात्मा । इतिहशब्दः पारम्पर्योपदेशेऽव्ययम् । इतिहास्तेऽस्मिन्निति इतिहासः । आस्तेरधिकरणे 'हलश्च' (पा॰ सू॰ ३-३-१२१) इति घञ् । पौराणिकैः पुराणान्यधीयानैः । पुराणानि श्रीभागवतादीनि अष्टादश । तदधीत इत्यर्थे 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ठग्वक्तव्यः' (वा॰) इति ठक् । चतुरो वेदानधीयानाः चतुर्वेदाः । द्विगुत्वादणो लुक् । चतुर्वेदा एव चातुर्वैद्याः । ष्यञि 'चतुर्वेदस्योभयपदवृद्धिश्च' (वा॰) इत्युभयपदवृद्धिः । त्रैविद्यैः त्रिभागा विद्या त्रिविद्या, वेदत्रयम् । तद्विदः त्रैविद्याः । 'क्रतूक्थादि–' (पा. सू. ४-२-६०) इत्यत्र विधान्ताद् अनङ्गक्षत्रधर्मत्रिपूर्वादित्युक्तेः त्रिपूर्वत्वादण् । द्वौ वेदावधीयाना द्विवेदाः । 'द्विगोर्लुक्–' (पा॰ सू॰ ४-१-८८) इत्यणो लुक् । एकं वेदमधीयानाः एकवेदाः । अत्रापि एकापूपीन्यादिवद् द्विगुत्वादणो लुक् । एकापूपीति 'तद्धितार्थ–' (पा॰ सू॰ २-१-५१) इति समाहारे समासः । 'ननु अनेकविषयः समाहारो नैकस्य सम्भवति । न न संभवति । कथम्, इहैकम् अपूपं कश्चित् कृपणो ददद्नेकमिव मन्यते । तथा दाने श्रद्धातिशयाद् अपूपस्य महत्त्वाद्वानेकस्मिन् यः सम्भ्रमः तमेकस्मिन्नपि करोति, एकतनप्रतिग्रहीता कृपणो व्याख्यातः । तत्रारोपितबहुत्वाश्रयः समाहार इति सिद्धमिति' हरः । विद्यते ज्ञायतेऽनेन धर्माधर्माविति वेदः । 'हलश्च' इति घञ् । पदकैः पदम् अधीयानैः । क्रमकैः क्रमम् अधीयानैः । 'क्रमादिभ्यो वुन्' (पा॰ सू॰ ४-२-६१) इति वुन् । सायंप्रातर्भवं सायंप्रातिकम् । अव्ययसमुदायत्वात् ट्युट्युलौ नेष्टौ । कालाट्ठञि टिलोपः । परलोकोऽस्तीति मतिर्येषां ते आस्तिकाः । शौवस्तिकः श्वस्तनः । 'श्वसस्तुट् च' (पा॰सू॰४-३-१५) इति

परिबृंहितदीप्तिभिः देद्युत्यमानाः, उल्लोलतरमालिनीकल्लोलहल्लोहलाम्रे-
डिताध्ययनघोषबधिरितनिखिलजनकर्णरन्ध्राः, विश्लथितशाश्वतिक-
विरोधैः श्वापद्गणैः शेश्रीयमाणवल्लिवलयाः ललितमुत्पुच्छयमानैः
वातमजपोतसन्तानैः सन्तन्यमानकामनीयकाः, विटपिविटपोत्करा
वलम्बवल्कलाजिनजालैः जाज्वल्यमानाः विडम्ब्यमानवितानविविध-
विधानविवशमानसेन माणव्येन देदीप्यमानाङ्कणाः पर्णशाला भृशमवर्ण-
हारिणीरवर्णनीयगुणमनोहारिणीरयम् अतिकुतुकम् अवलोकयन्न-
भिगम्य, लोकमहितानुभावान् अखिलवैखानसानधिगतविनयम्
अवनामवनामं तदुदिताशिषो लाभंलाभं च सञ्चरन्, सञ्चितानन्दतया
विरिञ्चिविष्टपाविष्टमिवात्मानं मन्यमानः, विलोकन एव वितूस्तयतो
मुनिप्रकाण्डस्य कण्वस्य कुलपतेः मन्थरचलत्कन्धरं रोमन्थायमानैः

---

शैषिकष्ठ(क् ? न्)। ग्रह आग्रहः। ब्रह्मवर्चसं वृत्ताध्ययनसम्पत्तिः। 'ब्रह्महस्तिभ्यां वर्चसः' (पा० सू० ५-४-७८) इत्यच् समासान्तः। देद्युत्यमानाः अत्यर्थं द्योतमानाः। 'द्युत दीप्तौ' यङ्। हल्लोहलः कोलाहलः। आम्रेडितः द्विगुणितः। शाश्वतिकः नित्यः। 'येषां च विरोधः शाश्वतिकः' (पा० सू० २-४-९) इति सूत्रनिर्देशात् ठक्। श्वापदैः हिंस्रसत्त्वैः। शेश्रीयमाणाः अत्यर्थं श्रीयमाणाः। 'श्रिञ् सेवायाम्' यङन्तात् कर्मणि शानच्। उत्पुच्छयमानैः उदस्यमानपुच्छैः, 'पुच्छभाण्ड—' (पा० सू० ३-१-२०) इति णिङ्। 'पुच्छादुदसने व्यसने पर्यसने च' (वा०)। यथेच्छं इच्छामनतिक्रम्य। वातमजा मृगविशेषाः। खश्प्रकरणे 'वातशुनीतिलशर्धेषु अजधेट्तुदजहातिभ्यः खश उपसंख्यानम्' (वा०)। वातं प्रति धावन्तीति वातमजाः। जाज्वल्यमानाः अत्यर्थं दीप्यमानाः। विडम्ब्यमानानि अनुक्रियमाणानि। वितानस्य यज्ञस्य। विधानानि कर्माणि। माणव्येन माणवसमूहेन। 'ब्राह्मणमाणव—' (पा० सू० ४-२-४२) इति यन्। अवनामम् अवनामम् अवनम्यावनम्य। लाभंलाभं लब्ध्वा लब्ध्वा च सञ्चरन्। 'आभीक्ष्ण्ये—' (पा. सू. ३-४-२२)इति णमुल्। 'आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम्' इति द्विर्वचनम्। विरिञ्चिः ब्रह्मा। वितूस्तयतः, तूस्तानि पापानि विशेषेण घ्नतः। 'मुण्डमिश्र—' (पा० सू० ३-१-२१) इति णिच्।

एणगणैराकीर्णबाह्याङ्कणां पूर्णकान्तिशालां पर्णशालाम् अनतिदूरे निर्वर्णयामास ॥

स विधाय बहिः पुरोधसं तं द्रुतमभ्यन्तरमेयिवान् विनीतः।
अनवेक्ष्य कमप्यवोचदुच्चैरिह को वा भवतीति भूमिपालः ॥ १४ ॥

अनन्तरम् उटजाभ्यन्तरादायान्तीं मेदुरमुदिरोदरादिव सौदामिनीं, समन्ततः समुदञ्चता काञ्चनकान्तिवञ्चनचुञ्चुना सुषमासुधाप्रवाहेण प्रपञ्चाभ्यन्तरम् अभिषिञ्चन्तीं, पञ्चबाणविजयवैजयन्तीमिव, पञ्चजनहृदयसञ्चलनायाचलातले सञ्चरन्तीं, काञ्चन काञ्चनपाञ्चालिकामिव प्राणपञ्चकाञ्चितां, पञ्चशरपरब्रह्मविद्यामिव नेत्रसञ्चरविद्योत-

---

तूस्तात् विहतौ। रोमन्थायमानैः रोमन्थं वर्तयद्भिः 'कर्मणो रोमन्थ–' (पा० सू० ३-१-१५) इति क्यङ्। पूर्णकान्तिं शलति गच्छतीति पूर्णकान्तिशाला। 'शलहुलपतॢ गतौ'। यद्वा शाल्यते श्लाघ्यते इति। 'अकर्तरि च–' (पा० सू० ३-३-१९) इति कर्मणि घञ्। 'शाडृ श्लाघायाम्'। निर्वर्णयामास ददर्श ॥

स इत्यादि। पुरोधसं बहिर्विधाय द्रुतमभ्यन्तरमेयिवान्। कण्वविलोकनौत्सुक्येन तदुटजसमीपमुपगम्य अध्ययनश्रवणाभावादिना तदसन्निधानम् आशङ्क्य पुरोहितस्य अनियोज्यत्वाद् वृत्तान्तपरिज्ञानाय स्वयमेवाभ्यन्तरं गतवानित्यवगन्तव्यम्। द्रुतमिति कण्वविलोकनौत्सुक्यं व्यज्यते। एयिवान् प्राप्तवान्। 'उपेयिवाननाश्वान्–' (पा० सू० ३-२-१०९) इति निपातः। नात्रोपसर्गस्तन्त्रम् एकवचनं च। अन्योपसर्गात् निरुपसर्गाच्च भवतीति वृत्तिः। विनीत इत्यनेन उच्चैःकथनस्यानवेक्षणमेव हेतुर्नाविनय इति प्रकाश्यते। 'उच्चैः प्रकथनं हासं ष्ठीवनं कुत्सनं तथा। जृम्भणं गात्रभङ्गं च पर्वस्फोटं च वर्जयेत् ॥' इति कामन्दकीये उच्चैःकथनस्य निषिद्धत्वात् ॥ १४ ॥

अथात्मनिवेदनमाकर्ण्य सखीभ्यां सहागच्छन्तीं शकुन्तलां ददर्शेत्याह—अनन्तरमित्यादि। मुदिरः मेघः। समुदञ्चता समुद्गच्छता। वञ्चनचुञ्चुना वञ्चनप्रसिद्धेन। 'तेन वित्तश्चुञ्चुप्–' (पा० सू० ५-२-२६) इति चुञ्चुप्। वित्तः प्रसिद्धः। पञ्चजनाः मनुष्याः। सञ्चलनाय सञ्चलनं कर्तुं, क्रियार्थे तु चतुर्थी। कम्पने चलिरिति मित्वाच्चलयति शाखामितिवत् कम्पने ह्रस्वः।

मानाम्, इयन्तं कालम् अनन्तसीमन्तिनीनिर्माणपरिचयपरिणतां करचातुरीमिव चतुराननस्य, आकल्पाङ्गनासर्गकल्पितसौन्दर्यसारोत्करैरिवोत्पादितां, प्रतिप्रतीकसमाकृष्टविष्टपत्रयाधिवासिजनदृष्टिसन्तानां, कुशेशयकुलेषु अकृत्रिममैत्रीरसात् पृथगवस्थानाक्षमतया सहावस्थिततरुणतरणिकिरणव्यतिरेकेणेव आत्मनोऽनुहरमाणेषु मरालनिकरेषु करालरभसेनेव रागभरभरिततरुणजनहृदयाक्रमणेनेव च शोणतरेण चरणनलिनयुगलेन धरणितलं निर्मलमाणिक्यमणिनिर्मितमिव निर्माय निर्माय निर्मायनर्म सञ्चरन्तीं, स्वाभाविकगात्रसौरभलोभादुपरि परिपतन्ती मधुररसलाभविधुरमानसा कलनिनदहंसकासितललितचरणारविन्दसन्दर्शनेन मरन्दरसपिपासया तरसावतरन्ती भ्रमरपरम्परेति भ्रमावहेन तिमिरभरवत् प्रकाशमानेन जङ्घान्तलम्बिना केशपाशेन दिनेऽपि दर्शितनिशासमावेशां, वदनहरिणाङ्ककिरणबाणाक्रमणशङ्कया दूरादेव निवारणाय निश्चितमानसैर्नासीरसीमनि संस्थितैः कैश्चन कचभरतिमिरवरूथिनीनाथैरिव करालैरलकनिकरैः गर्हितबर्हातपत्रां,

---

पाञ्चालिकां पुत्रिकाम्। प्राणपञ्चकाञ्चितां प्राणपञ्चकं प्रापिताम्। सञ्चरः मार्गः। 'गोचरसञ्चर--' (पा० सू० ३-३-११९) इति निपातः। चातुरी चातुर्यम्। प्रतिप्रतीकं प्रत्यङ्गं, वीप्सायाम् अव्ययीभावः। सहावस्थितस्य तरुणतरणिकिरणस्य व्यतिरेकेण सम्पर्केणेव रभसेनेव आक्रमणेनेवेति त्रयाणां शोणतरेणेत्यनेन सम्बन्धः। शोणतरत्वस्य हेतुरुत्प्रेक्ष्यत इति हेतूत्प्रेक्षा। आत्मनः अनुहरमाणेषु अनुकुर्वाणेषु। तुल्यार्थयोगात् षष्ठी। मराला हंसाः। निर्माय निर्माय विधाय विधाय। निर्मायम् अकृत्रिमं नर्म लीला यस्यां सञ्चरणक्रियायाम् इति क्रियाविशेषणम्। स्वाभाविकैः स्वतःसिद्धैः। 'स्वाभाविकस्वार्थिकादेरैञ्न भाष्यप्रयोगतः'। सुरभेर्भावः सौरभम्। 'इगन्ताच--' (पा०सू०५-१-१३१) इत्यण्। हंसकासितं हंसेन कासितं शोभितम्। हंसकेन पादकटकेन आसितम् आबद्धं च। मरन्दरसः मकरन्दः। 'केशाः शिरसिजमूर्धजकचचिकुरशिरोरुहाः स्मृता वालाः' इति अभिधानरत्नमाला। नासीरसीमनि अग्रभागे। करालैः भीषणैः, उज्ज्वलैश्च। मृगमदः कस्तूरी। चापलता प्रशस्तं चापम्;

बालेन्दुमपि कलङ्कितमिवातन्वता फालान्तलसितेन मृगमदतिलकेन शिथिलितयुवलोकधैर्यसारां, तरलतरकलिन्दकन्यकातरङ्गभङ्गिनिरासचतुरयोः विजितमदनचापलतयोः विहितमदनचापलतयोः भ्रूलतयोर्विलासैः स्वारसिकैरायासितसकलरसिकलोकां, रुचिरतरचकोरगर्वसर्वस्वनिर्वासनव्यसनिनोः आत्मसुहृदम् अवतंसोत्पलमुपगूहितुम् उत्पन्नतर्षयोरिव श्रोत्रपरिसरं प्राप्तयोः अपलपितालीकृतशतपत्रपत्रयोः शफरमित्रयोः नेत्रयोः प्रसृतिसमितयोः सितासितैः कान्तिकन्दलैः इन्दीवरारविन्ददलसन्दानितसुन्दराकारदामजालालङ्कृतमिव व्योमतलं व्यातन्वतीं, विमलतरसुवर्णार्णोजकर्णिकासवर्णेन सुकुमारतरसूनमयशरावधीरणधीरतरतरुणजनवेधाय एकत्र निक्षिप्तेन रतिनालीकनालीकयोः नलिकयुगलेनेव वदनकान्तिसरसि विहरमाणयोः जिघत्सयान्योन्यम् अभिपततोः नयनशफरयोर्निवारणनिपुणसेतुचातुरीम् ऊरीकुर्वता रदनच्छदबिम्बरसरसनेच्छया भ्रूलतालम्बमानकीरपोततुण्डानुकारिणा वज्रपुष्पदर्पापहारिणा हारिणा नासानालेन आसादिताभां, दर्पकमणिदर्पणदर्पभरापसारणतत्परेण विमलतरकपोलपालीयुगलेन परिहसितभृशमहिततरणिमणिरामणीयकां, सन्ततनिजानुचिन्तया सारूप्यलम्भनादिव

---

चापलः चापलवान्, अर्शआद्यच्, तस्य भावः तत्ता । विहिता मदनचापलता याभ्याम् । स्वारसिकैः स्वरसे भवैः । अध्यात्मादित्वात् ठक् । व्यसनिनोः आसक्तयोः । 'व्यसनं सक्तिविपदोः' इति वैजयन्ती । 'व्यसनं तात्पर्यम्' इति कादम्बरीव्याख्यायाम् । 'पाणिर्निकुब्जः प्रसृतिः' इत्यमरः । निकुब्जः किञ्चित् कुञ्चितः । प्रस्रियते प्रसार्यत इति व्युत्पत्त्या प्रसृतिशब्दो विसृताङ्गुलौ वर्तितुमर्हति । तथापि विरुद्धलक्षणया निकुब्जपाणौ वर्तत इति सुबोधिन्याम् । सन्दानितं बद्धम् । अर्णोजं तामरसम् । नालीकनालीकः कामः । 'नालीकमब्जे बाणे ना' इति वैजयन्ती । नलिकयुगलेन द्रोणीचापयुग्मेन । जिघत्सया अदनेच्छया । बिम्बरसः बिम्बिकाफलरसः । कीरपोतः शुकपोतः । 'वज्रपुष्पं पुष्पं तिलस्य यत्' इत्यमरः । कपोलपालीति, '–पादमिश्रपाशहस्तभित्तिस्थलपाल्यादिभिः' इति भोजोक्त्या (स० क० ३-२-८८) 'प्रशंसावचनैश्च'

रक्तीकृतसमस्तलोकचित्तेन दरोल्लसितपल्लवोदरतुल्यकुल्येन विद्रावित-विद्रुमेण अधरीकृतसुधारसेनाधरेण विधुरीकृतबिम्बीरुचिकदम्बां, रुचिर-तररदनच्छदरुचिच्छुरितया महितमल्लिकावल्लिकलिकातुल्यया रदनमत-ल्लिकावल्या शिखरनिकरमुल्लापयमानां, कटाक्षबाणोत्तेजनमणिवर्तकाय-मानेन हाटकताटङ्कयुगलप्रकाण्डेन परिमण्डितरुचिरगण्डमण्डलां, कर-युगलानवरतजितसकलकमलकुलाम् एनामाश्रित्य श्रमरहित एव निखिल-नीरजन्मकदम्बानि निर्मूलयिष्यामीति निश्चित्यादसीयास्यतामासेदुषा प्रसेदुषा कुमुदबन्धुनेव बन्धुरवदनबिम्बेन वल्गूयन्तीं, शम्बरवैरिविजय-कम्बुबिम्बोकविडम्बिना पाञ्चजन्येनेव भद्रश्रीभर्तृभुजसमाश्लेषसमुचितेन देवदत्तेनेव कर्णानन्ददानिरतनिनदेन कण्ठकाण्डेन कुण्ठेतरकान्ति-कन्दलां, पृथुतरपयोधरपृथिवीधरोपत्यकोत्पन्नकल्पलतिकायमानमाकल्प-कल्पितानल्पकान्तिभरितम् अतिरुचिरचाम्पेयमालाबालमित्रं ललित-

---

(पा० सू० २-१-६६) इति समासः । तरणिमणिः स्फटिकम् । तुल्यकुल्येन सदृशेनेति यावत् । 'अपूर्वपदादन्यतरस्यां यड्ढकञौ' (पा० सू० ४-१-१४०) इत्युक्तेः 'तत्र साधुः' (पा० सू० ४-४-९८) इति यत् । बिम्बी बिम्बिका । शिखरनिकरं, 'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः' । उल्लापयमानां वञ्चयन्तीम् । 'लियः—' (पा० सू० १-३-७०) इत्यत्र चकारात् प्रलम्भन आत्मने-पदम् । उत्तेजनं तीक्ष्णीकरणम् । वर्तकः शाणः । ताटङ्कप्रकाण्डस्य प्रशस्तस्य ताटङ्कस्य । 'कर्णपूरं तु पुष्पाद्यैः ताटङ्को दन्तकादिभिः' इति वैजयन्ती । 'गण्डो गल्लः कपोलश्च हनुस्तुल्यार्थवाचकाः' इत्यभिधानरत्नमाला । करयुगलेन रश्मिद्वयेनेत्यपि स्फुरति । निर्मूलयिष्यामि उन्मूलयिष्यामि । आसेदुषा प्राप्तवता । प्रसेदुषा प्रसन्नेन । वल्गूयन्तीं मधुराम् । 'वल्गु पूजामाधुर्ययोः' इति कण्ड्वादौ सुब्धातुवृत्तिः । बिम्बोकः विलासः । भद्रस्य श्रीभर्तुः विष्णोः । श्रीभर्तुरिति धवार्थस्य भर्तृशब्दस्य 'याजकादिभिश्च' (पा० सू० २-२-९) इति समासः । भद्रश्रीः चन्दनं च । 'चन्दनोऽस्त्री मलयजो भद्रश्री रोहणद्रुमः' इति वैजयन्ती भद्रश्रीभर्तृ इत्यत्र 'जनिकर्तुः प्रकृतिः' (पा० सू० १-४-३०) इति सूत्रोक्त्या तृचः समासनिषेधोऽनित्यः । देवदत्तं नाम पार्थस्य शङ्खः । कर्णस्य राधेयस्य च ।

बाहायुगलं तरुणलोकमनसा साकमालोलयन्तीं, हारितरतारहारमृणालनालकवलनकलितकुतुकोपनतकोकमिथुनशङ्कामङ्कुरयता कोकनदकोरकशोकदायिना शशाङ्केनेव नक्षत्रमालालङ्कृतेन अध्यापकेनेव मध्येमाणवकोपसङ्गतेन वल्गुना वक्षोजयुग्मेन कुड्मलितशातकुम्भकुम्भशोभां, पयोधरधराधराधित्यकापतल्लावण्यतरङ्गिणीचण्डवेगोत्खातपिचण्डस्थलसंश्लेषादिव पीनपीनेन पुलिनदेशदेशीयेन सृष्टिसमये स्रष्टुरात्मभुवोऽपि दत्तचित्तजन्मना मन्मथरथनर्मनिर्मथनकर्मठेन सुकृतिजनसुलभेन घनतरेण जघनभरेण जगदन्तरासीनजनतान्तरङ्गं तरङ्गयन्तीं, मृदुहसितनवसुधारससमास्वादनोत्सवसमुत्सुकतया सहसाभिजातनाभिकुहरादारोहता कचकलापावलोकाङ्कुरितकलापिशङ्कयान्तरावस्थितेन कालव्यालपोतेनेव मकरकेतुमहोत्सवविधित्सुना तारुण्यतान्त्रिकेण मदनमन्दिरपुरोभागसमुत्थापितेन इन्द्रनीलकेतुदण्डेनेव च विरोचमानया रुचिरतरया रोमराजिलतया विराजमानां, गतिविषयविलासविशेषमुमुषिषया जघनपुलिनसमुत्थितहंससन्दोहसन्देहावहेन नितरां वरेण गौराम्बरेण परिहितां, प्रतितरुणिचरणरततरुणजनहृदयपरिणहन-

---

दाने खण्डने च । 'चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः । बालमित्रम् अत्यन्तबन्धुम् । सदृशमिति यावत् । आलोलयन्तीम् आलोलं कुर्वतीम् । कोकनदं रक्तोत्पलम् । 'सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः' इत्यमरः । मध्येमाणवकं माणवकानां वटूनां मध्ये । 'पारे मध्ये–' (पा० सू० २-१-१८) इत्यव्ययीभावः । मध्ये अन्तरान्तरा माणवविषयेण कोपेन च । मध्ये अन्तराले । माणवकेन अर्धहारेण । 'अर्धहारो माणवकः' इत्यमरः । लावण्यमेव तरङ्गिणी नदी । पिचण्डम् उदरम् । स्रष्टुः आत्मभुवोऽपि स्वनिर्मितुः धातुरपि । यद्वा स्रष्टुः ब्रह्मणः आत्मभुवः कामस्यापि । सुधा सर्पाणां पेयोऽमृतविशेषः । कालव्यालः कृष्णसर्पः । विधित्सुना विधातुमिच्छुना । तारुण्यमेव तान्त्रिकः तेन । मुमुषिषया मोषितुमिच्छया । 'मुषस्तेये' सन् । 'रुदविद–' (पा० सू० १-२-८) इति किल्वाद् गुणाभावः । प्रतितरुणि तरुण्यां तरुण्याम् । परिणहनं बन्धनं

तितनिषुकुसुमेषुनिहितमहितहेमदामायमानेन मञ्जु शब्दायमानेन रतिरमणमणिनगरलसितकनकवरणचातुरीधुरीणेन प्रतिकलं परिवरीवृध्यमानदुर्वहतरजघनभरं नियमयितुमिव निबद्धेन मणिगणाञ्चितेन काञ्चीगुणेन सञ्चिताभां, मञ्जुलकेतकीमञ्जरीमञ्जुरीतिमावहद्भ्यां नीलकण्ठकण्ठकान्तिलङ्घनजङ्घालाभ्यां जङ्घाभ्यां करिकरकरभरम्भास्तम्भडम्भस्तंभनोज्जृम्भितोरुतरोरुयुगभूरिभारभरणाय उत्तमाङ्गनिहितेन उत्तम्भेनेव जानुयुगलेन जातबहलशोभां, निजमन्दिराजिरमन्दगमनेऽप्यमन्दां म्लानिमुद्वहता प्रत्यग्रपत्राग्रप्रत्युप्तरमणीयमुक्ताफलकृतरामणीयकेन कलधौतकमलेनेव मङ्गलतराङ्गुलिनिकराञ्चलोदञ्चितनखरमणिपेशलेन पल्लवपेलवेन पदतल्लजेनोल्लसन्तीं, वनस्थलीमिव रुचिरतमालकाननां, सरसीमिव भुवनमनोहरां, मधुवैरिणमिव रुचिरपयोधररुचिं, गिरिशमूर्तिमिव पुष्करनेत्रपुष्कलाभाम्, अनन्यसामान्यलावण्यवेणीतिरोहितामप्यतिरोहिताम्, अतिरोहितामपि श्यामां, श्यामामपि ज्यायसीं, वर्णनापथमनवतीर्णाम् अतिथिसभाजनाय करकलितार्घ्यभाजनाभ्यां सखीभ्यां समुद्भासितपार्श्वभागां, काममपि कुमारीं परिलोकमपरिलोकितचररुचिररूपां रूपयामास ॥

---

तितनिषुः कर्तुमिच्छुः परिणहनतितनिषुः, 'न लोका—' (पा० सू० २-३-६९) इति षष्ठीनिषेधः । वरणः प्राकारः । प्रतिकलं कलायां कलायाम् । कला कालभेदः । क्षणे क्षण इति यावत् । परिवरीवृध्यमानं अत्यर्थं वर्धमानम् । 'जङ्घालोऽतिजवः' इत्यमरः । उत्तम्भो नाम भारोद्वहनार्थं शिरसि निधेयः पदार्थविशेषः । रुचिरं तमालकाननं यस्याम् । यद्वा रुचिरतमालकम् आननं यस्याः ताम् । तमालकं तिलकम् । भुवनं जलं, लोकश्च । पुष्करं व्योम, कमलं च । नेत्रं वसनं, नयनं च । अतिरोहिताम् अतिरक्ताम् । श्यामां श्यामवर्णां, यौवनमध्यस्थां च । ज्यायसीं वृद्धतरां, प्रशस्ततरां च । परिलोकं लोके 'परिप्रती अपि सप्तम्यर्थौ' इति माधवोक्तेः विभक्त्यर्थेऽव्ययीभावः । रूपयामास दृष्टवान् । 'रूपाद्दर्शने' इति णिच् ॥

चिचिन्त चैवं चित्रीयमाणचित्तः किञ्चिदङ्कुरितचित्तजन्मा स धात्रीपतिः ।

कैश्यं विश्वैकवश्यं शिव शिव वदनं शारदेन्दुप्रकाशं
यूनां मानापनोदि श्रमजलजटिलं चित्रकं चित्तहारि ।
वक्षोजावक्षताभौ मणिमयकलशीगर्वनिर्वापणोत्कौ
बाहू रम्यौ च का वा *त्रिसृमरसुषमाकन्दलीयं नताङ्गी ॥ १५ ॥

लावण्यं किमु वर्ण्यते वरतनोरस्या जगन्मोहनं
यस्या वीक्षण एव हन्त चलितस्वान्ताः सुपर्वाङ्गनाः ।
तत्तादृक्परमाभिरूप्यविसरदर्पोद्धताश्चापि ता
योषित्तामनिमेषतामपि निजां निन्दन्ति नन्दन्ति च ॥ १६ ॥

---

चिचिन्तेत्यादि । चिन्तितवान्, 'चिति स्मृत्याम्' इदित्त्वम् उपधालोपालोपाभावफलकम् । त(ण्यक ? ण्यन्त)स्य न स्यादिति णिचोऽनित्यत्वम् । चित्रीयमाणम् आश्चर्यमनुभवत् । 'नमोवरिवः--' (पा० सू० ३-१-१९) इति आश्चर्यानुभवे क्यच् ॥

कैश्यमित्यादि । केशसमूहः । 'केशाश्वाभ्याम्--' (पा० सू० ४-२-४८) इति यञ् । एकं मुख्यं वश्यं वशीकरणसाधनम् । अन्यवस्तुवद् एतत् क्वचिन्न व्यभिचरतीति भावः । शिव शिवेति विस्मयानुभावः । शारदः शरदि भवः । इह भुवनेऽपि मां न क्षोभयेदिति गर्वः मानः । चित्रकं तिलकम् । चित्तहारि मनोहरम् । उत्कौ उत्सुकौ । रम्यौ अनुपमौ इति भावः । प्रसृमरा प्रसरणशीला । कन्दली अङ्कुरः ॥ १५ ॥

लावण्यमित्यादि । लावण्यं हि नाम 'अवयवसंस्थानाभिव्यङ्ग्यं निखिलावयवव्यतिरिक्तं किञ्चिदेव तत्त्वान्तरम्' इति ध्वनिकारः । किमु वर्ण्यते वर्णनापथं नावतरतीति भावः । एतावदेव कथनीयमित्याह – यस्या इति । वीक्षण एवेत्यनेन सुराङ्गनालावण्यादस्या लावण्यस्य अत्यन्तोत्कृष्टता प्रकाश्यते । आभिरूप्यं मनोज्ञत्वम् । योषित्तां स्त्रीत्वम् निन्दन्ति अनिमेषतां नन्दन्तीति **यथासंख्यम्** अलङ्कारः ॥ १६ ॥

---

* प्रसृमरेति व्याख्यानुसारी पाठः ।

हृदयमिदमपङ्कं पङ्कजाक्ष्याममुष्यां
बत कुतुकसमेतं जायते मे किमेतत् ।
नियतमियमुदैषीदन्वये क्षत्रयोग्ये
प्रसजति नहि चेतः पौरवाणामकार्ये ॥ १७ ॥

नूत्नं वधूरत्नमिदं विमोहनं
विश्वैकविस्मापकरूपमात्मभूः ।
कान्ते सुवर्णे भुवनैकभूषणे
संयोज्य कस्मिन् कृतकृत्यतामियात् ॥ १८ ॥

इति सञ्चिन्तयन्नन्तरनन्ताधिपतिस्तदा ।
तस्थौ रूपामृतं तस्याः पायंपायमयं मुदा ॥ १९ ॥

शकुन्तलापि महितानुभावं मनसिजोपमानमेनम् आलोक्य किमपि कन्दलितकन्दर्पविकारा इति विचारयामास —

---

हृदयमित्यादि । अपङ्कं निर्दोषं, रजस्तमोभ्याम् अनभिभूतम् । उदैषीद् उद्भूता । 'इट किट कटी गतौ' इत्यत्र ई गतौ प्रश्लिष्टो धातुः । प्रसजति प्रसक्तं भवति । 'षञ्ज सङ्गे' । 'दंशसञ्ज—' (पा० सू० ६-४-२५) इति नलोपः । पौरवाणां, 'स्वगुणाविष्क्रियादोषो नात्र भूतार्थशंसिनः' इति दण्डी ॥ १७ ॥

नूत्नमित्यादि । नूतनम् अपूर्वमित्यर्थः । भुवनैकभूषण इति वधूरत्नमित्यत्र उपमाया बाधकम् । आत्मभूः ब्रह्मा । कान्ते मनोहरे । सुवर्णे कनके । कस्मिन् संयोज्येत्यनेन अपि नाम मयि संयोजयेदिति प्रार्थना व्यज्यते ॥ १८ ॥

इतीत्यादि । पायंपायं पीत्वा पीत्वा । अन्तःसञ्चिन्तयन्नित्यनेन गाम्भीर्येणास्य चित्तविकारो बहिर्न प्रकटोऽभूदिति प्रकाश्यते ॥ १९ ॥

शकुन्तलेत्यादि । कन्दलितः अङ्कुरितः ॥

साक्षाल्लक्ष्मीसहायः किमयमयमहो कौस्तुभोद्भासिकण्ठः
श्रीकण्ठो वा स वामे वपुषि गिरिसुतां नित्यमादत्त एव ।
किं वा नालीकबाणः स खलु पुरभिदा वीर्यशेषो वितेने
को वा धन्यो युवा मे परिलसति पुरो लोचनानन्दकन्दः ॥ २० ॥

आस्यं त्वेतस्य दास्यं दिशति च शशिने विश्वविक्षोभदीक्षा-
दक्षश्चायं कटाक्षः स्फुटमयमधरो वल्लभः पल्लवानाम् ।
फालं बालेन्दुरम्यं हसितमिदमहो सान्द्रचन्द्रांशुवंश्यं
वाचा किं रूपमेतद् दृशि भवति सुधासारपूरानुसारि ॥ २१ ॥

एवं विचिन्तयन्ती सकलनयनशीतार्चिषं तमर्चिचिषन्ती मन्द-मन्दमुपगम्य व्रीडासाध्वसविहस्तेयम् आलीहस्ताद् अर्हणोपकरणान्यादाय अर्हतेऽस्मै दूरेत्यायात्यादरं कथमपि वरिवस्यां विधाय अस्य कुलनामादिकाकलने बलवदभिमनायमाना मनागपि पर्यनुयोक्तुमपारयन्ती निभृतनिभृतमेनम् अवलोकयन्ती भुवमुल्लिखन्ती परमवनतवदनारविन्दम् अवतिष्ठते स्म ॥

तदा प्रियंवदाभिधाना तत्सखी सख्या सव्याजमालोक्यमानमेनं विलोक्य तदीयानुभावमसौ विदितवती गूढमुदितवती ॥

---

साक्षादित्यादि । लक्ष्मीसहायः विष्णुः । श्रीकण्ठः शिवः । अत्र भेदोक्तिरूपेण सन्देहेन तद्गुणानां बाहुल्येनात्र सम्भवो व्यज्यते ॥ २० ॥

आस्यमित्यादि । पल्लवानां वल्लभः प्रियः, सदृश इति यावत् । समस्वभावा हि प्रिया भवन्ति । वंशे भवं वंश्यम् । दिगादित्वाद् यत् ॥ २१ ॥

एवमित्यादि । अर्चिचिषन्ती अर्चयितुमिच्छन्ती । अर्हते प्रशस्ताय । 'अर्हः प्रशंसायाम्' (पा० सू० ३-२-१३३) इति शता । दूरेत्याय दूरभवाय, 'दूरादेत्यः' (वा०) इत्येत्यः। कथमपि कथञ्चित्, अत्र विहस्तत्वं हेतुः । वरिवस्यां पूजाम् । अभिमनायमाना उत्सुकमानसा । भृशादित्वाद् भव इत्यर्थे क्यङ् ॥

तदेत्यादि । सव्याजम् आलोक्यमानमिति । सव्याजालोकनं रत्यनुभावः । तदीयः तस्य सम्बन्धी । अनुभावः, रूपामृतं पायंपायमिति पूर्वोक्तः । उदितवती उक्तवती ॥

आकारेण सुखावहेन सफलां सम्पादयन् नो जनिं
धन्यात्मा खलु काश्यपीपतिरयं स्यादित्यहं लक्षये ।
श्रुत्वैवं हृदयङ्गमं निगदितं सा भङ्गुरभ्रूलतं
बाला नातितरोषरूषितदृशा सन्तर्जयामास ताम् ॥ २२ ॥

अनन्तरम् इतरा पुनरनसूयाभिधाना तस्य महासत्त्वस्य सतत्त्वमवजिगमिषुः एनमेवम् अवोचत ।

अयि विविदिषा कापि प्रष्टुं प्रचोदयतीह मां
तिलकितमलं किं वा गोत्रं त्वया मधुराकृते! ।
अपि विरहितः को वा देशो भृशं परितप्यते
वद पदमिदं कस्मादस्मिन् क्षणे समलङ्कृतम् ॥ २३ ॥

उदित इति तयोचे सोऽथ रम्भोरु! पूरोः
पुरुयशसि कुले मां विद्धि जातं सुजाते! ।
वनभुवि पुनरागामेष दुष्यन्तनामा
नृप इह भगवन्तं कण्वमानन्तुकामः ॥ २४ ॥

---

**आकारेणे**त्यादि । आकृत्या गूढनिरीक्षणादिना । काश्यपीपतिः भूपतिः । शकुन्तलायाः पतिश्च । स्यादिति सम्भावनायां लिङ् । हृदयङ्गमं मनोनुकूलम् ॥२२॥

**अनन्तर**मित्यादि । महासत्त्वस्य, 'सत्त्वं जवबलप्राणकायबुद्धिषु वर्तते । स महासत्त्व इत्युक्तो धीरपर्यायनामकः ॥' इति **भावप्रकाशः** । एतद् अन्येषामपि धीरोदात्तगुणानाम् उपलक्षणम् । सतत्त्वं परमार्थम् । 'रूपं तत्त्वं सतत्त्वं च स्वरूपं च' इति **वैजयन्ती** । अवजिगमिषुः अवगन्तुमिच्छुः ॥

**अयी**त्यादि । कापि इयतीति वक्तुमशक्या । विविदिषा वेदितुमिच्छा । प्रचोदयति, अवचना स्थातुं न शक्नोमीति भावः । तिलकितं तिलकवत् कृतम् । मधुराकृते, अनेन 'यत्राकृतिस्तत्र गुणा वसन्ती'त्युक्तत्वात् सौशील्यादिसद्गुणसम्पन्नत्वम् उक्तम् । वदेत्यनेन औत्सुक्यातिशयो ध्वन्यते ॥ २३ ॥

**उदित** इत्यादि । पुरुयशसि इत्यनेन पूरुवंशजानां प्रसिद्धत्वात् तन्निवासभूतस्य जनपदस्यापि अनुक्तसिद्धत्वेन को वा देश इत्यस्य उत्तरमपि दत्तम्

तदनु मुदितहृदयया प्रियंवदया "सफलावलोकनः स भगवान् इमाम् अतिथिजनसभाजनाय नियुज्य किमपि कार्यान्तरमन्तरेण दवीयस्तरं विपिनान्तरं इतः प्रयातः। तदस्यां कलिन्दकन्यकाकान्तिकन्दलभङ्गदायाम् अलिन्दभुवि मन्देतरमरन्दपानतुन्दिलमञ्जुगुञ्जदिन्दिन्दिरसुन्दरीवृन्दानुगम्यमानेन विकसितकुसुमपालीविगलदविरलमधूलीसलिलकेलिमज्जनशीतलेन मन्दवाहबन्धुरेण गन्धवाहस्तनन्धयेन सुभगम्भावुकायां सकललोकलोचनप्रियम्भावुको भवान् उपविश्य विश्रमसुखमनुभवतु तावदि"ति निवेदितो मेदिनीपतिरत्रोपविष्टः सरसमिमाम् अभाषिष्ट ॥

---

इति मन्तव्यम्। दुष्षन्तनामेति विधिगर्भं विशेषणम्। अनेन किं वा गोत्रमित्यत्राह। नाम्नोऽपि जिज्ञासितत्वमुपसेयम्। विद्धि जानीहि। सुजाते! सुन्दरि!, निर्दोषे इत्यर्थः॥ २४॥

अथ प्रियंवदा नृपतिमत्र कञ्चित् कालं स्वैरसल्लापैर्निर्वासयितुं तदनुकूलमेवोक्तवतीत्याह--तदन्वित्यादि। मुदितहृदयया, पूरोः कुल इत्युक्त्या सखीवरयोग्यता अस्येति निश्चित्य मुदितहृदयत्वम्। सफलावलोकन इत्यनेन प्रतिपाल्यापि दर्शनयोग्यत्वमुक्तम्। तेन भङ्ग्या तस्य गमनं निवर्त्यते। दवीयस्तरम् अतिशयेन दूरतरम्। अनेन सुखासिकावसरो व्यज्यते। सकललोकलोचनप्रियम्भावुकः अनेन दर्शनाभावे मुनेरपि खेदः स्यादिति द्योत्यते। तुन्दिलं, तुन्दादिभ्य इलच् मत्वर्थे। इन्दिन्दिराः भ्रमराः, 'मधुकरमधुपमधुव्रतशिलीमुखभ्रमरभृङ्गपुष्पलिहः। इन्दिन्दिरालिषट्चरणचञ्चरीकालिनो द्विरेफाः स्युः।' इति शब्दरत्नाकरः। मधूलीसलिले यत् केलीमज्जनं तेन शीतलेन। मन्दवाहः मन्दगतिः। गन्धवाहस्तनन्धयेन वातपोतेन। सुभगम्भावुकायां प्रियम्भावुक इति 'आढ्यसुभग--' (पा० सू० ३-२-५६) इत्यधिकारे 'कर्तरि भुवः--' (पा० सू० ३-२-५७) इति खुकञ्॥

एषा शिरीषदलकोमलगात्रलेखा
वक्षोजभारपरिखिन्नकृशावलग्ना ।
आभ्यां विशालजघना न पदाम्बुजाभ्यां
स्थातुं बत क्षणमपि क्षमते सखी ते ॥ २५ ॥

तदनु तदीयवदनारविन्दनिष्यन्दिनीं वचनमकरन्दधोरणीं श्रवणाञ्जलिनाञ्जसापीय उदीयमानमोदासु तासु तत्र निषेदुषीषु मोदमानमना मेदिनीपतिरयं प्रियंवदाम् इदमवादीत् ॥

अयि सुमुखि! सखीं ते कां विजानानि लोके
सुकृतिनमिह कं वा तातमस्या वदानि ।
किमिति मुनिवधूनां वेषमेषा विहाय
प्रकृतिरुचिररूपं धन्यमन्यं दधाति ॥ २६ ॥

इत्येनमत्यादरमुक्तवन्तं प्रत्यब्रवीत् सा नृप! नः सखीयम् ।
कण्वस्य पुत्री प्रणयैकपात्री वेषः प्रकृत्यैव न कृत्रिमोऽयम् ॥ २७ ॥

---

युष्माभिरपीहासितव्यम् इत्यभिप्रेत्याह—एषेत्यादि । शिरीषेत्यादिविशेषणत्रितयेन आभ्यामित्यनेन च स्थितौ शक्तिराहित्यम् उक्तम् ॥ २५ ॥

तदन्वित्यादि । धोरणी प्रवाहः ।

इह नियतमियमुदैषीदित्यनेन अनुमितम् आत्मपरिग्रहत्वं तन्मुखादेव निश्चिचीषुः लोकवृत्तिम् अनुसृत्याह—अयीत्यादि । कां विजानानि इयं केत्यर्थः । कं वा तातमस्या वदानि तातश्च को वेत्यर्थः । रुचिररूपं रुचिरस्वरूपम् । धन्यम् उत्कृष्टमित्यर्थः ॥ २६ ॥

इतीत्यादि । प्रकृत्यैव सहज एवेत्यर्थः । कृत्रिमः करणेन निर्वृत्तः । 'ड्वितः क्त्रिः' (पा० सू० ३-३-८८) इति क्त्रिः । 'क्त्रेर्मम्नित्यम्' इति मप् ॥ २७ ॥

तदनु तेन मेदिनीदयितेन "स खलु भगवान् वैखानसशिखामणिः नित्यं मुक्तावुत्तिष्ठमानः प्रणयिनीविहीनः प्रणाय्यश्चेति विश्वविदितमेव । इयं च तस्य तनयेति कथमेतदि''ति सा कथयामासे ।

इत्युक्त्वा मेनकाकौशिकमुनिवरसम्भोगरूपामवस्थां
कस्मैचित् तापसाय स्वगुरुनिगदितां वक्तुमुद्यच्छमाना ।
बाला सा वार्यमाणाप्यमितमुदितया व्रीलया गौरवेण
क्ष्माभर्तुः प्रेर्यमाणा तमचकथदथो तद्व्यथान्तां कथां ताम् ॥ २८ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
चतुर्थः स्तबकः ।

---

तदन्वित्यादि । उत्तिष्ठमानः ईहमानः । 'उदोऽनूर्ध्वकर्मणि–' (पा० सू० १-३-२४) इत्यात्मनेपदम् । उद ईहायामिति वक्तव्यम् । प्रणाय्यः निष्कामः 'प्रणाय्योऽसम्मतौ' (पा० सू० ३-१-१२८) इति निपातः । अविद्यमानः सम्मतिः अस्मिन्निति असम्मतिः । सम्मतिः सम्मतता, अभिलाषश्च । कथयामासे कथिता । कर्मणि लिट् ।

इतीत्यादि । अचकथत् कथितवती । 'णिश्रि–' (पा०सू० ३-१-४८) इति चङ् । तद्व्यथान्तां कण्वस्य पुत्रीत्युक्त्या सहसोत्पन्नाया व्यथाया नाशकरीम् ॥ २८ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये चतुर्थः स्तबकः ।

विश्वामित्रो हि विश्वप्रथितपृथुयशाः प्राक् तपोऽतप्त तीव्रं
तिष्ठन् मध्ये ललाटन्तपखरकिरणः पावकानां चतुर्णाम् ।
तत्तादृक्तत्तपस्यातरलतरमना वृत्रवैरी तदानी-
मानीयाराद्राणीदतिमधुरगिरा मेनकां माननीयाम् ॥

"अयि भुवनैकसुन्दरि! विश्वैकमित्रमपि विश्वामित्रो विश्वेषां नोऽमित्र इव नाकलोकमपहारको वरीयसि तपसि वरीवृतीति, तेन नः स्वान्तं हन्त सन्तापिनसन्ततं बोभवीति, तद्भवती द्रुतममुष्या-मुष्यायणस्य मतिं विविधैर्विलासविभवैरलं विलोभयतु" इति वल-वैरिवचनमवधार्य मुनिवर्यतपोवीर्यपर्यालोचनपर्याकुलधैर्यसारयानया मेनकया स शक्रो निवेदयाञ्चक्रे ।

---

विश्वामित्र इत्यादि । तपोऽतप्त तप आस्थितवान् । 'तपस्तपःकर्मक-स्यैव' (पा० सू० ३-१-८८) इति कर्मवद्भावः । क्रियाभेदात् पूर्वेणाप्राप्तः कर्म-वद्भावोऽनेन विधीयते । कर्मत्वे दुःखकर्तृत्वे त्वार्जनमिति विस्पष्ट एव क्रिया-भेदः । 'तपोऽनुतापे च' (पा० सू० ३-१-६५) इति चिणः प्रतिषेधः । ललाटं तपतीति ललाटन्तपः । 'असूर्यललाटयोः–' (पा० सू० ३-२-३६) इति खश् । अराणीद् उक्तवान् । मेनका नाम प्रधानाप्सराः । 'घृताची मेनका रम्भा विद्युज्जिह्वा तिलोत्तमा । प्रधानाप्सरसः पञ्च सम्भूताः क्षीरवारिधेः ॥' इति **पौराणिकाः** ॥

अयीत्यादि । विश्वामित्रः 'विश्वस्य वसुराटोः' (पा०सू० ६-३-१२८) 'मित्रे चर्षौ' (पा० सू० ६-३-१३०) इति दीर्घः । नाकलोकमपहारकः नाक-लोकमपहर्तुम् । 'तुमुन्ण्वुलौ--' (पा०सू० ३-३-१०) इति भविष्यति ण्वुल् । वरीवृतीति अत्यर्थं वर्तते । यङ्लुक् । सन्तापिनं समन्तात् तापः तेन सन्ततं व्याप्तम् । 'अभिविधौ भाव इनुण्' (३-३-४४) इति इनुण् । 'अणिनुणः' (पा० सू० ५-४-१५) इति स्वार्थेऽण् । बोभवीति पौनःपुन्येन भृशं वा भवति । आमुष्यायणस्य नडादावमुष्येति निपातनात् फक् । 'प्रख्यातात् पितुरुत्पन्न

चित्तं तवापि वलशासन! घोरघोरै-
रुद्वेजयन् ज्वलति यो महितैस्तपोभिः।
तस्यास्य तापसवरस्य तपो निरोद्धुं
स्वामिन् नियोजयसि किं कृपणामिमां माम्॥ २॥

विधातुर्यो लोकानवितुरुदयोऽयुज्यत पुरा
विधातुं द्वैराज्यं चिरधृततपःप्राज्यमहसा।
विधायास्मिन्नेतामपकृतिमहो तीव्ररभसे
विधां जाने काऽप्यहह न सुखोज्जीवनकरीम्॥ ३॥

क्षत्वगोत्रप्रभूतेन प्रभूततपसा पुरा।
ब्रह्मभूयमवोभूयि येन मानेन भूयसा॥ ४॥

---

आमुष्यायण इष्यते।' इतीत्यादि। पर्याकुलो धैर्यसारो यस्याः तया। निवेदयाञ्चक्रे निवेदितोऽभूत्॥

चित्तमित्यादि। वलशासन! तवापि इति। केनापि अनुद्वेजितमिति भावः। कृपणां क्षुद्रां स्त्रियम्॥ २॥

एवमात्मनोऽशक्यत्वमुक्त्वा प्रयत्ने कृते पुनः प्राणहानिरेव स्यादित्याह—विधातुरित्यादि। लोकान् अवितुः रक्षितुः। आ क्वेः--' (पा०सू० ३-२-१३४) इत्यधिकारे तच्छीलादिषु त्रिष्वर्थेषु 'तृन्--' (पा० सू० ३-२-१३५) इति तृन्। तच्छीलेत्यत्र तच्छब्देन धात्वर्थ उच्यते। अत्र फलनिरपेक्षा प्रवृत्तिः तच्छीलं (यस्य सः तच्छीलः), धात्वर्थः कुलक्रमागतो धर्मो यस्य सः तद्धर्मा, धात्व(र्थः ? र्थे) सकलादपि यः साधु करोति स तत्साधुकारी। 'न लोक--' (पा०सू० २-३-६९) इति षष्ठीप्रतिषेधः। उदयः अयुज्यत भृशमुद्युक्तोऽभूत्। 'युजिर् योगे' यक्। द्वयो राज्ञो भावः द्वैराज्यम्। 'तद्धितार्थ--' (पा०सू० २-१-५१) इति समासः। ब्राह्मणादित्वात् ष्यञ्। आननद्वैराज्यं विदधानमितिवत्। विधां प्रकारम्, उपायमिति यावत्। देशविशेषः पुरुषविशेषो वा न शरणमिति भावः॥ ३॥

परिभवे सति प्रभूतमानत्वान्न क्षमते चेत्यह—क्षत्वेत्यादि। ब्रह्मभूयं ब्रह्म-

क्रुद्धोऽसाविद्धतेजाः सकलवसुमतीमादधीतान्यथा द्राक्
चूर्णीकुर्यात् सुवर्णाचलमचलमतिर्घूर्णयेदर्णवं वा ।
उद्धृत्याद्वा भुजाभ्यां कुलधरणिधरान् प्रक्षिपेदब्धिमध्ये
तत्तादृक्षं तु साक्षान्मुनिवरमिह को वीक्षितुं वापि दक्षः ॥ ५ ॥

विप्रलोभयितुं त्विप्रमप्रगल्भास्मि तत् प्रभो!
शक्र पश्यापरां नीतिं शक्त! मामव विक्लवाम् ॥ ६ ॥

मेनकाभारतीमेनां दीनामाकलयन्नयम् ।
सहस्राक्षो विमृश्यैवमस्राक्षीदथ शारदाम् ॥ ७ ॥

किं विश्वमोहनतनो! वदसि त्वमेवं
जानासि भीरु! न निजां कमनीयतां किम् ।
पश्यन्निदं तव वपुर्भुवि को न मुह्येत्
तत् त्वं यतस्व नितरां मरुतां हिताय ॥ ८ ॥

---

त्वम् । 'भुवो भावे' (पा० सू० ३-१-१०७) इति क्यप् । अबोभूयि प्रासम् । 'भू प्राप्ता'वित्यस्माद् यङन्तात् कर्मणि लुङ् ॥ ४ ॥

अवन्ध्यकोपत्वमप्यस्यास्तीत्याह—क्रुद्ध इत्यादि । आदधीतेत्यादिषु चतुर्षु 'शकि लिङ् च' (पा० सू० ३-३-१७२) इति लिङ् । अचूर्णं चूर्णं कुर्यात् चूर्णीकुर्यात् । 'अभूततद्भावे—' (वा०) इति च्विः । कुलधरणिधरान् कुलपर्वतान् । 'महेन्द्रो मलयः सह्यः शक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥' इति विष्णुपुराणे । स एव तादृक्षः तत्तादृक्षः तत्तादृशः ॥ ५ ॥

विप्रलोभयितुमित्यादि । प्ररोचयितुम् । अपरां मत्प्रेषणादन्याम् । शक्त मामव, एतादृशैर्मधुरवचनैर्न निर्बध्नीया इति भावः । शक्तः प्रियंवदः । अव रक्ष ॥ ६ ॥

मेनकेत्यादि । विमृश्येति, भङ्ग्यन्तरेण भणित्वानयैव कार्यं साधयामीति निश्चित्येत्यर्थः । अस्राक्षीत् सृष्टवान् । 'सृजिदृशोः—' (पा० सू० ६-१-१४) इत्यमागमः ॥ ७ ॥

किमित्यादि । वपुः, 'शुभाकारे तनौ वपुः' इति वैजयन्ती । तव वपुर्विलोकने सर्वे मुह्यन्ते एव । एवंस्थिते मामवेत्युक्तेः भीरुत्वमेव हेतुः ॥ ८ ॥

इति रहसि मघोनो वाचमेनामघोनां
तदनु निशमयन्ती सा भृशं निःश्वसन्ती ।
मुहुरपि बहुमन्यू कौशिकौ तौ स्मरन्ती
व्यमुहदुभयभागव्याप्तदावा मृगीव ॥ ९ ॥

स्वाज्ञावज्ञां न खलु सहते हन्त वृत्रस्य हन्ता
विश्वामित्रो न च परिभवं मृष्यतेऽधृष्यतेजाः ।
हा हा कष्टं किमिह करवै सर्वथा दिष्टदोषा-
दापन्ना मे विपदिति तदा मेनके मेनकेयम् ॥ १० ॥

इदं न्यगादीदपि देवराजं निर्बन्धमेतस्य विचिन्तयन्ती ।
यद्भावि तत् स्यान्नियतं यतिष्ये भर्तुः प्रियायेति विनिश्चितात्मा ॥

स्वामिन्! नैव क्वचिदपि मया लङ्घनीया तवाज्ञा
स्वर्लोकस्य स्थितिरिह ननु प्रार्थनीया ममापि ।
तन्मे देवो विसृजतु मुदा मन्मथादीन् सहाया-
नेते तावत् परमिह बलं नूनमेतादृशीनाम् ॥ १२ ॥

---

इतीत्यादि । मघोनः इन्द्रस्य । अघोनां निर्दोषाम् । अनारोपितार्था-मित्यर्थः । 'दुःखैनोव्यसनेष्वघम्' इत्यमरः । मन्युः क्रोधः । कौशिकौ महेन्द्र-विश्वामित्रौ । 'कौशिको गुग्गुलूलूकशक्रर्षिष्वाहितुण्डिके' इति निघण्टुः । व्यमुहत् इतिकर्तव्यतामूढा अभूत् । दावः दावाग्निः । 'दवदावौ वनारण्यवह्नी' इत्यमरः ॥ ९ ॥

स्वाज्ञेत्यादि । मृष्यते क्षमते । 'मृष तितिक्षायाम्' । मेनके मेने । 'तिङश्च' (पा०सू० ५-३-५६) इत्यकच् स्वार्थे । मेनका इयमित्युत्तरत्र छेदः ॥ १० ॥

इदमित्यादि । देवानां राजा देवराजः 'राजाहः–' (पा०सू० ५-४-९१) इति टच् समासान्तः । भावि भविष्यत् । 'भविष्यति गम्यादयः' (पा० सू० ३-३-३) ॥ ११ ॥

स्वामिन्नित्यादि । स्थितिः रक्षा । मम, 'कृत्यानां–' (पा० सू० २-३-७१) इति षष्ठी । एते तावद् एत एव ॥ १२ ॥

तदास्येन्दुगलत्सूक्तिसुधास्वादसुनिर्वृतः ।
गीर्वाणग्रामणीर्वाणीमवाणीद् वरवर्णिनीम् ॥ १३ ॥

वरतनु! भवती तद् विश्वविक्षोभदक्षै-
र्मदनविधुसमीरैर्माधवेनापि साकम् ।
सपदि समुपयाता कौशिकस्योपशल्यं
महिततरतपस्याभञ्जनी जञ्जनीतु ॥ १४ ॥

अनन्तरम् अखिललोकलोचनासेचनकसुषमामण्डलेयम् अखण्डाम् आखण्डलाज्ञाम् अधिमौलि मालामिव धारयन्ती गाथिनमनोमथनमवधारयन्ती बहुलतासङ्कुलं बहुलतापसकुलालङ्कृतं कुशिकनन्दनतपोवनमुपगम्य विविधतरुलताविसरविरोचमानविकचकुसुमचयवितायमानपरिमलात्यन्ततरलबहलभसलावलीगलनालगलितकलनादकबलित - सकलयुवलोकधैर्यसारेण माकन्दवृन्दमञ्जरीपुञ्जसमास्वादभरितानन्दपरभृतसुन्दरीवृन्दगलाञ्चलोदञ्चितपञ्चमरागवञ्चितप्रपञ्चेन पञ्चसायकसामन्तेन वसन्तेन शिशिरतरसान्द्रचन्द्रिकासमाह्लादितसकलभुवनतलेन तुहिनकरेण मन्दतरान्दोलितसुरभिकुसुमसन्दोहकन्दलदमलमकरन्दशीकरव्यतिकरशीतलेन रचितपथिकपरिषदमन्दारुतेन मन्दमारुतेन निखिलजनमनोमदनेन मदनेन च समं सरसैर्विलासैरमुं विलोभयितुमारेभे ॥

---

तदास्येत्यादि । गीर्वाणग्रामणीः देवश्रेष्ठः । 'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः । अवाणीद् उक्तवान् । वरवर्णिनी स्त्रीषूत्तमा । वरा वर्णा यस्यामिति वाणीविशेषणं वा । मधुरतरामिति यावत् ॥ १३ ॥

वरतन्वित्यादि । तत् तस्मात् । माधवेन वसन्तेन । भञ्जनी जञ्जनीतु अत्यर्थं भञ्जनी स्यात् । अत्र लोटो विध्याशिषौ विवक्षिते । 'जनी प्रादुर्भावे' यङ्लुक् ॥ १४ ॥

अनन्तरमित्यादि । अधिमौलि मौलौ । धारयन्तीति तदाज्ञापरिग्रहे प्रश्रयातिशय उक्तः । मालामिव, अत्र मौलिधारणनिमित्तम् । आसेचनकं,

कुसुमेषोरिषुधिवरौ मा भूतां शून्यसायकौ सुहृदः ।
इति मत्वेव वसन्तः कुसुमान्युदजीगमत् स शाखिगणे ॥ १५ ॥

माध्वीविलाससुभगः सहसा स कान्तो
गाढं प्ररूढमदनां विपिनावनीं ताम् ।
आमोदयत् परिलसत्तिलकालिकान्तां
काम्यामलं मुनिभिरप्यतिमुक्तसञ्ज्ञैः ॥ १६ ॥

मन्ये महति कार्येऽस्मिन् मारादपि महान् मधुः ।
यदनेन विना नैव तपस्यावसितिर्भवेत् ॥ १७ ॥

कुलाचलोपममपि चलाचलमभून्मनः ।
तदा तदटवीभाजां मधुना को न माद्यति ॥ १८ ॥

---

'तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनाद्' इत्यमरः । गाथिनः विश्वामित्रः । भसलाः भ्रमराः । माकन्दः सहकारः । सामन्तः माण्डलिकः । पथिकपरिषदाम् अमन्दम् आरुतं रोदनमित्यर्थः ॥

अथ तत्र साहाय्यार्थमुपागतानां वसन्तादीनां प्रवृत्तिमाह—**कुसुमेषो-रित्यादि** । इषुधिवरौ निषङ्गश्रेष्ठौ । उदजीगमत् उद्गमयामास ॥ १५ ॥

**माध्वीत्यादि** । माध्वी मद्यं, मधु च । कान्तः भर्ता, मनोहरश्च । मदनः कामः, वृक्षविशेषश्च । आमोदः हर्षः, सौरभ्यं च । तिलकं चित्रकम् । परिलसत्तिलकम् अलिकान्तं यस्याः ताम् । अलिकं ललाटम् । परिलसतां तिलकानां वृक्षविशेषाणाम् आलीभिः कान्तश्च । मुनिभिः ऋषिभिः, मुनिद्रुमैश्च । अतिमुक्तसञ्ज्ञैः अतिमुक्तः सञ्ज्ञो यैः तैः । अतिमुक्तः पुण्ड्रकश्च । अत्र **समासोक्तिरलङ्कारः** ॥ १६ ॥

**मन्य इत्यादि** । मधुर्वसन्तः । तपस्यायां तपश्चर्यायाम् । तपस्यस्य तपस्यमासस्य च । अत्र तपस्यस्यावसितिरिति प्रतीयमानमर्थं विना वाच्यस्यासिद्धेः **वाच्यसिद्ध्यङ्गं** नाम गुणीभूतव्यङ्ग्यम् ॥ १७ ॥

**कुलाचलेत्यादि** । कुलपर्वताः । चलाचलं, पचाद्यचि 'चरिचलिपति-वदीनां वा द्वित्वमच्याक् चाभ्यासस्य' (वा०) इति द्विर्वचनमभ्यासस्याक् च । तदटवीभाजां तदरण्यवासिनाम् । मधुना मद्येन, वसन्तेन च ॥ १८ ॥

अनिरुद्धगतिं कामं माधवोऽयमजीजनत् ।
भासुरो यमिनां चित्तेऽसमयाधिगतस्तदा ॥ १९ ॥

लोकान् विजेतुमनसो मदनस्य हेम-
च्छत्रं किमुद्धृतमिति प्रथयन् विशङ्काम् ।
उद्दामकान्तिमहिमा स हि शीतभानु-
रुद्यन्नलं भुवनमुन्मदयाञ्चकार ॥ २० ॥

तत्कालसम्फुल्लरसालसूनगलन्मधूलीमृदुशीकरार्द्रः ।
विलोलयामास तदा समीरो वनानि चेतांसि च तापसानाम् ॥२१॥

कन्दर्पोऽनल्पकान्तिश्चरमचरमपि क्षोभयन् भूतजातं
मोदादादाय चापं रतिभुजलतिकाश्लेषधन्यात् स्वकण्ठात् ।
सद्योऽस्मिन् सन्दधानो निखिलजनमनोमोहनं मोहनास्त्रं
विश्वामित्रस्य धैर्यश्लथननियतधीर्गूढमस्थात् पुरस्तात् ॥ २२ ॥

---

अनिरुद्धेत्यादि । अनिरुद्धा अप्रतिहता गतिः यस्य । गतिरुद्गतिः, वृद्धिरिति यावत् । अनिरुद्धस्य उषापतेः गतिराश्रयः, पितेति यावत् । माधवः वसन्तः, श्रीकृष्णश्च । यमिनां चित्ते कामम् अजनयत् । चित्ते भासुर इति च । असमयाधिगतः अकालप्राप्तः, सः मया श्रिया अधिगत इति च । अत्र शब्द-शक्तिमूलो ध्वनिः । इह वसन्तप्रवृत्तीनाम् आमोदनसंक्षोभणमदनोत्पादनादीनां हेतुहेतुमद्भावोऽवगन्तव्यः । 'द्रुतविलम्बितमाह नभौ भरौ' ॥ १९ ॥

लोकानित्यादि । विजेतुं मनो यस्य । 'तुं काममनसोरपि' इति मकारलोपः । उन्मदयाञ्चकार मदयति स्म ॥ २० ॥

तत्कालेत्यादि । 'फुल्ले प्रफुल्लसम्फुल्लौ' इति वैजयन्ती । रसालः चूतः । अत्र तुल्ययोगितालङ्कारः ॥ २१ ॥

कन्दर्प इत्यादि । कण्ठात् लक्षणया स्कन्धात् । धैर्यश्लथने नियता निश्चिता धीर्यस्य । गूढमस्थात् तिरोहितः तिष्ठति स्म । 'गातिस्था--' (पा० सू० २-४-७७) इति सिचो लोपः ॥ २२ ॥

एवं वृद्धिं वसन्ते गतवति रुचिरे गाढशोभे हिमांशौ
मन्दे वावाति वाते सपदि च मदने सादरं बद्धकक्ष्ये।
मुञ्चन्ती कान्तिधाराभिह कनकमयी वल्लरीवोल्लसन्ती
रम्याङ्गी मेनका सा मुनिवरसविधे तत्र संक्रीडते स्म ॥ २३ ॥

क्षणमिह विहरन्ती विक्षिपन्ती कटाक्षान्
दिशि दिशि वनभाजां मानसं सा हरन्ती।
अलमकुरुत भूयो हेलया केलिदोलां
ललितललितवर्णं मञ्जु जेगीयमाना ॥ २४ ॥

तदनु मुनिवरप्रलुलोभयिषया प्रलोभनीयवेषायाममुकायां मेनकायां हिन्दोलिकान्दोलनेन कन्दलितमन्देतरानन्दमधुरतरगानायां परिक्रीडमानायाम् अदसीयसाहाय्यहेतोः सहसमागतो विकस्वरकुसुमवेस्वरबहलपरिमलानामादायचरः सहसा स मन्दमारुतो मन्दारगौरमस्या निवसनं निबिरीसकान्तिकदम्बकरम्बितान्नितम्बबिम्बात् मुनिवर्यधैर्यसारेण सहापोवाह ॥

---

एवमित्यादि। संक्रीडते स्म, 'क्रीडोऽनुसंपरिभ्यश्च' (पा० सू० १-३-२१) इति तङ् ॥ २३ ॥

क्षणमित्यादि। इह दिशि दिशि कटाक्षान् विक्षिपन्ती वनभाजां मानसं हरन्ती क्षणं विहरन्ती सा इति योजना। अलमकुरुत अलङ्कृतवती। दोल्यते उभयत उत्क्षिप्यते इति दोला। 'दुल उत्क्षेपे'। जेगीयमाना पुनः पुनर्गायन्ती ॥ २४ ॥

तदन्वित्यादि। प्रलुलोभयिषया प्रलोभयितुमिच्छया विकस्वराणि विकसनशीलानि। वेस्वराः उद्गत्वराः। 'विस्र वेस्र गतौ'। 'स्थेशभास-' (पा० सू० ३-२-१७५) इति वरच्। आदाय चरतीति आदायचरः। 'भिक्षासेना' (पा० सू० ३-२-१७) इति टः। निबिरीसं निविडम्। 'नेर्बिडज्बिरीसचौ' (पा० सू० ५-२-३२) इति बिरीसच्। करम्बितं युक्तम्। अपोवाह अपहृतवान् ॥

दोलादण्डात् सलीलं सपदि नतमुखी सावतीर्यावकीर्य
स्निग्धं धम्मिल्लजालं घनजघनभरं हेलया गूहमाना ।
बाभ्राजे वल्गितभ्रूश्चलकुचयुगलं मञ्जुमञ्जीरशिञ्जं
मन्दं यान्ती पटीं तां मुनिवरमनसा साकमादातुकामा ॥ २५ ॥

गाथिनोऽपि क्षणे तस्मिन् ववृते विवृतेक्षणः ।
अपश्यत् तां च को वास्मिन्नवश्यंभावि वारयेत् ॥ २६ ॥

गूहंगूहमतीव हारि जघनं केशाञ्चलैश्चञ्चलै-
र्मोहम्मोहमशेषलोकहृदयं यान्तीमयन्तीं ह्रियम् ।
दृष्ट्वा तामतिसाध्वसाकुलदृशं कामैर्विहीनात्मना-
प्युद्यत्कामविमोहितेन मुनिना तेनेह तेने मनः ॥ २७ ॥

ततस्तत्तादृशाश्चर्यतपश्चर्यापर्याकुलितविश्वामर्त्योऽप्यसौ विश्वामित्रः प्रमथनाथपरिपन्थिना प्रसभं प्रमथ्यमानमानसः तरसा तदीयोपशल्यमुपगम्य रम्यतरां गिरमराणीत् ।

---

दोलेत्यादि । अवकीर्य अवक्षिप्य । हेलया, 'शृङ्गारप्रौढिमा हेला भावाख्यो यौवने हि यः' ॥ २५ ॥

गाथिन इत्यादि । गाथिनोऽपत्यं गाथिनः । 'गाथिविदथि--' (पा० सू० ६-४-१६५) इति प्रकृतिभावात् टिलोपाभावः । विवृतेक्षणः उन्मीलितलोचनः । 'ईक्षणं नयनं चक्षुरक्षि लोचनमम्बकम्' इति **वैजयन्ती** । अस्मिन् लोके ॥ २६ ॥

गूहंगूहमित्यादि। गूहित्वा गूहित्वा। 'आभीक्ष्ण्ये--'(पा०सू० ३-४-२२) इति णमुल् । 'ऊदुपधाया--' (पा० सू० ६-४-८९) इति ऊत् । मोहम्मोहमिति णिजन्तात् णमुल् । मोहयित्वा मोहयित्वा । इह अस्यां मेनकायाम् ॥ २७ ॥

तत इत्यादि । प्रमथनाथपरिपन्थिना कामेन । अनेन परमेश्वरस्यापि मनः क्षोभयतः किं दुष्करमिति द्योत्यते । अराणीद् उक्तवान् ॥

दोलान्दोलनखेलनादतितरां क्लान्तासि कान्ताकृते!
कञ्चित्कालमिहाश्रमे श्रमहरे सुश्रोणि! विश्रम्यताम् ।
पश्यन्तं नयनोत्सवं वपुरिदं बाले! भृशं बाधते
कन्दर्पः खलु कन्दमूलखननं मामप्यहो निर्दयम् ॥ २८ ॥

लोलम्बमालाकुललोलमालाविलोभनीयामलबालजाले! ।
बाले! बलादेव तवातिवेलं लीलायितं लोलयते मनो मे ॥ २९ ॥

अलमयि! परितप्तं गात्रमेतन्मदीयं
शिशिरय शिशिरैर्द्रागङ्गकैरङ्गने! त्वम् ।
सुमुखि! विमुखभावं मा गमः पश्य कामो
मयि किरति करालान् मार्गणानेष रोषात् ॥ ३० ॥

सरसमिति वदन्तं पाणिपद्मे स्पृशन्तं
सपदि च परिरब्धुं स्वेच्छया यच्छमानम् ।
इयमपि तमुदञ्चत्पञ्चबाणा तदानीं
विनमितवदनेन्दुर्मन्दमेवं न्यगादीत् ॥ ३१ ॥

---

दोलेत्यादि। खेलनं क्रीडा। कन्दमूलखननं, खननेनादनं लक्ष्यते ॥ १८ ॥

लोलम्बेत्यादि । लोलम्बः भ्रमरः । बालः केशः । लीलायितं लीलावद् भवनम्, क्रीडेति यावत् । लोलयते लोलं करोति ॥ २९ ॥

अत्र त्वदानुकूल्यमेव शरणमित्याह—अलमित्यादि । द्राग् झटिति, यावन्न दह्यते तावदित्यर्थः । अङ्गकैः दयनीयैरङ्गैः, कोमलैरिति यावत् । 'अनुकम्पायाम्' (पा० सू० ५-३-७६) इति कन् । अङ्गने! कल्याणाङ्गि! । 'अङ्गात् कल्याणे' (ग० सू०) इति पामादिषु पाठान्मत्वर्थो नप्रत्ययः । मार्गणानां करालत्वं रोषानुमितौ हेतुः । करालान् भीषणान् । एष इति तत्कृताया वेदनायाः स्पष्टत्वात् प्रत्यक्षत्वम् उक्तम् ॥ ३० ॥

सरसमित्यादि । स्वेच्छया स्वाच्छन्द्येन । आयच्छमानं व्याप्रियमाणं, 'यम उपरमे' । 'आङो यमहनः' (पा० सू० १-३-२८) इत्यकर्मकाद् यमेस्तङ् ।

मुनिवर! तव वक्त्राम्भोरुहादुद्गलन्तीं
रहसि मम पिबन्त्या वाङ्मधूलीमधूलीम् ।
हृदयमिदमिदानीमङ्ग! विश्वस्तमास्ते
तदपि सुतपसं त्वां गन्तुमीशेह नेशे ॥ ३२ ॥

एवं मधुरमधुरमभिदधानाम् अन्तःसमुदिताकूतमकरन्दनिष्यन्दिनीम् अलमामोददायिनीम् अपाङ्गकुवलयमालां निभृतमुपहारयन्तीम् एनामालक्षयन् अक्षाममोदभरितान्तरङ्गो मुनिपुङ्गवोऽयं हन्त भीरु! किं त्वादृशजनोद्वेजनाय मम तपोवीर्यम् इति प्रसह्योपगूह्यानया सह मधुरतरमधुमतल्लीतुल्यपानोल्लालवल्लभानुगतफुल्लन्धयकुलोल्ललदमलमल्लिकादिवल्लिकावल्युल्लसितफुल्लतल्लजाक्षुल्लपरिमलपारदृश्वमातरिश्वपोतापातमधुरतरेषु निधुवनपरिश्रमविधुवनेषु विपुलोपलदरीनिरीयमाणनिविरीसझरीपरीपातनिरीतशीकरनिकरशिशिरेषु गिरिशिखरेषु विकसितकुसुमवाटीविकटीकृताभविविधविटपिघाटीषु तटिनीतटीषु च आटीकमानो रिरंसारसाविदितकालातिपातः सहस्रं वत्सरान् यामानिव यापयामास ॥

---

उदञ्चत्पञ्चबाणा मधुरवचनादिना तदानीं तस्या अपि मनस्तस्मिन्ननुरक्तम् आसीदित्यर्थः ॥ ३१ ॥

मुनिवरेत्यादि । अधूलीं अनौचित्यस्य लेशेनापि रहितामिति यावत् । विश्वस्तम् अभिगम्य एवायमिति कृतनिश्चयम् । नेशे न शक्ता भवामि ॥ ३२ ॥

एवमित्यादि । आमोदशब्दः श्लिष्टः । उपहारयन्तीम् उपहारं कुर्वतीम् । फुल्लन्धयाः भ्रमराः । उल्ललन्त्यः विलसन्त्यः । 'लल विलासे' । फुल्लतल्लजानां प्रशस्तकुसुमानाम् । अक्षुल्लानां बहलानाम् । 'स्वल्पेऽपि क्षुल्लकस्त्रिषु' इत्यमरः । पारदृश्वनः पारं दृष्टवतः । निधुवनं रतम् । विधुवनेषु 'विधूननं विधुवनं' इत्यमरः । 'धू विधूनने' । कुटादित्वाद् गुणाभावः । घाटी समूहः । आटीकमानः, 'टीकृ गत्यर्थः' ॥

तदनु कदाचित् तुहिनाचलोपत्यकामुपेत्य प्रतिमालिनीप्रतीरं समेतऋतुसमयया सकलरात्रकल्याण्या ललितलावण्यवेण्यानया सह रहसि विहरमाणः तपनीयमयालङ्कारविराजमानां कमनीयतरापाङ्गविजितहरिणीनिकायमानां तरुणीकुलतिलकायमानां धरणीतलकायमानां कामपि भुवनधन्यां कन्यामुत्पाद्य उत्पन्नानल्पनिर्वेदाविष्टधीः कष्टमिह मे न का तपःक्षतिरासीदिति मेनकामेनकां कन्यकामपि विपिने विधूय दुश्चरतरतपश्चर्यानिश्चितमतिः सपदि निश्चक्राम ॥

मेनकापि महिततेजसोऽस्य मुनेरिदं तेजोऽवश्यं न विनश्येदिति विनिश्चित्य महामना इमां महावने विहाय विहायसा दुष्करतरकार्यनिष्पादनानल्पसम्मदा सकलसुरवरपरिवृतस्य तस्यामरपरिवृढस्य परिसरमभिससार ॥

सत्रे तत्र शकुन्तौघस्त्रे तां रुदतीमथ ।
अदन्तु श्वापदा नैनां नदन्तः शोभनामिति ॥ ३३ ॥

अनन्तरमस्मिन्नन्तरे यदृच्छया तत्र विच्छायते विविधवयोवचनमवगच्छते मे शकुन्ततिरच्छगत्य त्वमिमां प्रतीच्छेत्येनां प्रायच्छत् ॥

---

तदन्वित्यादि । प्रतिमालिनीप्रतीरं मालिनीप्रतीरे । समेतऋतुसमयया, 'ऋत्यकः' (पा० सू० ६-१-१२८) इति प्रकृतिभावपक्षे रूपम् । सकलरात्रं कल्याणी सकलरात्रकल्याणी । 'अत्यन्तसंयोगे च' (पा० सू० २-१-२९) इति समासः । हरिणीनिकायस्य मानः । धरणीतले कायमानां प्रशस्यमानां । मे न का तपःक्षतिः आसीत् सर्वा तपःक्षतिरासीदित्यर्थः । एनकाम् एनाम् । 'अव्यय--' (पा० सू० ५-३-७१) इत्यकच् ॥

मेनकेत्यादि । अवश्यं 'नूनमवश्यं, निश्चये द्वयम्' इत्यमरः ॥

सत्र इत्यादि । सत्रे वने । तत्रे ररक्ष । 'त्रैङ् पालने' । नादन्तु इति तिरश्चामप्येवंबुद्धिजननेन तद्रूपस्य लोकातिशायित्वं सूचितम् ॥ ३३ ॥

अनन्तरमित्यादि । विच्छायते गच्छते । मे अच्छगत्य अभिमुखमागत्य 'अच्छ गत्यर्थे' (पा० सू० १-४-६९) इति गतिसंज्ञा । प्रतीच्छ प्रतिगृहाण ॥

अवनीतलशायिनीमनाथां तपनीयोज्ज्वलविग्रहां विलोक्य ।
महनीयकृपाभरेण बालामुपनीयाश्रममादरादपुष्णाम् ॥ ३४ ॥

आधाता चोपनेता निजहृदयतमो विद्यया व्यानुदेद् यः
पुष्णीयाद्यश्च यो वा निखिलजनमनोमोदनेनौदनेन ।
आत्मानं भूरिभीतेः प्रविसरदनुकम्पालयः पालयेद् यः
पञ्चैतानञ्चनीयान् पितर इति विदुर्विन्दवो वन्दनीयाः ॥३५॥

तात! एवमस्याः शकुन्तदानेन शकुन्तलेति जगति विदितायाः तातत्वमाप्तवानस्मि । इयमपि तपस्विनी निजजनकम् अजानती जनमिममेव जनयितारं जानीते ॥

एवमेतत्समुत्पत्तिवार्तां स तमवर्तयत् ।
मयापि तव राजेन्द्र! यथाश्रुतमुदाहृतम् ॥ ३६ ॥

कुशिकसुतसुतेयमासीत् तदा
प्रमुदितवदनेतिवृत्तं निजम् ।
श्रुतिपुटकलशेन पीत्वाश्वस-
न्मनसमवनिपं पुरो वीक्ष्य तम् ॥ ३७ ॥

---

अवनीत्यादि । अपुष्णां पोषितवानस्मि ॥ ३४ ॥

अधातेत्यादि । अनुकम्पाया आलयः । अञ्चनीयान् पूजनीयान् । पितर इति, निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरिति प्रथमा । 'प्रथमैव त्वभिहिते सर्वत्र खलु कारके ।' विन्दवः ज्ञातारः । 'विन्दुरिच्छुः' (पा० सू० ३-२-१६९) इति निपातः ॥ ३५ ॥

तातेत्यादि । शकुन्तैर्दत्तत्वात् शकुन्तला । 'ला दाने' । इयमित्यादि । 'मुनिदीनौ तपस्विनौ' ॥

एवमित्यादि । अवर्तयद् अभाषत । वृतु भाषार्थः । उदित्त्वाद् विकल्पितणिच्कः । यथाश्रुतं श्रुतमनतिक्रम्य ॥ ३६ ॥

कुशिकेत्यादि । कुशिकसुतसुता शकुन्तला । श्रुतिपुटकलशेन पीत्वा आश्वसन्मनसमित्यन्वयः । वृत्तनामाङ्कितोऽयं श्लोकः । 'प्रमुदितवदना भवेन्नौ ररौ' ॥ ३७ ॥

तदनु मेदिनीपतिरपि प्रियंवदाया वैखरीं मधुझरीसोदरीं उभाकर्ण्ययम् उपाकर्ण्य दिष्ट्याद्य कोरकितोऽयं मम मनोरथमहीरुह इत्युदीर्णमोदार्णवे निमज्जन्नौपकर्णिकैः सारङ्गतर्णकापाङ्गभङ्गिभञ्जदैः कटाक्षैः कुटिलकुन्तलान्तरेण अन्तरान्तरा निशामयन्तीं शकुन्तलां प्रति मन्दारमरन्दबिन्दुनिन्दासन्दायिनीं सुन्दरतरमन्दहासानुगामिनीं गिरमुदञ्चयामास ॥

धर्मारण्यनिवासिनां समुचिता पूजातिथेयी त्वया
निर्मायं विहितैव मे मतिरपि प्रीतिं प्रपन्ना पराम् ।
भूयः कोऽपि मनोरथो मनसि मे मुग्धे! परिस्पन्दते
हन्तैनं विवरीतुकाममयि! मां शङ्का च रुन्धेतराम् ॥ ३८ ॥

यद्यप्येवं तदपि निभृतैर्मञ्जुलैर्मन्दहासैः
शीलेनापि त्रिभुवनमनोमोहनेनामुना ते ।
एतस्यां किं तिरयसि मुधैवेप्सितं कथ्यतां द्रा-
गित्थं बाले! मुहुरहमिह प्रेर्यमाणो भणामि ॥ ३९ ॥

---

तदन्वित्यादि । वैखरीं वाचम् । उभाकर्णि उभौ कर्णौ यस्याम् उपाकर्णनक्रियायाम् । उभाभ्यां कर्णाभ्याम् इति यावत् । अनेन औत्सुक्यातिशय उक्तः । कोरकितः सञ्जातकोरकः । औपकर्णिकैः कर्णसमीपे प्रायभवैः । 'उपजानूपकर्ण–' (पा० सू० ४-३-४०) इति ठक् । तर्णकः शिशुः । अन्तरान्तरा मध्ये मध्ये । निशामयन्तीं पश्यन्तीम् । 'शमो दर्शने' (ग० सू०) इति दर्शने मित्त्वाभावाद् ह्रस्वाभावः । उदञ्चयामास उद्गमयामास ॥

अथैवं प्रियंवदामुखात् शकुन्तलोत्पत्तिकथां यथावदुपश्रुत्य तां परिव्राड्वां निश्चिन्वानो नितराम् अभिवृद्धाभिलाषः धर्मारण्येत्यादिभिश्चतुर्भिः श्लोकैः स्वाभिलषितं क्रमेणास्यै निवेदयति—धर्मेत्यादि । आतिथेयी अतिथिषु साध्वी । 'पथ्यतिथि–' (पा० सू० ४-४-१०४) इति ढञ् । मुग्धे मोहनाङ्गि! रुन्धेतराम् अत्यर्थं रुणद्धि ॥ ३८ ॥

यद्यपीत्यादि । यद्यप्येवं एवं शङ्काबलेन वक्तुमशक्तत्वेऽपि । निभृतैः लज्जया निगूढैः । मन्दहासैः, गूढहासो हि अनुरागलक्षणम् । 'पूरोः कुले जातं

रोषादिवैष विषमेषुरिषूत्करैर्मां
योषामणे! व्यथयते विषरूषिताग्रैः ।
किं वा निधाय हृदयेऽद्य समुद्यमोऽय-
मस्येति शस्यचरिते! बत नैष जाने ॥ ४० ॥

उच्चैरन्यैरिह किमधुना मुग्धसारङ्गनेत्रे!
लज्जानम्रैर्मधुरमधुरैर्व्यज्यमानानुकूल्यैः ।
स्निग्धैश्शुम्भत्कुवलयरुचिध्वंसदक्षैः कटाक्षैः
जन्मैतन्मे सफलय जगन्मोहनोदारशीले! ॥ ४१ ॥

वसुमतीन्द्रवदनाब्जनिर्गलन्मधुरवाङ्मधुनिषेवणाकुलाम् ।
परिकलय्य च सखीमवाङ्मुखीं सरसमेवमवदत् प्रियंवदा ॥ ४२ ॥

---

मां विद्धि', 'आभ्यां पादाम्बुजाभ्यां स्थातुं न क्षमते', 'किमिति मुनिवधूनाम्' इत्यादौ तत्र तत्र आभिमुख्यसूचकत्वेन दृश्यमानैः । शीलेनापि आतिथ्यकरण-सहोपवेशनादावनुभूतेन । 'शीलं स्वभावे सद्वृत्ते' इत्यमरः । अमुना इदानीमपि तथैवानुभूयमानेन । तिरयसि तिरस्करोषि इत्यर्थः । तिरश्शब्दात् 'तत्करोति—' (ग० सू०) इति णिचि, णाविष्ठवत् प्रातिपदिकस्येति इष्ठवद्भावे 'तुरिष्ठेमेयस्सु' 'टेः' (पा० सू० ६-४-१५४, १५५) इति टिलोपे तिरयसीति रूपम् ॥ ३९ ॥

**रोषादित्यादि** । व्यथयते 'व्यथ भयचलनयोः' घटादित्वाद् ह्रस्वः । विषरूषिताग्रैः तद्वत्सोढुमशक्यैरित्यर्थः । किं वा निधायेति । यावज्जीवमेव पीडयिष्यामीति वा सद्यः संयोज्य निरतिशयं सुखमनुभविष्यामीति वा । शस्य-चरिते! शोभनव्यापारे! । 'शंसिदुहिगुहिभ्यः क्यब्वा वक्तव्यः'(वा०) इति क्यप् । तव तत्तत्करणौचित्यमेव शरणमिति भावः ॥ ४० ॥

**उच्चैरित्यादि** । अधुना एतदवस्थायां 'मुग्धं सौम्ये नवे मूढे' इति **वैजयन्ती** । व्यज्यमानानुकूल्यैः आनुकूल्यमत्र मनोरथाभिपूरणविषयम् ॥ ४१ ॥

**वसुमतीत्यादि** । परिकलय्य ज्ञात्वा । वृत्तनामाङ्कितोऽयं श्लोकः । 'भुवि भवेन्नभजरैः प्रियंवदा' ॥ ४२ ॥

क्षोणीपालशिखामणे! किमधुना बाला वदामो वयं
सत्यं तावदतःपरं तव कृपैवास्याः समालम्बनम् ।
एषा तातमतं विना किमपि नो कर्तुं क्षमा बालिका
तस्मात् त्वं प्रतिपालयात्र करुणाम्भोधेरमुष्यागमम् ॥ ४३ ॥

शैशवे पितृवशानुगा वधूर्यौवने तु कमितुर्वशंवदा ।
वार्द्धके सुतविधेयवर्तना योषितां हि न विभो! स्वतन्त्रता ॥ ४४ ॥

अथ मेदिनीनाथः प्रियंवदाया हृदयमवधार्य मनागपि कालातिपातमसहमानः 'शिष्टैरष्टधा विहितेषु विवाहेषु गान्धर्व एवेह वसुन्धरापतीनां वरीयान् । तस्मादस्मान् अनेन विधिना वरयित्री नियतमियं तातस्य रभसपात्री न भवित्री । तत् तथैवानुमन्यतामि'त्यभिभाष्य पुनः प्रत्याययिष्यन्निति प्रत्यजानाच्च —

वामोरु! बह्वीष्वपि वल्लभासु जानीहि शुद्धान्तधुरन्धरेयम् ।
किञ्चादसीयस्सुत एव नूनमखण्डभूमण्डलचक्रवर्ती ॥ ४५ ॥

---

क्षोणीत्यादि । बालाः कृत्याकृत्यविशेषानभिज्ञाः । सत्यं तावत् सत्यमेव । तव कृपैवास्याः समालम्बनम् । अतःपरं त्वदीयैवेयमिति भावः ॥ ४३ ॥

शैशव इत्यादि । वार्द्धके वृद्धत्वे । 'द्वन्द्वमनोज्ञादिभ्यश्च' (पा० सू० ५-१-१३३) इति मनोज्ञादित्वाद् वुञ् । स्वतन्त्रता स्वातन्त्र्यम् ॥ ४४ ॥

अथेत्यादि । अष्टधा विहितेषु—'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गान्धर्वराक्षसौ चान्यौ पैशाचश्चाष्टमः स्मृतः' ॥ इति । गान्धर्व एव वरीयान् । 'क्षत्रियस्य विशेषेण गान्धर्वः श्रेष्ठ उच्यते । सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः । करस्पर्शस्तु गान्धर्वः' ॥ वरयित्री वरणं कुर्वती । 'वर ईप्सायाम्' कथादिः । प्रत्याययिष्यन् विश्वस्तां करिष्यन् । 'इण् गता'वित्यस्मात् णिचि लटः शता । प्रत्यजानात् प्रतिज्ञां कृतवान् ॥

वामोरु इत्यादि । वामौ सुन्दरौ । 'संहितशफ–' (पा० सू० ४-१-७०) इत्यूङ् । अदसीयः 'त्यदादीनि च' (पा० सू० १-१-७४) इति वृद्धसंज्ञायां 'वृद्धाच्छः' (पा० सू० ४-२-११४) ॥ ४५ ॥

तदनु मोदवेगवशंवदा प्रियंवदा तदीयवचननिशमनेन जायमानयास्यविचनीकसयास्या अनुमतिमनुमाय, 'ननु प्रजानाथ! समस्तधर्मसतत्त्ववेदी त्वमेवात्र प्रमाणम् । इहैव वैवाहिकसम्भारसम्पदपि सम्पद्यत' इति सम्पनीपद्यमानमुदाकुलम् अमुमुदाजहार ॥

तदाननेन्दोरुदितां सुधाझरीं
मुदा निपीयाथ कृतार्थधीरलम् ।
उपायतायासितधीः स्मरेण ता-
मुपायता सोऽनुमतः पुरोधसा ॥ ४६ ॥

भाग्योदयाद् योग्यवरेण भोग्या-
मानन्दमन्दाक्षविमन्दकृत्याम् ।
सख्यौ समीक्ष्य स्वसखीमखेदे
आश्वस्ततामाश्वलमाश्नुवाताम् ॥ ४७ ॥

अनन्तरं धरणीपतिस्तरलतरतरङ्गमालामालिनीं मालिनीं समया समयानधीनतया उदीयमानसकलकुसुमावलीवलमानपवमानपोतापातरम्यतरे तत्र कुत्रचन चित्रतरपत्रिगणमुग्धतरनिक्वणितविश्लथित-

---

तदन्वित्यादि । आस्यविचनीकसया अतितरामुद्भूतेन मुखविकासेन । वैवाहिकाः विवाहप्रयोजनाः सम्भाराः, तेषां सम्पत् । 'प्रयोजनम्' (पा० सू० ५-१-१०९) इति ठञ् । सम्पनीपद्यमानया अत्यर्थं सम्पन्नया ॥

तदित्यादि । उपायत उपयमनं कृतवान् । आयासितधीः क्लेशितधीः । उपायता समीपमागच्छता । पुरोधसा अनुमत इत्यन्वयः । 'जतौ तु वंशस्थमुदीरितं जरौ' ॥ ४६ ॥

भाग्येत्यादि । उदयः वृद्धिः । अखेदे आश्वस्ततामित्यत्र 'ईदूदेद्–' (पा० सू० १-१-११) इति प्रगृह्यत्वात् प्रकृतिभावः । आश्नुवातां प्राप्तवत्यौ ॥ ४७ ॥

अनन्तरमित्यादि । तरङ्गमालाम् मलितुं धर्तुं शीलम् अस्या इति तथा । 'मल मल्ल धारणे' इति धातुः । मालिनीं समया मालिन्याः समीपे ।

विश्वजनचित्तधृतिबन्धबन्धुरतरे प्रदेशे सदेशमाभ्यां सखीभ्यां शनैरानीताया व्रीलातिरेकविरलीकृतललितलीलायिताया दयितायाः परिचरणाय चारुतरचातुर्योदयोऽयम् उदयोयुज्यत ॥

मन्दं मन्दमुपायतश्चतुरयोः सख्योस्तयोर्यातयो-
व्रीलासाध्वसवेपमानहृदयां बालामलं व्याकुलाम् ।
आसीनामवनम्रवक्त्रवदनामेनां लतामण्डपे
सम्मोदाकुलधीरसावनुनयन्नूचे च वाचं प्रियाम् ॥ ४८ ॥

तरलतरलनेत्रे! सम्भ्रमेणामुनालं
सुतनु! वितनुतेऽसौ वेपथुस्ते व्यथां मे ।
जनय च जनमेनं मञ्जुलापाङ्गलीला-
नवकुवलयमालाजालकालङ्कृताङ्गम् ॥ ४९ ॥

मुग्धे! मनोहरमिदं वदनारविन्दं
किञ्चित् समुन्नमय सन्नतगात्रवल्लि! ।
अद्याकलङ्कमुदितो हरिणाङ्क एष
वामाङ्गि! मां स्नपयतु स्मितचन्द्रिकायाम् ॥ ५० ॥

---

'अभितः परितः समया–' (वा०) इत्यादिना द्वितीया । समयानधीनतया ऋतुम् अनवेक्ष्यैव । अनेन सकलर्तुकुसुमसम्पन्नत्वम् उक्तम् । सदेशं सविधम् । उदयोयुज्यत भृशमुद्युक्तोऽभूदित्यर्थः ॥

मन्दमित्यादि । उपायतः, 'शुकीयं क्षुधिता प्रलपति सा भोजयितव्या' इत्यादिच्छलोक्त्येत्यर्थः ॥ ४८ ॥

तरलेत्यादि । वेपथुः कम्पः । 'टुवेपृ कम्पने' । 'ट्वितोऽथुच्' (पा०सू० ३-३-८९) । ते वेपथुः मे व्यथां जनयति । अत्र असङ्गतिरलङ्कारः । 'तयोर्भिन्नदेशत्वेऽसङ्गतिः' (अ० सू० ४४) तयोः कार्यकारणयोः ॥ ४९ ॥

मुग्धे इत्यादि । मुग्धे, मौग्ध्यमिदं सर्वदा न कार्यमिति भावः । समुन्नमय, अमन्तत्वान्नित्यं मित्त्वे ह्रस्वः । 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' (ग० सू०) इत्यनुपसर्गस्यैव मित्त्वविकल्पः । स्नपयतु 'ग्लास्नावनुवमां च'

मा वामतैवमयि! ते दयिते! जनोऽयं
यद्रोचते सुतनु! ते तनुते तदेव ।
नैवोदयेत हृदये तदये! विशङ्का-
प्यस्मिन् जने परिजने विजने यथा ते ॥ ५१ ॥

इति सोऽन्वसरीसरीदरीणैरुदितैस्तां मधुमाधुरीधुरीणैः ।
कुचकुड्मलकुन्तलान्तरादौ छलतः पाणितलार्पणं वितन्वन् ॥ ५२ ॥

आश्लेषोद्यमने स्वबाहुलतया वक्षोरुहागूहना-
दास्याम्भोजनिवर्तनाच्च कुतुकादाचुम्बनोपक्रमे ।
नीवीस्पर्शविधौ च पाणिधुननादेषा प्रतीपापि तं
बालातीव सुखाकरोन्नववधूवाम्यं हि रम्यं नृणाम् ॥ ५३ ॥

तदनु सहभुवा सा व्रीळया वार्यमाणा
सपदि बलवता च प्रेर्यमाणा स्मरेण ।
कमितुरविरलोद्यद्रागवेगासहिष्णो-
रभिमतमनुरोद्धुं नाशकन्नापि रोद्धुम् ॥ ५४ ॥

---

(ग० सू०) इत्यत्र 'अनुपसर्गाद्वा—' (पा० सू० १-३-४३) इति वर्तते । ततश्चानुपसर्गात् स्नायते । स्नातेर्वा णिचि ह्रस्वः । उपसर्गसम्बन्धे अप्राप्तविकल्पेन मित्त्वाभावान्न ह्रस्वः ॥ ५० ॥

मेत्यादि । ते रोचते 'रुच्यर्थानां—' (पा० सू० १-४-३३) इति सम्प्रदानसंज्ञा । 'अये स्मृतिक्रोधखेदसम्भ्रमेषु' । विजने परिजने यथेत्यन्वयः ॥५१॥

इतीत्यादि । अन्वसरीसरीत् । मुक्ता(नि) दामानि, गलितबन्धनेयं बत काञ्चुलिका इति कुचान्तरे, चिकुरगर्भनिस्सृतं गर्भकं यथास्थानमवस्थापये इत्यादि कुन्तलान्तरे ॥ ५२ ॥

आश्लेषेत्यादि । सुखाकरोत् पत्युश्चित्तमाराधयामासेत्यर्थः । 'सुखप्रियादानुलोम्ये' (पा० सू० ५-४-६३) इति डाच् । वाम्यं वैपरीत्यम् । 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः ॥ ५३ ॥

तदन्वित्यादि । नाशकत् न शक्ताभूत् । 'शक्लृ शक्तौ' । लृदित्त्वात् 'पुषादि—' (पा० सू० ३-१-५५) इत्यङ् ॥ ५४ ॥

अङ्के तां पङ्कजाक्षीं कथमपि स निधायादरादाकुलाङ्गी-
मालिङ्गन्मन्दमन्दं मुखमथ पुलकोद्योति गण्डप्रदेशम् ।
कम्रं मन्दाक्षनम्रं मृदुहसितमनोहारि चोन्नम्य पश्य-
न्नाचुम्बन्नूढरागो मुकुलितनयनं मोदसिन्धुं जगाहे ॥ ५५ ॥

केलीलापविधावतीव मृदुले वक्षोरुहालिङ्गने
केशानां परिकर्मनर्मणि तथा बिम्बाधरास्वादने ।
नीवीस्पर्शमहोत्सवेऽपि शनकैर्लज्जाकुलापि प्रियं
मोदाब्धावनुकूलतामुपगता निर्मज्जयामास सा ॥ ५६ ॥

एवमखिलसीमन्तिनीजनसीमन्तरत्नायमानामेनाम् अनुकूलयन्नयं भुवनभूषणायितो भूपतिः निरतिशयरागनिष्यन्दिमुग्धतरकटाक्षविक्षेपं मञ्जुतरमन्दहासविकसितविमलकपोलतलं वदनकमलमाघ्रायमाघ्रायम् अधरितसुधारसमधरासवम् आस्वादमास्वादम् अभिनवोन्मिषितशिरीष-कुसुमतुल्यकुल्याम् अङ्गवल्लीमालिङ्गमालिङ्गम् अपारमोदाकूपारपरि-पतितोऽपि महत्तरमनोरथपारावारपारेचरोऽनेहसं कञ्चिदञ्चितरसमनया समम् अरंरम्यत । एवमनया सह रहसि विहरमाणः क्षणमपि विरह-मसहमानोऽपि निजधर्मलोपभयेन सपदि पुरं प्रति प्रतिष्ठासमानो वियोग-विशङ्कया विशङ्कटातङ्कविवशाशयां प्रियाम् अयमिदमुदीरयामास—

---

अङ्क इत्यादि । अङ्के निधायेत्यनेन 'कुसुमसधर्माणो हि योषितः सुकुमा-रोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः सम्प्रयोगविद्वेषिण्यः पुरुषविद्वेषिण्यो वा भवन्ति । तस्मात् क्रमेण चैनाम् उत्सङ्गमारोप्य साम्नैवोप-क्रमेत' इति वात्स्यायनोक्तं सूच्यते । मोदसिन्धुमिति । 'गाहिरुहिविशां कर्म' इति अधिकरणस्य कर्मसंज्ञा ॥ ५५ ॥

केलीत्यादि । 'आलिङ्गनमपि क्रोडीकरणं चाङ्कपाल्यपि' इति वैजयन्ती । निर्मज्जयामास निर्मग्नमकरोत् ॥ ५६ ॥

एवमित्यादि । पारेचरः 'तत्पुरुषे कृति–' (पा० सू० ६-३-१४) इत्य-लुक् । अरंरम्यत अतितरां रेमे । अनुकूलयन् अनुकूलं कुर्वन् । आघ्राय-

कान्ते! सम्प्रति हन्त गन्तुमनसो दुर्लङ्घ्यकार्योद्धुत-
स्वातन्त्र्या वयमास्व पञ्चषदिनान्यत्रैव पित्रा मुदा ।
गत्वा तन्वि! पुरं त्वदेकमनसः सेनां सयानान्वितो
नेतुं त्वामयि वल्लभे! प्रहिणुमो नो विस्मरेम क्षणम् ॥ ५६ ॥

विश्लेषकर्शितोऽप्येवमाश्वास्य दयितां निजाम् ।
आश्लिष्य च मुहुर्गाढं निःश्वसन्नेष निर्ययौ ॥ ५८ ॥

तदनु निजनगरमुपगतो महीपतिरसौ 'कष्टमहं दिष्टगत्या काश्यपाश्रममाविश्य महानुभावं तं भगवन्तम् अनिवेद्यैव सद्यस्तत्सुतां शकुन्तलां तादृशाभिरूप्यादिगुणगणपर्याकुलस्मृतिः पर्यणैषि । विदित-वृत्तान्ते पुनः पृथुतपसि तस्मिन् किन्तु खलु स्यादि'ति चिन्तयन् प्रेमभरभरितान्तरङ्गोऽपि प्रतिश्रुतचरे पृतनाप्रेषणे दोलायितमतिरजायत॥

---

माघ्रायम् आघ्रायाघ्राय । आस्वादमास्वादम् आस्वाद्यास्वाद्य । आलिङ्गमालिङ्गम् आलिङ्ग्यालिङ्ग्य । त्रिष्वपि 'आभीक्ष्ण्ये–' (पा० सू० ३-४-२२) इति णमुल् । तुल्यकुल्यां सदृशीमित्यर्थः । निजधर्मः पालनम् । प्रतिष्ठासमानः प्रस्थातुमिच्छन् । विशङ्कटः विशालः ॥

कान्ते इत्यादि । दुर्लङ्घ्यैः अलङ्घ्यैरित्यर्थः । मनसापि लङ्घने प्रत्यवायः स्यादिति भावः । पञ्चषेत्यत्र 'संख्ययाव्यय–' (पा० सू० २-२-२५) इति समासः । 'बहुव्रीहौ सङ्ख्येये–' (पा०सू० ५-४-७३) इति डच् समासान्तः । मुदा शोकाक्रान्ता माभूत् । त्वदेकमनसः, शरीरमेव गच्छति मनस्तु त्वय्येव तिष्ठति । प्रहिणुमः प्रेषयामः । 'हि गतौ वृद्धौ च' । पुरीं गत्वा सेनां प्रहिणुम इत्युक्ते तदभावशङ्कया विवशामालक्ष्याह–नो विस्मरेम क्षणम् । अपिरर्थलभ्यः । क्षणमपीत्यर्थः । नो इत्यस्य भित्तिस्थानीयत्वाद् भाविन्यवस्था सूच्यते । क्षणं क्षणादित्यर्थः ॥ ५७ ॥

विश्लेषेत्यादि । निःश्वसन्निति शोकानुभावः ॥ ५८ ॥

तदन्वित्यादि । आभिरूप्यं मनोज्ञत्वम् । पर्यणैषि परिणीतवानसि । दोलायिता सन्दिग्धेति यावत् ॥

एवमन्यवसीयमानेतिकृत्यस्य तस्य हृदयगतः शकुन्तलावृत्तान्तः सकलजगद्क्षामयोगक्षेमनिरन्तरचिन्तया व्यतीतबहुसमयतया च शनैश्शनैरपिदेधीयते स ॥

याते तस्मिन् सपदि दयिते तापभाराभिभूता
ताम्यन्ती सा रविकरहता बालवल्लीव बाला ।
स्मारंस्मारं निखिलमपि तन्मालिनीतीरवृत्तं
खिन्ना तन्वी विवशमवसन्निष्पतद्बाष्पपूरा ॥ ५९ ॥

निमीलिताक्षी निरता समाधौ
निरस्तभोगा नितरां कृशाङ्गी ।
किं योगिनी किन्तु वियोगिनीय-
मित्यूढसन्देहमलोकि लोकैः ॥ ६० ॥

असावसार्षीद्दृषिराश्रमं तदा
ददर्श चैवं दुरवस्थितां सुताम् ।
अपृच्छदेनां च समित्कुशादिकं
भयात् कथञ्चित् समुपेत्य गृह्णतीम् ॥ ६१ ॥

---

एवमित्यादि । अन्यवसीयमानं अनिश्चीयमानम् इतिकृत्यं इतिकर्तव्यता । अलब्धलाभो योगः, लब्धपरिरक्षणं क्षेमः । अपिदेधीयते स अत्यर्थं तिरोहितोऽभूत् । यङ् ॥

यात इत्यादि । ताम्यन्ती, तमु ग्लानौ 'शमामष्टानां–' (पा० सू० ७-३-७४) इति दीर्घः ॥ ५९ ॥

निमीलितेत्यादि । अत्र अक्षिनिमीलनादीनामुभयत्रापि सम्भवात् सन्देहेन दर्शनम् । अलोकि दृष्टा ॥ ६० ॥

असावित्यादि । असार्षीत् प्राप्तवान् ॥ ६१ ॥

वत्से! कस्मात्त्वदीये विलुठति हृदये कश्चिदावेगभारः
किं वा पूज्यस्य कस्याप्यपरिचरणतः किन्न्वकृत्यानुरोधात् ।
दैवाल्लब्धस्य कस्याप्ययि! किमपगमादीप्सितस्येह सद्यः
सत्यं मे शंस शङ्कामपनय मद्दते कस्य विज्ञापनीयम् ॥ ६२ ॥

इति पुष्टादरं परिपृष्टामपि भिया ह्रिया च भृशविवशतनुवल्लरीं निरन्तरोदितनिःश्वासवेगविचलदुरोरुहां विनतवदनसरोरुहां निवचनेकृत्य स्थितां आश्वासवचनैरलमाश्वासयन् तदेव मुहुर्मुहुः कातराक्षीमिमामप्राक्षीत् ॥

एवं निजतातेन तेन वावद्यमानां प्रेमामृतनिष्यन्दिनीम् अधिकहृदयानन्दिनीं वाणीमाकर्ण्य किञ्चिदुदञ्चितसमाश्वासा निखिलकुलपालिकाकुलमौलिमालिका सा बालिका कथमपि गद्गदां गिरमुद्गमयामास ॥

त्वयि गतवति तावत् पूरुवंशप्रदीपो
नृपतिरिममयासीदाश्रमं निश्शलाकम् ।
तदनु पदयुगं ते वन्दितुं तात! कश्चित्
समयमयमवात्सीदग्रणीर्धार्मिकाणाम् ॥ ६३ ॥

---

वत्से इत्यादि । विलुठति परिवर्तते । आवेगभारः अतिसंभ्रमः । मद्दते, 'अन्यारात्–' (पा० सू० २-३-२९) इति पञ्चमी ॥ ६२ ॥

इतीत्यादि । निवचनेकृत्य मौनं कृत्वा । 'मध्येपदेनिवचने च' (पा० सू० १-४-७६) इति गतित्वात्, 'कुगति–' (पा० सू० २-२-१८) इति समासः । निवचने इति निपातनादेकारान्तत्वं, न पुनरेषा सप्तमी । अप्राक्षीत् पृष्टवान् ॥

एवमित्यादि । उदञ्चितः उद्गतः । निखिलकुलपालिकाकुलमौलिमालिकेत्यनेन अनयानुष्ठितमिदं पितुः प्रियमेव स्यादिति द्योत्यते ॥

त्वयीत्यादि । गतवति तावत् गतवत्येव । पूरुवंशप्रदीपः, अनेन विशेषेण पूजनीयत्वमुक्तम् । निश्शलाकं विविक्तं, "रहः प्रच्छन्नमेकान्तं निश्शलाकमुपह्वरम्"

बहुभिरथ स वाक्यैरुन्मुखीकृत्य धर्म्यैः
सपदि विधिबलान्मामूढवानूढरागम् ।
सकलमपि ममेदं त्वत्प्रसादाय भूया-
दशरणजनबन्धो! विश्ववेदिन्! नमस्ते ॥ ६४ ॥

ततः सुतायाः पादान्तपतिताया भक्तिभारभरितान्तरङ्गाया भारतीमिमां परिकलय्य भाविनमुदन्तं परोक्षमपि परोरजसा मनसा सर्वपथीनेन सर्वमपि करामलकवदवलोकयन् पर्याह्लन्नमनसः स खलु वैखानसशिखामणिः, 'वत्से! यदविचिकित्सं पृथुयशसं पृथिवीशममु-मवृथास्तदवृथा संपत्स्यते, अस्माभिरपि चिराभिलषितेयमनुरूपवरावाप्तिः,

---

इत्यभिधानरत्नमाला । तव शार्ङ्गरवादीनां चासान्निध्याद् वयमेव पूज-नाधिकारिण्यो जाता इति प्रकाश्यते । कच्चित् समयमवात्सीत् । अनेनातिथि-जनपर्युपासनानतिक्रमणीयतासंभाव्यमानं सहावस्थितिसल्लापादिकमप्यासीदिति द्योत्यते । धार्मिकाणामग्रणीः सल्लापादिष्ववगतत्वादेवमुक्तिः । 'अग्रग्रामाभ्यां नयतेः' (वा०) इति णत्वम् ॥ ६३ ॥

बहुभिरित्यादि । उन्मुखीकृत्य अवश्यमस्याभिमतं विधेयमिति मे मतिमुत्पाद्य । अत्र हेतुर्धर्म्यैरिति । धर्मादनपेतैः । धर्मपथ्यर्थेषु यत् । सपदि भवदागमनमप्यप्रतीक्ष्य । विधिबलाद् दैवशक्त्या । किमन्यद्वक्ष्यामीति भावः । एवं तत्त्वतोऽस्मै जिज्ञासितं विज्ञाप्य आत्मानादरणजन्यमन्युमाशङ्कमाना आह— सकलमित्यादि ॥ ६४ ॥

तत इत्यादि । परोरजसा रजसः परेण, सात्त्विकेनेति यावत् । 'राज-दन्तादिषु परम्' (पा० सू० २-२-३१) इत्युपसर्जनस्य परनिपातः । अत एव सर्वपथीनेन सर्वमार्गं व्याप्नुवता । 'तत्सर्वादेः--' (पा०सू०५-२-७) इति खः । सूक्ष्मव्यवहितविप्रकृष्टातीतानागतादिविषयेष्वप्रतिहतेनेति यावत् । पर्याह्लन्नं परितः आह्लादयुक्तं, 'ह्लादी सुखे च' । 'ह्लादो निष्ठायाम्' (पा०सू० ६-४-९५) इति ह्रस्वः । अविचिकित्सं असंशयम् । अवृथाः वृतवती । अवृथा सम्पत्स्यते सार्थकं भविष्यति । 'वृथा निरर्थकाविध्यो'रित्यमरः ।

अद्य सद्य एव दैवादुपनता तरसा तव राजोरसमराजसः सर्वसहापतीनामनर्वाचीन एव । तदनन्ताधिनाथममुमेव कान्तमन्वग्भावमन्वततु भवती' इति

माधुरीसहितापन्नसत्त्वाया भारती तदा ।
विविक्तान्तरमाविश्य तस्यामोदमजीजनत् ॥ ६५ ॥

इत्थं सुतां तां ससुतां नितान्तं
प्रसाद्य सद्यो नियमोद्यतोऽभूत् ।
शकुन्तला सापि तथैव सख्या-
वाश्वासमाश्वाश्नुवतातिवेलम् ॥ ६६ ॥

ततश्च,

क्षणानां च गुणानां च दिनस्य दयितस्य च ।
गणयन्ती गणानेषा निषसाद विषादिनी ॥ ६७ ॥

---

राजोरसं राजसु प्रधानभूतं, 'अग्राख्यायामुरसः' (पा० सू० ५-४-९३) इति टच् समासान्तः । अग्रं प्रधानम् । यथा शरीरावयवानामुरः प्रधानम् एवमन्योऽपि प्रधानभूत उरश्शब्देनोच्यते । अराजसः कैमुतिकन्यायेन सात्त्विक इत्यर्थः । सर्वसहा भूः । 'संज्ञायां भृतॄ--' (पा०सू० ३-२-४६) इति खच् । अनर्वाचीन उत्तमः । 'विभाषाञ्चेः--' (पा० सू० ५-४-८) इति स्वार्थे खः । अनन्ताधिनाथं भूपम् । अन्वग्भावं अनुकूला भूत्वा । 'अन्वच्यानुलोम्ये' (पा० सू० ३-४-६४) इति णमुल् । अन्वततु सततमनुगच्छतु । 'अत सातत्यगमने' ॥

माधुरीत्यादि । आपन्नं सत्त्वं सत्त्वगुणं यया सा आपन्नसत्त्वा तस्याः । विविक्तान्तरं शुद्धं मानसम् । अत्र कविवचोभङ्ग्या काचिदापन्नसत्त्वा गर्भिणी कुमारभरणकुशलया सह सूतीगृहं गत्वा पुत्रं प्रासोष्टेत्यर्थः प्रतीयते ॥ ६५ ॥

इत्थमित्यादि । आश्नुवत गतवत्यः । अतिवेलं अत्यर्थम् ॥ ६६ ॥

ततश्च ॥

क्षणानामित्यादि । विषादिनी विरहवेदनापरीता एषा दिनस्य क्षणानां दयितस्य गुणानां च गणान् गणयन्ती निषसाद निषण्णा आसीदित्यन्वयः । यथासंख्यमलङ्कारः ॥ ६७ ॥

राज्ञा प्रतिज्ञातचरे व्यतीते सा वासरे वत्सरतुल्यकुल्ये ।
तमेव कान्तं सततं स्मरन्ती दीना दिनानीह निनाय तन्वी ॥ ६८ ॥

प्रथमसङ्गम एव समाहितं बहुतिथाहपरिक्रमणस्फुटम् ।
अथ तदीयमशेषसुखावहं विरुरुचे रुचिरद्युति दौहृदम् ॥ ६९ ॥

ततः किमु निरन्तरतन्त्रावापचिन्तनपरतन्त्रतया, किमुत अनवरतानुरोधननिरतावरोधजनापाङ्गभङ्गितरङ्गितान्तरङ्गतया, उताहो! मयि भावभेदविदितगुरुतरानुरागायामवज्ञया वा राज्ञा पृतनाप्रेरणा स्वयं प्रतिज्ञातापि न प्रतिपादितेति तस्या भूरिचिन्तासन्तानेन सह पूरुसन्तानसन्तानहेतुः स गर्भो निर्भरं प्रौढिमानमाढौकत ॥

त्रिसमीविगमे शुभे दिने
धृतदुर्हृत्तिमिरं सभानु सा ।
असविष्ट च विष्टपत्रय-
प्रथितं शिष्टमुदा सहात्मजम् ॥ ७० ॥

---

राज्ञेत्यादि। प्रतिज्ञातचरे पूर्वं प्रतिज्ञाते। वत्सरतुल्यकुल्ये वत्सरसदृशे इत्यर्थः ॥ ६८ ॥

प्रथमेत्यादि। बहूनां पूरणं बहुतिथम् । 'तस्य पूरणे–' (पा० सू० ५-२-४८) इति डट् । 'बहुपूग–' (पा० सू० ५-२-५२) इति तिथुक् च । तच्चाहश्च बहुतिथाहः । 'राजाहः–' (पा०सू० ५-४-९१) इति टच् समासान्तः। तस्य परिक्रमणेन अत्ययेन स्फुटम्। विरुरुचे शुशुभे ॥ ६९ ॥

ततः किमु इत्यादि। तन्त्रं स्वविषयव्यापारः आवापो मण्डले सन्निविष्टः। किमु इत्यादयो विकल्पे। "आहो उताहो किमुत विकल्पे किं किमूत च" इत्यमरः। सन्तानः समूहः। पूरुसन्तानः पूरुवंशः। सन्तानः सन्ततिः। निर्भरमतिमात्रम्। प्रौढिमानं प्रौढत्वम्। आढौकत प्राप्तवान् ॥

त्रिसमीत्यादि। तिसृणां समानां समाहारस्त्रिसमी। 'स नपुंसकम्' (पा०सू०२-४-१७) इत्यत्र वा टाबन्तो ह्रस्वत्वं चेति पक्षे नपुंसकत्वाभावे पञ्चखट्वीत्यादिवद् ङीष्। दुर्हृदः शत्रवः। सभानु भानुना सदृशः। 'अव्ययं–'

जाते तस्मिन् वितेने सपदि सुरगणः पुष्पवर्षं प्रहर्षाद्
भेरीणां भूरिनादो दिवि च दिविषदामुच्चकैरुच्चचार ।
अन्योन्यासक्तबाहायुगमथ ननृतुर्विस्मयात् स्वर्गयोषा-
स्तोषेणागासिषुश्च स्फुटललितलयं सर्वके सौवगेयाः ॥ ७१ ॥

अनन्तरमन्तरिक्षाद् 'वत्से त्वत्सूनुरौपजानुकभुजो जायमान एवायमोजायमानस्त्रिविक्रमातिक्रमी वक्रेतरविक्रमाक्रान्तविष्टपत्रयो धिक्कृतामित्रचक्रवालश्चक्रवालातिक्रान्तकीर्तिः प्रक्रान्तराजसूयादिक्रतुरनतिक्रान्तमर्यादश्चक्रवर्ती च भवन् पराक्रमे पुरा क्रमते' इति परिवृतामर्त्यचक्रेण शक्रेण श्लाघितां तां शकुन्तलां सभाजयन् स भगवान् महर्षिः जहृषीति स्म ॥

---

(पा० सू० २-१-६) इत्यादिना सादृश्येऽव्ययीभावः । असविष्ट प्रसूतवती । 'स्वरतिसूति–' (पा० सू० ७-२-४४) इतीड्विकल्पाद् इट्पक्षे रूपम् । शिष्टमुदा सहेति **सहोक्तिः** ॥ ७० ॥

**जात** इत्यादि । उच्चचार उद्भूत् । अगासिषुः गायन्ति स्म । उच्चकैस्सर्वके, 'अव्ययसर्वनाम्नाम्–' (पा० सू० ५-३-७१) इत्यकच् स्वार्थे । सौवाः स्वर्भवाः । गेयाः गायकाः ॥ ७१ ॥

**अनन्तर**मित्यादि । अन्तरिक्षाद् अन्तरिक्षमुपगम्य । 'ल्यब्लोपे–'(वा०) इति पञ्चमी । औपजानुकौ जानुसमीपे प्रायभवौ, 'उपजानूपकर्ण–' (पा० सू० ४-३-४०) इति ठक् । जायमान एव जननसमय एव । ओजायमानः ओजस्वी भवन् । 'भृशादिभ्यः–' (पा०सू० ३-१-१२) इति क्यङ् । 'ओजसोऽप्सरसो नित्यम्–' (वा०) इतिं नित्यं सलोपः । ओजश्शब्दो वृत्तिविषये तद्वति वर्तते । त्रिविक्रमातिक्रमी । 'नोदात्त–' (पा० सू० ७-३-३४) इति वृद्धिप्रतिषेधः । वक्रेतरेति त्रिविक्रमातिक्रमे हेतुः । अमित्रचक्रवालं अमित्रमण्डलं, चक्रवालो लोकालोकः । पराक्रमे शत्रूणामाक्रमे । पुरा क्रमते अप्रतिबन्धेन क्रमिष्यति । 'यावत्पुरा–' (पा०सू०३-३-४) इति भविष्यति लट् । यावत्पुराशब्दौ निश्चयार्थाविति **रामः** । जहृषीति स्म अतितरां हृष्टोऽभूत् ॥

प्रकृष्टशोभया जुष्टं दृष्ट्वा तं सापि तुष्टधीः ।
अबोभूयिष्ट भूयिष्ठगुणाकृष्टत्रिविष्टपम् ॥ ७२ ॥

ततः स निश्शेषदृश्वा काश्यपो यथाविधि विश्वातिशायिनोऽस्य विश्वानि जातकर्मादीनि कर्मजातानि व्यतानीत् ॥

कुमारेण समारेण सुकुमारेण चामुना ।
शस्येन शस्यकेनाथ शुशुभेऽसौ शुभंयुना ॥ ७३ ॥

अनन्तरं जैवातृकवंशजोऽयं जैवातृक इव परत्रादृष्टचरीमाद्यां वृद्धिमासेदिवान् अचलेशावतंसभावी षड्वर्ष एव विजिहीर्षुर्विविधविहरणतात्पर्येण तात्वर्यमाणैर्मुनिकुमारैरमा वीरजनवरेण्यः पुण्यजनशरण्याया

---

प्रकृष्टेत्यादि । प्रकृष्टा अतिशयिता । अबोभूयिष्ट भृशं भूता । भूयिष्ठैः अतिशयेन बहुभिः ॥ ७२ ॥

तत इत्यादि । निश्शेषदृश्वा सकलं दृष्टवान् । 'दृशेः–' (पा० सू० ३-२-९४) इति भूते क्वनिप् । विश्वानि सर्वाणि ॥

कुमारेणेत्यादि । समारेण मारसदृशेन । 'अव्ययं विभक्ति–' (पा०सू० २-१-६) इत्यव्ययीभावः । 'तृतीयासप्तम्योः–' (पा० सू० २-४-८४) इति विकल्पात् सुब्लोपाभावपक्षे रूपम् । शस्यकेन सस्येन । 'परिघात इत्यत्र शस्येने'ति हरपाठात् कन् । जन्मन्येव सर्वगुणैस्सम्बद्धो जातः सस्यकः शस्यको वा । शुभंयुना शुभान्वितेन । 'अहंशुभमोर्युस्' (पा०सू०५-२-१४०) । 'शुभंयुस्तु शुभान्वितः' इत्यमरः ॥ ७३ ॥

अनन्तरमित्यादि । जैवातृकः शशाङ्कः । परत्रादृष्टचरीमाद्यां वृद्धिमिति । प्रतिदिनं वृद्धेराधिक्यादन्यत्रादृष्टपूर्वाम् । अत्र जैवातृकशब्देनापि सादृश्यमुक्तम् । अन्यत्रादृष्टचरीमादिवृद्धिम् । सर्वत्रादिवृद्धेर्निमित्तापेक्षित्वम् । अत्र तु जीवेः 'आतृकन् वृद्धिश्च' (उ० सू० ८२) इत्युक्तेरनिमित्ता आदिवृद्धिः इति । अचल ईशावतंसभावोऽस्यास्तीति तथा । ईशः शर्वः । अचलेशा भूपाश्च । षड्वर्षः 'वर्षाल्लुक् च' (पा०सू० ५-१-८८) 'चित्तवति नित्यम्' (पा० सू० ५-१-८९) इति भूत इत्यर्थे ठञो लुक् । विजिहीर्षुः विहर्तुमिच्छुः । तात्वर्यमाणैः

विटपिविटपश्रेण्यापूर्णगगनसरण्या महारण्यधरण्या मध्यदेशं मञ्जुतर-गुञ्जितपतङ्गकुलसञ्जनितशोभकुञ्जगुन्मादिपुञ्जाश्रितमशिश्रियत् ॥

तत्र पुनः स च ते मुनिकुमाराश्च सञ्जातकुतुकं कुञ्जेकुञ्जे तिरोदधानाः, व्यावगवेषीं व्यातन्वानाः, पुरःपरिप्लवमानपरामर्शनपरमाशया व्यावधावीं व्यादधानाः, नदीमवस्कन्दमवस्कन्दमुदरपूरमुदकमापिबन्तः, पादपंपादपमनुपादं पचेलिमानि भरितमधुरिमाणि फलजालानि परिगृह्णानाः, मल्लिकावल्लिकानुपातमुल्लसितानि फुल्लानि पेलवानि पल्लवान्यप्यलमपचिन्वानाः, गुहानुप्रवेशमञ्चितरसं किञ्चिदिव विश्रमसुखमनुभुञ्जानाः, पुनः कुतुकभरेण चण्डनिनदं दाण्डादिलीला बहुधा

---

अत्यर्थं त्वरमाणैः । 'ञित्वरा सम्भ्रमे' । यङन्तात् शानच् । पुण्यजना राक्षसाः, सन्तश्च । विटपिविटपश्रेणीभिः आपूर्णा आपूरिता गगनसरणिः यया तस्याः । गुञ्जितं शब्दः । अशिश्रियत् आश्रितवान् । 'णिश्रि--' (पा० सू० ३-१-४८) इति चङ् ॥

तत्रेत्यादि । कुञ्जेकुञ्जे । 'नित्यवीप्सयोः' (पा० सू० ८-१-४) इति वीप्सायां द्विर्वचनम् । सर्वेषु कुञ्जेष्वित्यर्थः । तिरोदधानाः निलायनक्रीडां कुर्वन्तः । व्यावगवेषीं परस्परान्वेषिणीं, 'कर्मव्यतीहारे णच्--' (पा० सू० ३-३-४३) इति भावे णच् । व्यावधावीं अन्योन्यधावनम् । नदीमवस्कन्दमवस्कन्दं नदीं पुनःपुनः अवस्कन्द्येत्यर्थः । 'विशिपतिपदि--' (पा० सू० ३-४-५६) इति आसेव्यमानतायां णमुल् । पौनःपुन्यमासेवा । 'नित्यवीप्सयोः' (पा० सू० ८-१-४) इति द्विर्वचनम् । उदरपूरं पिबन्तः उदरं पूरयन्तः पिबन्त इत्यर्थः । पादपंपादपमनुपादं सर्वान् पादपान् प्राप्येत्यर्थः । 'विशिपतिपदी'ति वीप्सायां णमुल् । व्याप्तावुपपदस्य द्वित्वं पौनःपुन्ये क्रियायाः । पचेलिमानि स्वयमेव पक्वानि । अत्र 'केलिमर उपसंख्यानम्' (वा०) इति कर्मकर्तरि केलिमर् । वल्लिकानुपातं सर्ववल्लीरनुपत्येति वा वल्लीं पुनःपुनरनुपत्येति वार्थः । अत्र समासेन व्याप्तिपौनःपुन्ययोरुक्तत्वात् 'नित्यवीप्सयो'रिति द्वित्वं न । फुल्लानि पुष्पाणि । गुहानुप्रवेशं सर्वा गुहा अनुप्रविश्य, गुहामनुप्रविश्यानुप्रविश्येति वा । दण्डः प्रहरणमस्यां क्रीडायामिति दाण्डा । 'तदस्यां प्रहरणम्--'

विधायंविधायं, औपरिष्टशाखोपविष्टानां शाखामृगाणां लम्बमानं वालजालमाकर्षमाकर्षं, प्लवनविप्लवादर्जितेन तदीयदशनदर्शनतर्जनेन हासंहासं, विमलाम्बुबिम्बितं निजप्रतिबिम्बं स्वचेष्टितमनुचेष्टमानं मानादाक्रोशमाक्रोशं, प्रतिस्वनमुपालम्भमुपालम्भमपि परिक्रीडमानाः क्रीडारसाक्रान्तमानसाः शनैरभ्रतरविभ्राजमानाभ्रंकषभूरिभूरुहनिवह-विकटविटपपटलदलविततिहरितवितानरोरुध्यमानसहस्रकरोस्रसाहस्रतया अजस्रतमिस्रायमाणाभ्यन्तरभागम् इतस्ततःसरीसृप्यमाणसरीसृपसृगाल-सृमरशरभशशशल्यभल्लूककोलवलीमुखमुखसत्त्वसङ्घसमापूर्णं परितः परिहिण्डमानवनशुण्डालषण्डशुण्डादण्डचाखण्ड्यमानशाखिशाखाकाण्ड-झटझटानिर्घोषनिर्घातनिध्वनितनिरुद्धरोदोन्तरालम् उद्धततरसिंहव्याघ्र-सङ्घाताधिष्ठितबंहिष्ठगरिष्ठगह्वरभरितपर्यन्तभागमतिभयानकं प्रदेशान्तर-माक्रम्य चङ्क्रमाञ्चक्रिरे ॥

---

(पा० सू० ४-२-५७) इति णः । 'अव्ययात्त्यप्' (पा० सू० ४-२-१०४) इत्यत्र 'अमेहक्वतसि-' (वा०) इति परिगणनस्य प्रायिकत्वादणि औपरिष्टाः, उपरि-ष्टाद्भवाः । 'अव्ययानां भमात्रे-' (वा०) इति टिलोपः । अर्जितेन स्वीकृतेन । 'अर्ज स्वीकारे' । प्लवनविप्लवात् प्लुतिनिरोधात् । दशनदर्शनरूपेण तर्जनेन भर्त्सनेन । प्रतिस्वनं स्वनं प्रति स्वनं प्रति । वीप्सायामव्ययीभावः । प्रतिस्वनं प्रतिशब्दम् । उपालम्भमुपालम्भं निर्भर्त्स्य निर्भर्त्स्य । रोरुध्यमानं भृशं रुध्यमानं, कर्मणि । तमिस्रायमाणः तमिस्रावदाचरन् । कर्तुः क्यङन्तात् शानच् । सरीसृप्यमाणाः भृशं पुनःपुनर्गच्छन्तः । 'गम्लृ सृप्लृ गतौ' यङन्तात् शानच् । परिहिण्डमानाः परिगच्छन्तः । 'हिडि गत्यनादरयोः' । शुण्डालाः करिणः । चाखण्ड्यमानम् अत्यर्थं खण्ड्यमानम् । बंहिष्ठं बहुलतरं । 'प्रियस्थिर-' (पा० सू० ६-४-१५६) इति इष्ठनि बंह्यादेशः । चङ्क्रमांचक्रिरे कुटिलं गच्छन्ति स्म । 'नित्यं कौटिल्ये-' (पा० सू० ३-१-२३) इति कौटिल्ये यङ्, तदन्ताल्लिटि आम् । 'यस्य हलः' (पा० सू० ६-४-४९) इति यलोपः । यस्येति सङ्घातग्रहणमेतत् । तत्र 'अलोऽन्त्यस्य' (पा० सू० १-१-५२) इत्येतन्न भवति । अतो लोपेनापि सिद्धत्वात् ॥

तदनु तत्र महत्तरमत्तमातङ्गातिबृंहितबृंहिताकर्णनतूर्णोदीर्णरभस-भरघूर्णमानोद्वृत्तवृत्तविकटतरनेत्रयुगलात्यन्तभीषणं विशदविशङ्कट-सटाघटां प्रकटिताटोपमाधुन्वन्तं व्यात्तवक्त्रोदरदरीदृश्यमानदंष्ट्राङ्कुर-प्रसृमरोच्चिष्प्रतानप्रध्वंसिततमस्तोमं उद्दोधूयमानोद्दामवालहस्तविहस्ती-कृतसमस्तसत्त्वसङ्घम् उदञ्चितखरतरनखराञ्चलं कञ्चन पञ्चाननं सहसा-भिपतन्तमभिवीक्ष्योद्भ्रान्तहृदया विप्रकुमाराः क्षिप्रमेव प्रदुद्रुवुः ॥

मा मा भैष्टेति धृष्टं द्रुतमथ कथयन् बालको हेलया तं
पञ्चास्यं तं च तञ्चद्भयमपि करिणं निर्भयोऽभ्येत्य दोर्भ्याम् ।
वत्सग्राहं स गृह्णन् मुहुरपि घटयन्नेतयोर्भावभेदं
पश्यन् विश्वैकवीरः शिवशिव! नितरां तत्र चित्रीयते स्म ॥ ७४ ॥

वृकमहिषतरक्षुव्यालहर्यक्षखड्ग-
प्रियकशरभमुख्यान् सत्त्वसङ्घानसंख्यान् ।
विपिनभुवि वितन्वन् बालको बाललीलां
त्रिजगदवननिघ्नः किञ्च जेघ्नीयते स्म ॥ ७५ ॥

---

तदन्वित्यादि । अतिबृंहितं अतिप्रवृद्धम् । विशङ्कटां विशालां 'वेश्शालच्छङ्कटचौ' (पा० सू० ५-२-२८) इति शङ्कटच् । उद्दोधूयमानेन अत्यर्थं पुनःपुनः उद्धूयमानेन । वालहस्तेन वालधिना ॥

मा मेत्यादि । तञ्चद्भयं प्राप्तभीतिं, 'तञ्चु तञ्ची'त्यादि दण्डकधातुर्गत्यर्थः । 'भयं चित्तस्य चलनं तच्च प्राहुरनेकधा' इति भावप्रकाशः । वत्सग्राहं वत्समिव । चित्रीयते स्म द्रष्टॄणामाश्चर्यमकरोत् । एतयोर्भावभेदं पश्यन् आश्चर्यमनु-भूतवानपि ॥ ७४ ॥

वृकेत्यादि । जेघ्नीयते स्म पुनःपुनः निहतवान् । यङि हन्तेर्हिंसायां घ्नभावो वक्तव्यः ॥ ७५ ॥

मोमुद्यमानैर्मुनिदारकैस्तै-
नोंनूयमानः सविधं समेतैः।
देदीप्यमानो वसतिं समीय
रंरम्यमाणः स दिनान्यनैषीत्॥ ७६॥

तदनु कदाचन तपस्विनां पेष्टुं पुष्टरोषं सन्निकृष्टं प्रविष्टं प्रतिकृष्टं प्रकृष्टकर्मक्षपणपटिष्ठं क्षपाटवाटं सर्वस्वर्वासिगर्वसर्वस्वनिर्वासिदुर्वारदोर्विक्रमाक्रान्तभुवनत्रयमुग्रंपश्यमुदग्रं पश्यन् पुरुषहंसोऽयमहंयुरतिरभसमभिपत्य वीरजनवरिष्ठो वज्रनिष्ठुरेण मुष्टिना सङ्घशः सङ्घचे जङ्घनीति स्म॥

एवमनेन वर्द्धमानं वध्यमानं युद्धमध्यादपचिक्रमिषुमपचितविक्रमं रक्षोगणं विक्षोभिणमध्यक्षयन्नेषामध्यक्षो राक्षसस्तत्क्षणपोपुष्यमाणरोषकालुष्यरूषितरूक्षतरेक्षणोदित्वराशुशुक्षणिकणोद्भ्रमणविक्षोभ्यमाणनिखिलपारिकाङ्क्षिगणः क्षणेन तं पिपिक्षन् कमपि वृक्षमभ्रङ्कषमुत्पाट्योद्भ्रमयन् निर्भयममुमर्भकं प्रत्यभ्यधावत्॥

---

मोमुद्यमानैरित्यादि। नोनूयमानः अत्यर्थं पुनःपुनः स्तूयमानः। 'णु स्तवने'॥ ७६॥

तदन्वित्यादि। तपस्विनां पेष्टुं तपस्विनो हन्तुम्। शेषविवक्षायां 'जासिनिप्रहण—' (पा० सू० २-३-५६) इति षष्ठी। प्रतिकृष्टं निकृष्टम् प्रकृष्टानि अतिशयितानि कर्माणि यागादीनीति यावत्। क्षपाटवाटं राक्षससमूहमिति यावत्। 'शाटीवाटी दिशानामि'ति प्रयोगः। उग्रंपश्यतीत्युग्रंपश्यः क्रूरदृष्टिः। 'उग्रंपश्ये'ति निपातः। सङ्घशः सङ्घं सङ्घं, 'संख्यैकवचनात्—' (पा० सू० ५-४-४३) इति शस् एकवचनाद् एकार्थाच्च कारकात्। जङ्घनीति स्म अत्यर्थं निहतवान्। हन्तेर्यङ्लुक्॥

एवमित्यादि। अपचिक्रमिषुं अपगन्तुमिच्छुम्। अध्यक्षयन् पश्यन्। अध्यक्षः स्वामी। पारिकाङ्क्षिगणः तपस्विगणः। परं ब्रह्मज्ञानं काङ्क्षतीति

क्रोधादाधावमानं सपदि सविधगो वञ्चयंस्तत्प्रहारं
बालोऽयं लीलयारिं किमपि न गणयन् दुर्विषह्यं प्रगृह्य ।
कुण्ठं कण्ठोपपीडं स्नुतरुधिरझरं तत्क्षणादक्षिणात् तं
दृष्ट्वा तत्कर्म दुष्टप्रमथनमृषयस्तुष्टुवुस्तं च तुष्टाः ॥ ७७ ॥

नाथे परेते खलु नैर्ऋतानां
यातः परे ते च परेतभावम् ।
सद्योऽनुनिर्वान्ति हि सूर्यकान्ताः
सर्वेऽपि निर्वान्तमिहाहिमांशुम् ॥ ७८ ॥

दुःखावहा द्विषां वृद्धिरिति मिथ्यैव कथ्यते ।
यदस्मिन् पञ्चतां प्राप्ते जहृषुस्ते महर्षयः ॥ ७९ ॥

रक्षोवीरा रक्तपूराभिषिक्ताः
शिष्टास्ते तन्मुष्टिनिष्पिष्टगात्राः ।
प्राणत्राणे केवलं जातकामा
नो वा जग्मुः कां दिशं कान्दिशीकाः ॥ ८० ॥

---

पारिकाङ्क्षी । आवश्यके णिनिः । पिपिक्षन् पेष्टुमिच्छन् । 'पिष्ऌ सञ्चूर्णने' । सनन्ताच्छता । 'षढोः कः सि' (पा० सू० ८-२-४१) । अभ्रङ्कषं 'सर्वकूल–' (पा० सू० ३-२-४२) इति खश् ॥

क्रोधादित्यादि । अक्षिणात् । 'क्षिषू हिंसायाम्' ॥ ७७ ॥

नाथ इत्यादि । परेते मृते । परे ते । निर्वान्तं विनाशं गच्छन्तम् । अनुनिर्वान्ति पश्चान्निर्वाणं गच्छन्ति ॥ ७८ ॥

दुःखेत्यादि । वृद्धिः वर्धनम् । पञ्चता पञ्चसंख्यावत्त्वं, मृतिश्च । जहृषुः हृष्टाः ॥ ७९ ॥

रक्षोवीरा इत्यादि । कान्दिशीकाः भयेन द्रुताः । "कान्दिशीको भयद्रुत" इत्यमरः । "वेदद्वीपैश्शालिनी मात्तौ गौ" ॥ ८० ॥

रक्तग्रहाणां क्षतविग्रहोत्थ-
रक्तग्रहात् तत्र पिशाचसङ्घाः ।
आबालवृद्धं परिवृद्धतर्षा
वेगात् समीयुश्च समीकभूमौ ॥ ८१ ॥

पातंपातं क्षतजजलधौ तत्र नानद्यमानाः
पायंपायं भरितकुतुकं तच्च मामद्यमानाः ।
खादंखादं पललशकलं भूरि मोमुद्यमाना
गायंगायं विवृतदशनं नृत्तमेते वितेनुः ॥ ८२ ॥

एवं दुष्टानि सत्त्वानि दुष्टांश्च रजनीचरान् ।
महता महसा मानाददीनोऽयमदीदमत् ॥ ८३ ॥

शनैश्शनैरुज्झितबाल्य उच्चैः-
पदं गमी वीतकलङ्कसङ्गः ।
लसत्करोत्सादिततामसौघः
सुधांशुदर्शं ददृशे स सर्वैः ॥ ८४ ॥

---

**रक्तेत्यादि** । रक्तग्रहा राक्षसाः । "अनुषा विधुरा रक्तग्रहाश्शङ्कव आशराः" इति वैजयन्ती । ग्रह आग्रहः । समीकभूमौ (युद्धभूमौ) ॥ ८१ ॥

**पातमित्यादि** । पातंपानमित्यादौ आमीक्ष्ण्ये णमुल् । मामद्यमानाः अत्यर्थं माद्यन्तः । अत्र बीभत्सः । "गर्हणीयश्च निन्द्यश्च कुत्सनीयश्च यो भवेत् । स भावः कथ्यते सद्भिर्बीभत्सः" इति भावप्रकशः ॥ ८२ ॥

**एवमित्यादि** । अदीदमत् दमयति स्म ॥ ८३ ॥

**शनैरित्यादि** । उज्झितं त्यक्तं बाल्यं बालभावो येन सः । उच्चैःपदं सम्राट्पदम् । गमी गमिष्यन् । उच्चैःपदं आकाशं गमिष्यन् च । अत्र भविष्यदर्थेन कदाचिदपि गतेः परिसमाप्तिर्नास्तीति द्योत्यते । वीतो विगतः, विशेषेण इतश्च । कलङ्कोऽपवादः, अङ्कश्च । "कलङ्कोऽङ्कापवादयोः" इत्यमरः । लसता करेण हस्तेन, करै रश्मिभिश्च । उत्सादितः तामसौघो राक्षसौघः, तमसां

विश्वैरेष तपोधनैरनुमतो निश्शेषवित् काश्यपो
विश्वोत्कृष्टतरोदितोदितमहाबाहाबलं बालकम् ।
धाम्नामायतनं यशोनिलयनं भूम्ना गुणानां भृतं
सर्वेषां दमनात् स सर्वदमनं नाम्ना तमाम्नातवान् ॥ ८५ ॥

ततश्च विश्वजनीनवृत्तिराश्रम एव काश्यपेनानेन विहितोपनीतिरेष सर्वदमनः साङ्गेषु सर्ववेदेषु समस्तेषु शास्त्रेषु समग्रेषु शस्त्रेषु सकलासु कलासु च कालेनाल्पेनाल्पेतरमनीषो व्यनीयत ॥

बालकोऽधिगताभिः स
ताभिर्विद्याभिराबभौ ।
विमलः सूर्यकान्तो हि
रविदीधितिभिर्यथा ॥ ८६ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
पञ्चमः स्तबकः ॥

---

सञ्चयश्च येन । सुधांशुदर्शं सुधांशुरिव । 'उपमाने--' (पा० सू० ३-४-४५) इति कर्तरि णमुल् । ददृशे दृष्टः ॥ ८४ ॥

विश्वैरित्यादि । उदितोदितं पुनःपुनरुदितं, 'नित्यवीप्सयोः' (पा०सू० ८-१-४) इति नित्यार्थे द्विर्वचनम् । नित्यता नाम आभीक्ष्ण्यम् । भृतं 'डु भृञ् धारणपोषणयोः' । संप्रवृद्धबहुगुणमित्यर्थः । आम्नातवान् 'म्ना अभ्यासे', उक्तवानिति यावत् ॥ ८५ ॥

ततश्चेत्यादि । विश्वजनीना विश्वजनेभ्यो हिता । 'आत्मन्विश्वजन--' (पा० सू० ५-१-९) इति खः । व्यनीयत विनीतोऽभूत् ।

बालक इत्यादि । विद्याभिराबभौ इत्यनेनास्य कृतकविनयवत्त्वमुक्तम् । विमल इति साधारणः । अनेन स्वाभाविकविनयवत्वमपि सूच्यते ॥ ८६ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये पञ्चमः स्तबकः ।

सा तु शकुन्तला निरन्तरपरिजरीजृम्भ्यमाणया परिध्वस्तान्यचिन्तया निजकान्तानुचिन्तया निर्भरमभ्यभूयत ॥

किं मां विस्मृतवानसौ स्वगृहिणी केनात्र विस्मर्यते
निष्कारुण्यतयाथवा स तु कृपावारान्निधिः श्रूयते ।
किं कालानिलरंहसातिमहता भग्नः स रागद्रुमो
वृद्धं प्रेम न हीयते हि महतां कस्मान्न मां नीतवान् ॥ १ ॥

किं वा करोम्यहमिहाभिदधामि कं वा
भग्नैव नेष्यति पुरीमिति मे बताशा ।
चित्तं तथापि परिधावति दुर्विनीतं
तस्मिन् जने जनमनोमदने किमेतत् ॥ २ ॥

सा कान्तिः स प्रभावः स च विनयभरः सा च सौशील्यनिष्ठा
ते वा लीलाकटाक्षास्तदपि च हसितं सा च सल्लापरीतिः ।
सा वा नैपुण्यमुद्रा स खलु मधुरिमा ता रहःकेलयो वा
हृद्यादृद्यापयायान्मतिरिह दयितस्यास्य कस्माद् गुणान्मे ॥ ३ ॥

---

अथ शकुन्तलायाः पतिगृहप्रेषणहेतुभूतां विप्रलम्भावस्थां वर्णयति--**सा तु** इत्यादि । जरीजृम्भ्यमाणया अत्यर्थं वर्धमानया । 'जभ जृभि गात्रविनामे ।' निर्भरम् अतिमात्रम् । अभ्यभूयत अभिभूता ।

**किं मा**मित्यादि । स्वगृहिणी स्वस्य गृहिणी । अत्र समासेन सम्बन्धमात्रमेव विवक्षितम्, न प्रेमादिकमिति प्रकाश्यते । "सम्बन्धमात्रमर्थानां समासो ह्यवबोधयेत् । नोत्कर्षमपकर्षं वा वाक्यात्तूभयमप्यदः ।" इति **भावप्रकाशः** । अत्र लोके । वारान्निधिरित्यलुक् ॥ १ ॥

**किं वे**त्यादि । अभिदधामि ब्रवीमि ॥ २ ॥

**से**त्यादि । सा कान्तिरित्यादौ तच्छब्दा अनुभूत्यर्थाः ॥ ३ ॥

विगलितधृतिबन्धं चिन्तयन्त्याः सदैवं
प्रचुरतरपरीतापातिवेलाकुलायाः ।
किमिह वचनजालैर्मानसं दीनदीनं
शिवशिव! दयितेऽस्मिन्नेत्र तस्या निलिल्ये ॥ ४ ॥

विषयेषु निर्विकल्पं
करणैरस्याः प्रवर्तमानायाः ।
सकलमपि हन्त जातं
प्रार्थनयैवानयोः परं सख्योः ॥ ५ ॥

हन्त प्राप्तोऽसि कान्त! त्वमयि कथमिमां व्यस्मरो मामनाथा-
मेवं भूयोऽपि मा भूत् क्षणमपि न सहे नाथ! ते विप्रयोगम् ।
इत्थं भावैकलब्धं प्रियमभिदधती द्रागनालोकयन्ती
हाहा! कान्तेति तान्ता मुहुरपि रुदती रोदयामास सख्यौ ॥ ६ ॥

एवं दुरन्तरुजमेष निरन्तरेण
तस्या ददद् दवशिखाविषमां कृशाङ्ग्याः ।
चित्ते सदा परिललास सलीलगामी
किं मानसादपसरेदिह राजहंसः ॥ ७ ॥

---

विगलितेत्यादि । शिवशिवेति विषादे । निलिल्ये निलीनमभवत् ॥ ४ ॥

विषयेष्वित्यादि । विषयेषु रूपादिषु । निर्विकल्पं विशिष्टकल्पनारहितं, जातिसम्बन्ध्यादिविरहितमित्यर्थः । गीतिरियम् । "आर्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः । दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेशः ॥" ५ ॥

हन्तेत्यादि हर्षे । व्यस्मरः विस्मृतवानसि । विप्रयोगं विरहम् । भावैकलब्धं भावो भावना सदानुसन्धानं तेनैकेन लब्धम् । निरन्तरचिन्तया अन्तःप्रत्यक्षवदेव दृश्यमानम् ॥ ६ ॥

एवमित्यादि । दुरन्ता चासौ रुक् च दुरन्तरुक् ताम् । दवस्यारण्यवह्नेः । मानसराजहंसशब्दौ श्लिष्टौ । कृशाङ्ग्या इति पीडाकार्यत्वेनोक्तिः ॥ ७ ॥

तापभारहरणाय सखीभ्यां लिप्त एव हृदि चन्दनपङ्कः ।
उष्णनिःश्वसितशोषित आभाद् भस्मवन्मदनदग्धहृदोऽयम् ॥ ८ ॥

आभ्यामतीव मृदुलानि मृणालनाला-
न्यस्था हृदि प्रणिहितान्यतिशीतलानि ।
तापव्यथां बत मनागपि नापनिन्युः
किं वा फलं जगति सिध्यति दीर्घसूत्रैः ॥ ९ ॥

स्वयं न जानाति शुचं य एष विबाधते यद्युपपद्यते तत् ।
स्मरस्तु जानन्नपि दाहपीडां ददाह कष्टं हृदयं तदीयम् ॥ १० ॥
श्रेयानात्मविनाशः स्वाश्रयनाशादिति प्रतीतमपि हन्त !
नास्मरदेव मनोभूरदयं यदयं मनोऽदसीयमलमदहत् ॥ ११ ॥

वेगादानीतमेतं वरतनु! घनसारं कुचाभ्यन्तरे ते
कान्तं सन्तापशान्त्यै कुरु सपदि मुदेत्युक्तमात्रे सखीभ्याम् ।
क्वासौ क्वासावितीयं लघु शयनतलादुत्थिता वीक्षमाणा
हाहा कष्टं! न दृष्टः प्रिय इति विवशा छिन्नपातं पपात ॥ १२ ॥

एवं वियोगादधिकातुरायाः शकुन्तलाया हृदये सदैव ।
जाज्वल्यमाने विषमेषुवह्नौ स्नेहस्तु नित्यं ववृधे किमेतत् ॥ १३ ॥

---

तापेत्यादि । लिप्तः दिग्धः । "स्वागतेति रनभाद् गुरुयुग्मम्" ॥ ८ ॥

आभ्यामित्यादि । दीर्घाणि सूत्राणि, दीर्घसूत्राश्च । "दीर्घसूत्रश्चिर-क्रियः" इत्यमरः ॥ ९ ॥

स्वयमित्यादि । यः स्वयं शुचं न जानाति एष विबाधते यदि तर्हि तद्बाधनम् उपपद्यते इत्यन्वयः । उपपद्यते युज्यते ॥ १० ॥

श्रेयानित्यादि । 'आश्रयविनाशादात्मविनाशः श्रेयान्' इति चाणक्यः । प्रतीतं प्रसिद्धम् । अदसीयं अमुष्याः सम्बन्धि ॥ ११ ॥

वेगादित्यादि । घनसारं कर्पूरम्, "अथ कर्पूरमस्त्रियां घनसारश्चन्द्रसंज्ञः" इति अमरः । घनः सारो यस्य स च । कान्तं मनोहरं, भर्तारं च । छिन्नपातं छिन्नं वस्त्विव । 'उपमाने--' (पा० सू० ३-४-४५) इति णमुल् ॥ १२ ॥

एवमित्यादि । स्नेहस्तैलं, प्रेम च ॥ १३ ॥

क्लान्तां कान्तवियोगशोकदहनज्वलावलीढाशयां
काशापाण्डरगण्डमण्डलमिलल्लम्बालकां बालिकाम् ।
प्रक्षामां प्रतिपत्कलामिव परं लावण्यलक्ष्मीजुषं
वीक्ष्य व्याकुलमानसो मुनिरसावाहूय तामभ्यधात् ॥ १४ ॥

वत्से! वक्ष्येऽद्य किञ्चित् पतिपरिचरणं सर्वसाध्वीजनानां
धर्मस्त्यक्त्वा तमेवं पितृगृहवस(तिं ? तेः) नारकं याति नारी ।
किञ्चेयं किंवदन्तीमिह खलु लभते विष्टपे कष्टरूपां
तत् त्वां विश्लेषखिन्नोऽप्ययि पतिवसतिं सन्मनीषे! निनीषे ॥१५॥

समारोढुं योग्यः सपदि युवराजोचितपदं
सुतश्चायं बाहाबलदलितरात्रिञ्चरभटः ।
तदेतेनोपेता निजपतिनिकेतं गतवती
विनीता नित्यं तं परिचर परं दैवतमिव ॥ १६ ॥

भद्रे! मद्रेण सहितः कालः काल्ये श्व एव ते ।
युक्तैर्नियुक्तैः शिष्यैर्मे सत्रा यात्रा वितन्यताम् ॥ १७ ॥

---

क्लान्तामित्यादि । प्रक्षामां प्रक्षीणां । 'क्षायो मः' (पा०सू० ८-२-५३) इति निष्ठातकारस्य मकारः ॥ १४ ॥

अथैनामेतदवस्थामालक्ष्य उचितवेदी काश्यपः साक्षादुक्तैरुद्वेगहेतुत्वाद्धर्मत्वेन पतिगृहगमनमनुशास्ति—**वत्से** इत्यादि । नरक एव नारकम् । 'अन्येषामपि दृश्यते' (पा० सू० ६-३-१३७) इति वा दीर्घः' इति **टीकासर्वस्वे** । प्रज्ञादित्वात् स्वार्थेऽण् वा । किंवदन्ती जनश्रुतिः । सन्मनीषे! त्वयापीदमवगतमेवेति भावः । निनीषे नेतुमिच्छामि ॥ १५ ॥

किञ्च हेत्वन्तरमप्यत्रास्तीत्याह—**समारोढुमित्यादि** । अयं समारब्धयौवनः, अत एव सपदीति ॥ १६ ॥

**भद्रे** इत्यादि । मद्रं भद्रम् । काल्यम् उषः । "व्युष्टं प्रभातं प्रत्यूषः सांयात्रिकमहर्मुखम् । काल्यं प्रभातम्" इति **वैजयन्ती** । युक्तैः नयनयोग्यैः । अत्र हेतुः मे शिष्यैरिति । श्वः काल्ये नियुक्तैः शिष्यैः यात्रा वितन्यताम् । नियुक्तैरिति, तानपि नियोक्ष्यामीति भावः ॥ १७ ॥

एवं शकुन्तलामादिश्य काश्यपोऽयं भूयो भूरितरसारं कवचहरममुं कुमारमपि समाहूय समादिदेश ॥

आत्मानं किमु वेत्सि वत्स! सततं लीलैकलोलः प्रभो-
र्दुष्यन्तस्य सुधाकरान्वयमणेः पुत्रो भवानौरसः ।
एषा ते जननी प्रधानमहिषी तस्यैव तस्मादितो
मात्रा पुत्र! समं समेत्य नगरीं त्वं यौवराज्यं भज ॥ १८ ॥

श्रुत्वासौ शारदां तामवददथ पिता तात! माता च मे त्वं
बन्धुर्वा देशिको वा गतिरपि च परा दैवतं वा परं त्वम् ।
मामा प्रेमाकुलं मां विसृज पतिगृहं याति चेद्यातु माता
नाहं यास्यामि कुत्राप्यत इति स रुदन्नस्य शिश्लेष पादौ ॥ १९ ॥

तदनु मुनिवरोऽयं प्रेमभाराभिभूतो
मुहुरपि परिरभ्य व्याकुलो मूर्ध्नि जिघ्रन् ।
निखिलनृपगुणौघान् संस्मरन्नेतदीयान्
पुनरपि तनयं तं सान्त्वयन्नेवमूचे ॥ २० ॥

---

एवमित्यादि । कवचहरं कवचधारणार्हवयसं, 'वयसि च' (पा० सू० ३-२-१०) इत्यच् वयसि द्योत्यायाम् ॥

आत्मानमित्यादि। औरसः स्वजातः। 'स्वजाते त्वौरसोरस्यौ' इत्यमरः। यौवराज्यं युवराजस्य भावः ॥ १८ ॥

श्रुत्वेत्यादि । शिश्लेष लीनोऽभूत् ॥ १९ ॥

तदन्वित्यादि । प्रेमभाराभिभूतत्वं व्याकुलताया हेतुः । निखिलनृपगुणौघान् संस्मरन्निति जगदवननिपुणोऽयमिहैव न स्थापनीय इति निश्चित्येति भावः ॥ २० ॥

वत्सैवं विक्लबत्वं किमिह कलयसे पौरवेन्द्रस्य पुत्रो
दौहित्रो मे स्मरैतत् तव निखिलजगत्त्राणकर्मैव धर्मः ।
तत् त्वं धैर्यावलम्बी पुरमतिरुचिरं प्राप्य तातानुशिष्ट-
स्तिष्ठन् द्राग् यौवराज्ये भुवमुदधिमितां पालयन् भुङ्क्ष्व भोगान् ॥

एवमेनं नियुज्यैष निजान्तेवासिनोऽपि च ।
निजगाद समाहूय प्रश्रितानिदमाश्रवान् ॥ २२ ॥

हे पुत्राः! पुत्रिकां मे नयत सतनयां प्रेमसर्वस्वभूता-
मेतां पत्युः प्रसिद्धां पुरमुरुविभवैः पूरितां प्रातरेव ।
आभाष्यैवं स्वशिष्यान् विरहमसहनीयं स्मरन्नेव तस्याः
प्रेमप्राचुर्यपर्याकुलहृदयमयं तां निशां हन्त! निन्ये ॥ २३ ॥

तदनु समुदीयमानतरणिसारथितरुणतरकिरणविसरणारुणाय-मानायां जनितकोकमिथुनसंक्रन्दनाशायां संक्रन्दनाशायां समुत्थाय तापसोत्तमः प्रतिसमापिताप्लवनादिप्राभातिकनियमः निजतनूजाया वियोगमचिरभाविनमसहमानोऽयमन्तरेवमचिन्तयत—

---

वत्सेत्यादि । स्मरैतत्, स्मरणे तवैव सर्वं ज्ञेयं भविष्यतीति भावः । पुरमतिरुचिरमिति । तत्र गतस्य ते मद्वियोगपीडा विरलीभवेदिति भावः । यूनो योग्यं राज्यं यौवराज्यम् ॥ २१ ॥

एवमित्यादि । अन्तेवासिनः शिष्यान् । 'शयवास—' (पा० सू० ६-३-१८) इत्यलुक् । आश्रवान् प्रोक्तकारिणः ॥ २२ ॥

हे इत्यादि । प्रेम्णः सर्वस्वभूताम् । सर्वस्वं प्रधानभूतो विषयः । अनेन सादरं नेयेति द्योत्यते । कथमियं भवद्भिरहं सहेदित्यत्राह—पत्युः पुरमिति उरुविभवैः पूरितामिति च ॥ २३ ॥

तदन्वित्यादि । तरणिसारथिः अरुणः । जनितः कोकमिथुनसङ्क्रन्दस्य नाशो यया तस्याः । सङ्क्रन्दनाशायां पूर्वस्यां दिशि । आप्लवनं स्नानम् । प्राभातिकः प्रभातभवः । अध्यात्मादित्वात् ठक् ॥

प्रत्यासन्नं दुहितृविरहं ध्यायतः साम्प्रतं मे
निर्विण्णस्याप्यलमयमहो! दुर्निवारो विकारः ।
पीडामेतां किमुत कथये रागभाजां जनानां
धिक् संसारः परमगहनो हन्त! सर्वंकषोऽयम् ॥ २४ ॥

शकुन्तला तु निर्वर्तितनिखिलमाङ्गलिकविधाना मङ्गलालङ्कारसमलङ्कृताङ्गी पलिक्नीभिः पतिवत्नीभिर्ऋषिपत्नीभिः प्रयत्नविधृतबाष्पप्रसराभिर्विहितविविधाशीर्वचना प्रोद्भिन्नयौवनेन तेनार्भकेण साकम् उपगम्य सांसारिकाधिविधुवनधुरीणधिषणमपि निजवियोगजङ्घन्यमानमन्युवेगाक्रान्तान्तरङ्गतया निरन्तरमिति चिन्तनैकनिरतं पितरं प्रदक्षिणीकृत्य पादयोः प्राणंसीत् ॥

अनन्तरं पदान्ते प्रणमन्तीं सतनयामेनामुत्थाप्योत्तमाङ्गे समाघ्राय अयमभिमताभिराशीर्भिरभिनन्दन्निदमभिदधाति स्म ॥

वत्से! शुभंयुः समयोऽधुना ते प्रस्थानयोग्यः समुपस्थितोऽयम् ।
तत् त्वं सपुत्रा वनदैवतानि नत्वा प्रतिष्ठस्व समीहिताय ॥ २५ ॥

---

प्रत्यासन्नमित्यादि । निर्विण्णस्यापि इहामुष्मिन् फलभोगविरक्तस्यापि । अत्र संसारशब्देन तत्कारणभूता विषयाः कथ्यन्ते ॥ २४ ॥

शकुन्तलेत्यादि । माङ्गलिकं मङ्गलप्रयोजनम् । 'प्रयोजनम्' (पा० सू० ५-१-१०९) इति ठक् । पलिक्नीभिः स्थविराभिः । पतिवत्नीभिः सभर्तृकाभिः । 'अन्तर्वत्पतिवतोर्नुक्' (पा० सू० ४-१-३२) इति नुक् । ङीप् । 'पतिवत्नी सभर्तृका' इत्यमरः । सांसारिकः संसारभवः । विधुवनं विधूननम् । जङ्घन्यमानः अत्यर्थं जायमानः । 'नुगतः—' (पा० सू० ७-४-८५) इति नुक् । प्राणंसीत् प्रणता ॥

अनन्तरमित्यादि । "आशीरुरगदंष्ट्रायां शुभवाक्याभिलाषयोः" इति वैजयन्ती । अभिदधाति स्म अभिहितवान् ॥

वत्से! इत्यादि । शुभंयुः शुभान्वितः । 'अहंशुभमोर्युस्' (पा० सू० ५-२-१४०) इति युस् । समीहिताय समीहितं लब्धुं, 'क्रियार्थ—' (पा० सू० २-३-१४) इति चतुर्थी ॥ २५ ॥

श्रुत्वा तां गिरमेतमद्य पितरं हाहा! मयैवान्वहं
प्रेम्णा पोषितमेणपोतकगणं बालांश्च सालानिमान् ।
हित्वा यामि कथं न यामि च कथं कान्तस्य तस्यान्तिकं
सोत्कण्ठेति विचिन्त्य सा स्थितवती डोलायमानाशया ॥ २६ ॥

तदनु मुनिवर्योऽयम् अतिपर्याकुलमवतिष्ठमानामेनामवलोक्य निजहृदयसमेधमानमपारमाधिभारं कथमपि वारयन्निदमुदीरयामास ॥

मामा कातर्यमेवं कलयतु भवती चिन्तनेनान्तरङ्गे
मुग्धे! साध्वीजनाः किं स्वगृहत इह नो यान्ति कान्तोपकण्ठम् ।
कालोऽयं नातियायाद् गमनसमुचितो यातुमुद्यच्छतां तत्
सद्यो मोमुद्यमाना निखिलशुभविधौ सौमनस्यं हि शस्यम् ॥ २७ ॥

किञ्च त्वमेत्य कमितुर्गृहमस्य गृह्यैः
कृत्यैरुपर्युपरि सम्पतितैर्हृतात्मा ।
पुत्रं च पुत्रि! युवराजमवेक्षमाणा
शोकं विहास्यसि मदीयवियोगजातम् ॥ २८ ॥

इति सान्त्ववचसा समाश्वासितां प्रयाणोन्मुखीमेनां प्रति पतिव्रतावृत्तिमनुपक्षीणादरम् अयमुपादिक्षत् ॥

---

श्रुत्वेत्यादि । दोलायमानः दोलावदाचरन् ॥ २६ ॥

तदन्वित्यादि । वारयन् निरुन्धन् । 'वृञ् आवरणे' चौरादिकः ॥

मामेत्यादि । कलयतु बध्नातु । उद्यच्छतां उद्यमनं कुरुताम् । 'समुदाङ्भ्यः–' (पा०सू० १-३-७५) इति तङ् । सौमनस्यं सुमनस्कता ॥२७॥

किञ्चेत्यादि । गृह्यैः गृहोचितैः । 'तत्र साधुः' (पा० सू० ४-४-९८) इति यत् । साधुरिति प्रवीणो योग्यो वा । विहास्यसि त्यक्ष्यसि ॥ २८ ॥

इतीत्यादि । उपादिक्षत् उपदिष्टवान् । 'शल इगुपधाद्–' (पा०सू० ३-१-४५) इति क्सः ॥

वत्से! मत्सरमुत्सृजान्यमहिषीवर्गेषु नैसर्गिकं
बन्धून् प्रीणय बन्धुराङ्गि! नितरामाराधयाद्धा गुरून् ।
दैवात् त्वद्दयिते निकारनिरतेऽपीर्ष्या न जुष्या त्वया
नारीत्थं पतिमन्दिरे बहुमता स्यादन्यथा चान्यथा ॥ २९ ॥

एवमुपदिश्य काश्यपेन मुहुराश्लिष्य सौवस्तिकेन सौववस्त्याय गन्तुमियं तनयेन साकमन्वमन्यत ॥

ततश्च,

तत्तादृशानि परिपोषणलालनादी-
न्यत्यादरेण विहितान्यनुचिन्तयन्ती ।
खिन्ना तदा द्रुतपरिद्रुतमानसा सा
तन्वी वियोगविधुरं पितरं न्यगादीत् ॥ ३० ॥

साक्षाद् ब्रह्मैकभूते गुणविततिमतिक्रम्य रंरम्यमाणे
हाहा! मोहान्मया यत् त्वयि विहितमहो! बाल्यचापल्यभाजा ।
विश्वं विश्वार्तिहारिन्नपि हितमहितं ते प्रसादाय भूयात्
पादाम्भोजन्मरेणुः परमिह शरणं तात! नान्या गतिर्मे ॥ ३१ ॥

---

वत्से इत्यादि । 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । नैसर्गिकं स्वाभाविकं स्त्रीसामान्यसिद्धम् । बन्धुराङ्गीति । बन्धुसंप्रीणनगुरुशुश्रूषणादौ तवाभिरूप्यमदेन विरोधो मा भूदिति भावः । आराधय पूजय । श्यनि 'राधोऽकर्मकाद् वृद्धावेवे'त्यत्र अयं श्नौ चुरादौ चेत्युक्तम् । चुरादौ न दृष्टश्च । 'आराधय सपत्नीक' इति प्रयोगश्च । ईर्ष्या अक्षमा । जुष्या सेव्या ॥ २९ ॥

एवमित्यादि । सौवस्तिकेन स्वस्तीत्युक्तवता । "तदाहेति माशब्दादिभ्य उपसङ्ख्यानम्" (वा०) इति ठक् । सौववस्त्याय स्वीयं नगरं, 'गत्यर्थ—' (पा० सू० २-३-१२) इति चतुर्थी ॥

ततश्च,

तत्तादृशानीत्यादि । द्रुतं शीघ्रम् । परिद्रुतं समन्ताद् द्रवीभूतम् ॥ ३० ॥

साक्षादित्यादि । ब्रह्मैकभूते, जीवन्मुक्त इति यावत् । बृंहयति व्याप्नोतीति ब्रह्म । "बृंहेर्नलोपश्च" (उ० सू० २७४) इत्यौणादिको मनिन् । अत एव

इति गद्गदया गिरा समस्तमपि लोकं विहस्तयन्ती निखिलमुपलजालमप्यलमार्द्रयन्ती मुहुरपि मुनिसत्तममुत्तालभक्तिभारोत्तरलचित्ता प्रवणतरगात्री प्रणम्य हृद्यैव तानि वनदैवतान्यपि मानयन्ती स्वपदगामिना वालेन परिष्कृतपाश्चात्यभागा गुरुनियोगाचरणपरिकाङ्क्षिभिः पारिकाङ्क्षिभिः समं प्रियमन्दिरं प्रति मन्दंमन्दं प्रतस्थे ॥

तदानीमकृत्रिममैत्रीभरपर्याकुलमखिलमपि तपोधनकुलं स्वस्यैव हस्त्येन कुशेन परिपोषितं हरिणपोतकनिकरं आत्मनैव नीवारादिभिरभिवर्धितं विकिरविसरमपि निजविरहमसहमानमनुयानपरमालोक्याल्पेतरबाष्पोत्पतनोपरुद्धनेत्रतया स्खलितपदविन्यासं वितन्यमानगमनामेनां विलोकयन् करुणातिरेकमसृणीभूतमानसो मुनिपुङ्गवोऽयमनुगम्य पुनरप्येवमभ्यधात् ॥

विचार्य पर्याकुलधैर्यसारे! निरुन्धि निर्यन्त्रणनिर्यदश्रु ।
प्रयाणकाले रुदितं जनानाममङ्गलायेति जगत्प्रसिद्धम् ॥ ३२ ॥

---

गुणवितर्तिं सत्त्वरजस्तमांसि अतिक्रम्य विषयरसविमुखो भूत्वा आत्मन्येव परं रंरम्यमाणे । अत्र क्रियासमभिहारेण सातिशय(त्व?)क्षणिकत्वदुःखमिश्रत्वादिभिः क्षुल्लकं विषयसुखमवधूय ब्रह्मानन्दमनुभवतीति द्योत्यते ॥ ३१ ॥

इतीत्यादि । उत्तालः प्रवृद्धः । प्रवणतरगात्री । "अङ्गगात्रकण्ठेभ्यश्च इति वक्तव्यम्" (वा०) इति ङीष् । भाष्येऽनुक्तमप्येतत् प्रयोगवाहुल्याद् वृत्तिकारेणोक्तमिति हरः । स्वपदं स्वस्थानं, स्वपादं च । बालेन केशेन च ।

तदानीमित्यादि । हस्त्येन हस्तेन दीयमानेन । 'तेन यथा कथा च–' (पा० सू० ५-१-९८) इति यत् । कुशेन दर्भेण, जलेन च । "कुशमप्सु च" इत्यमरः । विकिराः पक्षिणः । "विष्किरः शकुनौ वा" (पा०सू०६-१-१५०) विकिरो वा इति वा सुट् निपात्यते । मसृणीभूतं मृदुभूतम् ।

विचार्येत्यादि । पर्याकुलश्चलितो धैर्यसारो यस्याः सा ॥ ३२ ॥

एवं तातेन तेन प्रणयमसृणया सादरं सान्त्ववाचा
मुग्धा सा बोध्यमानाप्यजनि परिजरीजृम्भदास्रप्रवाहा।
किञ्चाश्रुस्तम्भनातिप्रयसनविसरद्गद्गदारुद्धकण्ठी
प्रेमार्द्रे मित्रवर्गेऽप्यशकदपि तदा हन्त! नामन्त्रणाय॥ ३३॥

आपाद्य तां गदितुमीक्षितुमप्यशक्ता-
मामन्त्रणं तदिह हन्त! यया निरुद्धम्।
सा प्रेमभारजनिताकुलतैव तेषा-
मामन्त्रणं समुदभूत् प्रणयानुरूपम्॥ ३४॥

अनन्तरमियमातपोवनान्तं पुनरप्यनुयान्त्यौ निरन्तरनिस्सृतास्रमुख्यौ सख्यौ गाढमुपगूह्य एवमाचख्यौ—

आ बाल्यतः शयनभोजनमज्जनादौ
नित्यं न पारयति या रहिता युवाभ्याम्।
त्यक्त्वा युवां कठिनधीरिह दूरदूरं
गन्तुं व्यवस्यति बताद्य शकुन्तला सा॥ ३५॥

---

एवमित्यादि। परिजरीजृम्भद् भृशं वर्धमानः। अतिप्रयसनम् अतिप्रयत्नः। 'यसु प्रयत्ने'। गद्गदारुद्धकण्ठी गद्गदेन आरुद्धः कण्ठो यस्याः सा॥ ३३॥

आपाद्येत्यादि। प्रेमभारेण जनिता आकुलतैव। प्रणयसूचकं हि आमन्त्रणं, तदनयैव जातमिति भावः॥ ३४॥

अनन्तरमित्यादि। पुनरपीत्यनेन विरहासहत्वं प्रकाश्यते। उपगूह्य, अत्र ल्यपः बहिरङ्गत्वेऽपि 'अदो जग्धिः—' (पा०सू० २-४-३६) इति ज्ञापकाद् इडागमात् पूर्वं ल्यप्। तेन कित्त्वाद् गुणाभावेन, 'ऊदुपधायाः—' (पा० सू० ६-४-८९) इत्यूत्त्वाभावः। "जग्धौ सिद्धेऽन्तरङ्गत्वात् ति कितीति ल्यबुच्यते। ज्ञापयत्यन्तरङ्गाणां ल्यपा भवति बाधनम्॥" आचख्यौ चक्षिङः ख्याञ्॥

आ बाल्यत इत्यादि। बाल्यादारभ्य। न पारयति समर्था न भवति। 'पार तीर कर्मसमाप्तौ'। व्यवस्यति निश्चिनोति॥ ३५॥

कुतुकविरचितानि प्रत्यहं तानि तानि
प्रणयभरपरीतान्यत्र नो वर्तनानि ।
पतिपुरमतिरम्यं प्राप्य रंरम्यमाणा-
प्यनुदिनमयि सख्यौ! हा कथं विस्मरेयम् ॥ ३६ ॥

बहुभिरिह किमुक्तैरद्य दैवादुपेता
बत! विरहदशेयं तत्किमप्यर्थयेऽहम् ।
प्रणयविवशचित्तां विप्रयुक्तां प्रसङ्गे
स्मरतमयि! मनाङ् मामित्यरोदीत् तदा सा ॥ ३७ ॥

आकर्ण्य करुणं तस्या वचनं प्रणयोचितम् ।
सख्यौ समाख्यतामेनामेधमानाधिभाजने ॥ ३८ ॥

अयि बन्धुजनप्रणयिनि! ज्वलितवियोगशोकपावकातिदीपकैरीदृशैः प्रणयवचनजालैरलमलम् । किं त्वमपारपारावारपरिपतितस्य गलतले विपुलमुपलमर्पयितुमुद्यतासि । नियतमतः परमावामेतदेव परमभिलषावः ॥

स्वजनतनयसंयुतेन पत्या सह नगरे धृतसम्मदं वसन्त्याः ।
श्रुतियुगमयि नौ तवेह वार्तामधुलहरी शिशिरीचरीकरीतु ॥ ३९ ॥

---

कुतुकेत्यादि । प्रत्यहम् अहरहः । तानि तानि अनुभूतचराणि । तत्तदवस्थान्तरेषु स्पष्टान्योन्यप्रेममधुराणि एतादृशानि वर्तनानि ॥ ३६ ॥

बहुभिरित्यादि । अर्थये 'अर्थ याच्ञायाम् ।' अरोदीत् 'रुदिर् अश्रुविमोचने' लङ् । 'रुदश्च पञ्चभ्यः' (पा०सू० ७-३-९८) इतीट् । 'नेटि' (पा०सू०७-२-४) इति किति वृद्धिप्रतिषेधे लुङ् वा ॥ ३७ ॥

आकर्ण्येत्यादि । समाख्यताम् आख्यातवत्यौ । 'अस्यतिवक्ति--' (पा०सू०३-१-५२) इति च्लेरङ् ॥ ३८ ॥

अयीत्यादि । प्रणयसूचकानि वचनानि । तैरलमिति 'वारणार्थयोगे तृतीया वक्तव्ये'ति तृतीया ॥

स्वजनेत्यादि । शिशिरीचरीकरीतु अतितरां शीतलं करोतु । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥" ३९ ॥

एवमुदीर्य विदीर्यमाणहृदयाभ्यां विनिर्यदास्रम् आभ्यां सखीभ्यां मुहुर्मुहुर्गाढगाढमाश्लिष्य कथमपि विसृष्टा पदे पदे तयोरेव दत्तदृष्टिः अतिकृच्छ्रेण गमनोन्मुखी बभूव ॥

यावन्नेत्रमरीचिवीचिविषये सा तावदेते स्थिते
पश्यन्त्यौ तृषितैर्निमेषरहितैर्बाष्पाकुलैरीक्षणैः ।
भूयो भूरितराधिभारविधुरे शून्यायमानं वनं
मन्वाने अपि धैर्यसारमवलम्ब्यावापतुः स्वाश्रमम् ॥ ४० ॥

तस्मै राजवतंसकाय सततं रक्षानिलीनात्मने
दुष्षन्ताय महीभृदेकशरणायैनां वितीर्यात्मजाम् ।
प्रालेयाद्रिरुमां यथा भगवते गङ्गाधरायादरात्
कण्वोऽप्येष कृतार्थतामलमयं नास्थादिह स्वस्थधीः ॥ ४१ ॥

---

एवमित्यादि । पदे पदे तयोरेव दत्तदृष्टिः विवलितमुखी वीक्षमाणेत्यर्थः । गमनोन्मुखी गमनायोन्मुखी ॥

यावदित्यादि । शून्यायमानं शून्यवदाचरत् । प्रियसखीवियोगेन सर्वं विरसमभूदिति भावः ॥ ४० ॥

तस्मा इत्यादि । राजवतंसकाय राजश्रेष्ठाय, चन्द्रशेखराय च । रक्षायां पालने, रक्षया भस्मना च निलीनः । भस्मदिग्धाङ्ग इत्यर्थः । आत्मा मनः, देहश्च । महीभृतां राज्ञाम् एकं शरणं रक्षिता । महीभृत् कैलासः एकं शरणं गृहं यस्य तस्मै । शृणाति रक्षणीयस्यापदं हिनस्तीति शरणं रक्षिता । शीर्यत इति गृहं, 'शॄ हिंसायाम्' । 'कृत्यल्युटः--'(पा०सू०३-३-११३) इति कर्तरि कर्मणि च ल्युट् । अस्थात् स्थितवान् । 'गातिस्था--'(पा०सू०२-४-७७) इति सिचो लुक् । स्वस्थधीः स्वस्था आत्मस्था । अनेन मुनेरपि पूर्वं सांसारिकाधिपीडितत्वं द्योत्यते ॥ ४१ ॥

कण्वेनः प्रहितास्ततो विरहिताः कण्वेन ते तापसा-
स्तामादाय शकुन्तलां सतनयां शान्तान्तरङ्गाः शनैः।
तीर्त्वा काननपत्तनाश्रमधुनीरध्वश्रमध्वंसिनी-
र्भान्तीं भानुसुतासुपर्वसरितोः सङ्गे पुरीं सङ्गताः ॥ ४२ ॥

स्फायत्स्फाटिकसौधशृङ्गनिवहैर्लेलिह्यमानाम्बरां
प्राज्यप्रोन्नतभूरिभास्वरपुरद्वारैः परं भासुराम्।
प्राकारैः परितो वृतां च रुचिराकारैरगारैरपि
प्राणेशस्य कृशोदरी खलु पुरीं वीक्ष्याजरीहृष्यत ॥ ४३ ॥

अनन्तरमनन्तसंसारसागरपारेचराः पापादल्पादप्युपरममाणाः पारिकाङ्क्षिणः विषयवीथीसञ्चरणवञ्चितलोकलोकावलोकजनिताखर्व-निर्वेदेन विध्यनुगतमध्यन्दिनस्नानसमयसमासन्नतया च पुरद्वारासन्ने

---

कण्वेनेत्यादि। कण्वेन पापेन रहिताः। अनेन कण्वनियोगपालतोक्ता। शान्तान्तरङ्गा इति कण्वराहित्ये हेतुः। पत्तनानि नगराणि। धुनीर्नदीः। भानुसुता यमुना। सुपर्वसरिद् गङ्गा ॥ ४२ ॥

स्फायदित्यादि। स्फायन्तः वर्धमानाः। 'स्फायी ओप्यायी वृद्धौ।' स्फायदिति शतृप्रत्ययेन निकटीभावक्रमवशादस्याः पूर्वा अमी सौधशृङ्गाः पुनः पुनर्वर्धन्त इति प्रतीतिरुत्पन्नेति द्योत्यते। स्फाटिकाः स्फटिकविकाराः। लेलिह्यमानम् अतितरां लिह्यमानम्। प्राज्यैः प्रभूतैः। भूरिणा स्वर्णेन भास्वरैः शोभनशीलैश्च पुरद्वारैः, "पुरद्वारन्तु गोपुरम्" इत्यमरः। शकुन्तलेति वक्तव्ये कृशोदरीत्युक्त्या तस्यास्तत्कालजन्यविलासत्वं द्योत्यते। अजरीहृष्यत अत्यर्थं हृष्टाभूत् ॥ ४३ ॥

अनन्तरमित्यादि। उपरममाणाः निवर्तमानाः। 'विभाषाकर्मकात्' (पा० सू० १-३-८५) इति पक्षे रमेस्तङ्। वञ्चितलोकस्य वञ्चितपरलोकस्य लोकस्य जनस्य अवलोकनेन। "मध्यन्दिनं तु मध्याह्न उच्छूरस्तु विकालकः" इति वैजयन्ती। विवशाः व्याकुलाः। सर्वं कषन्ति निघ्नन्तीति सर्वङ्कषाणि।

एवात्मविरहावसन्नामिमाम् अध्वश्रमविवशकुन्तलां शकुन्तलां सन्ताप-सर्वङ्कषैर्भाषितैराश्वास्याश्रमाय रयादयाञ्चक्रिरे ॥

विप्रगणविप्रमुक्ता बाला बभ्राम बिभ्रती बाधाम् ।
आत्मगणविप्रयुक्ता मुग्धा हरिणीव चपलनयनयुगा ॥ ४४ ॥

तदनु पौरवरेषु परिपुरद्वारं परिलसन्तीं सूक्ष्मतरसितक्षौमाम्बरावृततया विमलतरजलोदरप्रतिफलितां विद्युल्लतामिव देद्युत्यमानामतिललितामङ्गवल्लीमावहन्तीं बाहाञ्चलगृहीतमहितबालकां विष्टपत्रयादृष्टसाधिष्ठरूपजुष्टां काम‍पि कमनीं निर्वर्ण्य केयमवर्णनीयलावण्यवेणी वरवर्णिनी सुवर्णमपि दुर्वर्णतां प्रापयन्ती चपलावभासमवभासमाना, भवानीव स्मरवर्धनवामाङ्गसङ्गता, कमलेव कमलविलोचनमनोहरा, वाणीव गौराङ्गविलसिता, रतिरिवाङ्गजयुता । कश्चायं पश्चात्कृताम्भोधि-

---

'सर्वकूल—' (पा०सू० ३-२-४२) इति खश् । अयाञ्चक्रिरे गतवन्तः । लिटि 'दयायासश्च' (पा०सू० ३-१-३७) इत्याम् ॥

विप्रेत्यादि । विप्रमुक्ता त्यक्ता । विप्रयुक्ता विरहिता । चपलेति साधारणः ॥ ४४ ॥

तदन्वित्यादि । पौरवरेषु परिचिन्तयत्सु इति 'यस्य च भावेन—' (पा०सू० २-३-३७) इति सप्तमी । परिपुरद्वारं पुरद्वारे । विभक्त्यर्थेऽव्ययीभावः । देद्युत्यमानां भृशं शोभमानाम् । दिष्टत्रयं कालत्रयम् । विष्टपत्रयं लोकत्रयम् । साधिष्ठमतिशयेन साधु । दुर्वर्णतां रजततां, दुष्टवर्णतां च । चपलावभासं चपल इव रस इव, चपलेव विद्युदिव । "अथ चपलो रसः सूतश्च पारदे" इत्यमरः । स्मरवर्धनस्य शम्भोः । "छेदे वृद्धौ च वर्धनम्" इति वैजयन्ती । वामं सव्यम् । स्मरवर्धनं कामोद्दीपनं च । तद् वामं सुन्दरं च अङ्गं च । कमलविलोचनस्य विष्णोः; कमलसदृशेन विलोचनेन च । गौरः ब्रह्मा तस्याङ्गे । गौरं सितं वा अरुणं च । अङ्गजः कामः, पुत्रश्च । गम्भीरिमा गाम्भीर्यम् । "अविज्ञातेङ्गिताकारो भावो गाम्भीर्यमुच्यते" इति भावप्रकाशः । शतकोटिः

गम्भीरिमा जम्भारातिरिव सम्भृतगुणशतकोटिः, शरजन्मेव सकलविबुधचक्राग्रयायी, तदीयवाह इव परिकलितशिखाकलापः, पशुपतिरिवाधिकविलसदखिलावयवः, दुर्गेव मृगाधिराजविराजमानगतिः, अतिमहितमानोज्ञको राज्ञः परमनुहरमाणः कुमारः। इति कुतुकातिरेकेण परिचिन्तयत्सु सा शकुन्तला समासन्नदयितसमागमसमालोचनसमुद्गतसम्मदातिरेकापि तदीयहृदयानाकलनेन किञ्चिदिवाकुलाशया क्रमेण तालद्वयसीं सप्तसालीमतिक्रम्य ग्रामेयकपौरेयवानेयमुखामेयपौरुषेयेक्षणलक्षलक्ष्भूता मन्दाक्षभरमन्दतरगतिविलासत्रिलक्षीकृतमल्लिकाक्षा मञ्जुतरशिञ्जिमञ्जीरम् अञ्जसा व्रजन्ती तत्तादृशतत्तत्पदार्थसार्थसन्दर्शनेन तत्र पुत्रेण सह चित्रीयते स्म ॥

---

वज्रं, गुणानां शतं कोटयश्च। विबुधचक्रं देवसेना, विद्वत्समूहश्च। तदीयवाहः शिखी। शिखा चूडा। कलापः बर्हं, शिखैव कलापः भूषणं च। अधिका विलसन्तः सर्पा येषु ते अधिकविलसन्तः तादृशा अखिलावयवा यस्य सः, अधिकविलसन्तः अत्यर्थं शोभमानाश्च। मृगाधिराजे सिंहे विराजमाना गतिर्यस्याः, मृगाधिराज इव विराजमानगतिश्च। मानोज्ञकं मनोज्ञत्वं, 'द्वन्द्वमनोज्ञादिभ्यश्च' (पा० सू० ५-१-१३३) इति वुञ्। राज्ञः अनुहरमाणः राज्ञा तुल्य इत्यर्थः। तुल्यार्थयोगात् षष्ठीति केचित्। शेषविवक्षयेति हरः। अनाकलनेन अज्ञानेन। तालद्वयसीं तालप्रमाणां, 'प्रमाणे द्वयसच्--' (पा० सू० ५-२-३७) इति द्वयसच्। 'टिड्ढाणञ्--' (पा० सू० ४-१-१५) इति ङीप्। सप्तानां सालानां प्राकाराणां समाहारः सप्तसाली। 'तद्धितार्थ--' (पा० सू० २-१-५१) इति समासः। बुद्ध्यादिनैकत्र मेलनं समाहारः। ग्रामेयकः ग्रामे भवः। कत्र्यादिभ्यः--' (पा० सू० ४-२-९५) इति ढकञ्। पौरेयवानेयौ भवार्थे 'नद्यादिभ्यो ढक्' (पा० सू० ४-२-९७) इति ढगन्तौ। पौरुषेयं पुरुषसमूहः। 'पुरुषात्--' (वा०) इति समूहार्थे ढ(कृ ? ञ्)। चित्रीयते स्म आश्चर्यमनुभवति स्म॥

पुरुजपुरपुरन्ध्रीनेत्रनीलारविन्दैः
कनकनिकषवर्णा संवृता सा तदानीम् ।
वहलभसलजालैराचिता सञ्चरन्ती
क्षितितलमवतीर्णा कल्पवल्लीव रेजे ॥ ४५ ॥

सा नन्दन्तं सुतमिह महावीरलोकावलोकात्
सानन्दं तं करधृतकरं मन्दमन्दं नयन्ती ।
क्ष्मापं कान्तं चिरविरहितं द्रष्टुमत्युत्सुकात्मा
क्ष्मापङ्कान्तं तदनु च सभाद्वारमागान्मृगाक्षी ॥ ४६ ॥

ततश्च;

पद्मा पद्माक्षवक्षोविहरणनिरता शैलकन्या तु शम्भो-
र्दीव्यत्यङ्के च सव्ये मनसिजदयितालब्धवैधव्यलक्ष्मा ।
सा वाचां देवता वा विधिवदनवने केवलं खेलमाना
केयं लोकाभिरामाकृतिरिति मुदितैः सा समालोकि लोकैः ॥ ४७ ॥

---

पुरुजेत्यादि । पुरुजानां भूयिष्ठानाम् । 'पुरुजं पुरु भूयिष्ठम्' इत्यमरः । निकषः शाणः । 'शाणस्तु निकषः कपः' इत्यमरः । भसलाः भ्रमराः ॥ ४५ ॥

सेत्यादि । महावीरलोकावलोकाद् नन्दन्तमित्यन्वयः । सानन्दमित्युत्तरत्र छेदः । एतन्नयनक्रियाविशेषणम् । क्ष्मापं नृपम् । कान्तं भर्तारम् । क्ष्मायाः क्ष्मावासिजनस्य यत् पङ्कं तस्यान्तं यथार्हं दण्ड्यान् दण्डयन्तमित्यर्थः । अनेन तदुपसर्पणे सामान्यसिद्धा शङ्का व्यज्यते ॥ ४६ ॥

ततश्च ॥

पद्मेत्यादि । दीव्यति शोभते । खेलमाना । 'वेलृचेलृकेलृखेलृक्षेलृ-वेल्ल चलने' इत्यस्मात् परस्मैपदिनः 'ताच्छील्यवयोवचन-' (पा०सू० ३-२-१२९) इति ताच्छील्ये चानश् । क्रीडनशीलेत्यर्थः । वनशब्देन विहारयोग्यत्वं प्रकाश्यते । समालोकि दृष्टा ॥ ४७ ॥

वक्षोदेशे विपुलतरतां तुङ्गतां भङ्गिरङ्गं
नासानाले पृथुभुजयुगे द्राघिमाणं दधानः ।
कोऽयं वीराङ्कुर इह मनः केन रंरम्यते न-
श्चिन्तादोलामिति सुमहतीमारुरोहाथ लोकः ॥ ४८ ॥

स भासमानः सुतरां कुमारः सभाजनार्हो जगतां त्रयाणाम् ।
स भाजनै राजन इत्यकाण्डे सभां प्रपन्नः स्फुटमन्वमायि ॥ ४९ ॥

इति सकलैरपि सकुतुकं विकल्प्यमाना सतनया सा शकुन्तला शनैश्शनैर्विततताभ्यन्तरनिरन्तराधिष्ठितसाधिष्ठजनगरिष्ठमुपतेष्ठीयमानानेकमेदिनीनाथसनाथीकृतं सादरमदः सदः समाससाद ॥

ततस्तदानीम् ;

महान्तं सा भान्तं महति मणिपीठे परिवृतं
महामात्रैः पौरैः क्षितिपनिकरैः क्ष्मासुरवरैः ।
महेलाभिर्हेलाधुतचमरवालाभिरपि तं
महीशं प्रैक्षिष्ट द्युमणिमिव पूर्वाद्रिशिखरे ॥ ५० ॥

---

वक्ष इत्यादि । द्राघिमाणं दीर्घत्वं, पृथ्वादित्वादिमनिच् । 'प्रियस्थिर—' (पा० सू० ६-४-१५७) इति द्राघ्यादेशः । वीराङ्कुर इति महावीरत्वेन परिणंस्यतीति भावः ॥ ४८ ॥

स इत्यादि । भासमानः शोभमानः । सभाजनार्हः पूजनार्हः । राजनः राजपुत्रः । 'राजश्वशुराद्यत्' (पा०सू०४-१-१३७) इत्यत्र 'राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्' (वा०) इत्युक्तत्वात् केवलेऽपत्येऽण् । 'अन्' (पा०सू० ६-४-१६७) इति प्रकृतिभावात् टिलोपाभावः । अकाण्डे काण्डोऽवसरः प्रस्तावः । अन्वमायि अनुमितोऽभूत् ॥ ४९ ॥

इतीत्यादि । उपतेष्ठीयमानाः अत्यर्थमुपस्थानं कुर्वन्तः । 'ष्ठा गतिनिवृत्तौ' यङन्तात् शानच् ॥

ततस्तदानीम् ॥

महान्तमित्यादि । हेलया धुतश्चमरवालो वालव्यजनं याभिः ताः । द्युमणिं सूर्यम् ॥ ५० ॥

ततश्च;

सविनयमुपगम्य सन्नताङ्गी
पतिमभिवन्द्य महीन्द्रवृन्दवन्द्यम् ।
अयि तनय! नमो विधेहि पादे
पितुरिति मन्दमुवाच नन्दनं सा ॥ ५१ ॥

इत्थं मात्रा नियुक्तः स तु सकलजनैरादरादीक्ष्यमाणः
प्रोद्दामानन्यसाधारणमहितमहोव्यज्यमानानुभावः ।
प्राणंसीदस्य पादौ पुरुविनयभरं भ्रंशिताम्भोजडम्भौ
शुम्भत्कुम्भीन्द्रडिम्भप्रतिमगतिरयं कुम्भिनीजम्भहन्तुः ॥ ५२ ॥

ह्रीणा स्थूणामथ मणिमयीं काञ्चिदालम्ब्य कान्तं
पश्यन्ती सा निभृतनिभृतैरीक्षितैरत्र तस्थौ ।
बालोऽप्युद्यत्प्रणयकुतुकस्फारविस्फारिताक्षं
वीक्षंवीक्षं निजपितरमेवास्थया सोऽयमस्थात् ॥ ५३ ॥

---

ततश्च ॥

सविनयमित्यादि । वन्द्यं वन्दितम् । कर्ममात्रे कृत्यः । नमो विधेहि प्रणामं कुरु ॥ ५१ ॥

इत्थमित्यादि । अनुभावः अनभिभवनीयताप्रतिपत्तिहेतुः प्रभावः । कुम्भिनीजम्भहन्तुः महीमहेन्द्रस्य ॥ ५२ ॥

ह्रीणेत्यादि । ह्रीणा लज्जिता । 'नुदविदोन्द--' (पा० सू० ८-२-५६) इति निष्ठातकारस्य वा नत्वम् । स्थूणां, "स्थूणा स्तम्भेऽपि वेश्मनः" इत्यमरः । "स्थूणा सूर्म्यां गृहस्तम्भे" इति वैजयन्ती । कुतुकस्फारेण कुतुकातिशयेन । विस्फारिते वर्धिते । "आयतं विष्फुरत्तारं विष्फारितमुदाहृतम्" इति भावप्रकाशः । वीक्षंवीक्षं पुनःपुनः वीक्ष्य । अस्थात् स्थितवान् ॥ ५३ ॥

सभासमेतं सचिवव्रजोऽग्रे सभासमेतं दशमी समीक्ष्य ।
सुस्मेरतारं भृशविस्मयेन सस्मार तत्स्वामिकिशोररूपम् ॥ ५४ ॥

तदनु मेदिनीपतिः एवमवतिष्ठमानामेनाम् एनं बालकमपि विलोकयन्नन्तरिति चिन्तयामास—

केयं तन्वी प्रणयमधुरस्मेरतारावलोका
लोकालोकप्रमितजगतीदुर्लभोदाररूपा ।
काङ्क्षन्ती किं तनयसहिता मत्समीपं समेता
कस्मादेतद् द्रवति हृदयं हन्त! दारेष्विवास्याम् ॥ ५५ ॥

अयमधिकगभीरो वीरपोतश्च को वा
शिशुरपि वहमानो दृप्तपञ्चास्यलीलाम् ।
त्रिभुवनकमनीयो व्यक्तसाम्राज्यलक्ष्मा
प्रसजति मम कस्माच्चित्तमस्मिन्नकस्मात् ॥ ५६ ॥

---

सभासमित्यादि । एतमिति पूर्वत्र छेदः । दशमं वयोऽस्यास्तीति दशमी । "वर्षीयान् दशमी" इत्यमरः । 'वयसि पूरणात्' (पा० सू० ५-२-१३०) इति इन् । सुस्मेरा अतिप्रसन्ना तारा यत्रेति क्रियाविशेषणम् ॥ ५४ ॥

तदन्वित्यादि । अवतिष्ठमानाम् । 'समवप्र–' (पा० सू० १-३-२२) इत्यात्मनेपदम् ॥

केयमित्यादि । प्रणयेन मधुरस्मेरः तारश्चावलोको यस्याः सा । मधुरेत्यनेन प्रेम्णोऽकृत्रिमत्वं सूचितम् । लोकालोकेन प्रमितायां जगत्यां क्षितौ । किं किं वस्तु काङ्क्षन्ती ॥ ५५ ॥

अयमित्यादि । वहमानः वहनशीलः । 'ताच्छील्यवयोवचन–' (पा० सू० ३-२-१२९) इति चानश् । पञ्चास्यलीलामिति, 'न लोकाव्यय–' (पा० सू० २-३-६९) इति षष्ठीप्रतिषेधाद् द्वितीया । तृनामिति 'लटः शतृ–' (पा० सू० ३-२-१२४) इति तृशब्दादारभ्य तृनो नकारात् प्रत्याहारग्रहणम् । अकस्माद्, 'अकस्मादेकस्मादेकपदे चातर्किते' ॥ ५६ ॥

वालेन तावदमुना पुरुपुण्यपूरः
सत्पुत्रिणामुपरि सम्प्रति वर्तते कः ।
कं वा निकाममभिनन्दति विश्वलोको
लोकाश्च कस्य विरुजा विजरा भवेयुः ॥ ५७ ॥

चिन्तयन्नन्तरेवं स बहुधा वसुधाधिपः ।
निखिलं तन्मुखादेव निर्णिनीषुरभाषत ॥ ५८ ॥

का त्वं कञ्जविलोचने! कुत इह प्राप्तासि ते काङ्क्षितं
विश्वं विश्वविमोहनाङ्गि! वितराम्यद्यैव तद् गद्यताम् ।
शङ्कां मास्म कृथा वृथा वरतनु! प्राणार्थिनोऽप्यर्थिनो
याताः पौरवभूभृतां न सन्निधाद् व्यर्थीभवत्प्रार्थनाः ॥ ५९॥

अनन्तरं शकुन्तला कदाचिदप्यचिन्तितामेतादृशीमशनिपातोपमामेतां निजदयितवाणीमाकर्ण्य विदीर्णहृदया तत्क्षणमुच्चैरुच्चरन्तं शोकपावकं विवेकोदकेन कनयन्ती सगद्गदमिदमगादीत्—

---

वालेनेत्यादि । पुरुपुण्यपूरः, पुण्यपूराणां बाहुल्ये एवैतत्पितृत्वं लभ्यत इति भावः । विरुजाः नीरोगाः । विजराः अनश्वराः ॥ ५७ ॥

चिन्तयन्नित्यादि । निर्णिनीषुः निश्चेतुमिच्छुः ॥ ५८ ॥

का त्वमित्यादि । कुतः कस्माद्देशात्, केन हेतुना च । अर्थिनः याचकाः । 'अर्थाचासन्निहिते' (वा०) इति इनिः । असन्निहितोऽर्थोऽस्येति अर्थी । तनूशब्दस्य सम्बुद्धौ 'अम्बार्थ–' (पा० सू० ७-३-१०७) इति ह्रस्वे वरतनु! इति ॥ ५९ ॥

अनन्तरमित्यादि । उच्चरन्तं उद्गच्छन्तम् । अकर्मकत्वात् तङभावः । कनयन्ती अल्पं कुर्वन्ती । 'युवाल्पयोः–' (पा० सू० ५-३-६४) इति कनादेशः ॥

क्षोणीपते! बत न चेतयसे किमेतत्
कण्वं विलोकितुमनाः पितरं मदीयम् ।
द्रागाश्रमं श्रमहरं विजने विविश्य
विश्वास्य चाटुवचनैरुपयंस्यसे माम् ॥ ६० ॥

अपिच नृप! विवाहप्रक्रमे प्रत्यजानाः
स्वयमिह मम सूनोर्यौवराज्याभिषेकम् ।
ऋतवचनरतास्मै तत्सुतायौरसाय
द्रुतमयि भवतैतद्दयतामद्य तावत् ॥ ६१ ॥

अनन्तरं वसुन्धरापतिः शकुन्तलावचनप्रत्यभिज्ञासमुदीयमान-खर्वेतरनिर्वेदानुतापकरुणाकलुषीकृतमतिरेवमचिन्तयत्—हन्तायमुदन्तो मया मन्दधिया दुर्विसरोऽपि विस्मृत एव । तदधुना किन्नु खलु विधातव्यम् । अखिललोकलोभनीयायामस्यां स्वेच्छया स्वीकृतायां

---

क्षोणीत्यादि । त्वं कण्वं मदीयं पितरं विलोकयितुं आश्रमं विविश्य प्रविश्य चाटुवचनैः विश्वास्य विजने मामुपयंस्यसे उदूढवानसि । एतद् न चेतयसे न जानासि किम् । 'अभिज्ञावचने लृट्' (पा० सू० ३-२-११२) इत्यभिज्ञा-वचन उपपदे भूते लृट् । अभिज्ञा स्मृतिः ॥ ६० ॥

अपिचेत्यादि । प्रत्यजानाः प्रतिज्ञां कृतवानसि । औरसाय स्वसुताय । अत्रात्मार्थः उरश्शब्दः । 'उरसोऽण् च' (पा० सू० ४-४-९४) इत्यण् । संज्ञाधिकारादभिधेयनियमः । उरसा निर्मितं सुखमित्यादि न भवति । एतदिति यौवराज्यम् । सर्वनाम्नानुसन्धानं वृत्तिच्छन्नस्येति वामनः । दयतां 'दद दाने' कर्मणि लोट् । अद्य तावद् अद्यैव ॥ ६१ ॥

अनन्तरमित्यादि । प्रत्यभिज्ञा सैवेयमिति मतिः । संस्कारसम्प्रयोगाभ्यां जायमानं ज्ञानं प्रत्यभिज्ञा । यथा स एवायं घट इति । तया समुदीयमानाभिः । हन्तेत्यादि । दुर्विसरः विसर्तुमशक्यः । 'ईषद्दुस्सुषु—'(पा०सू० ३-३-१२६) इति खल् । उरसिकृत्य निश्चित्येत्यर्थः । 'अनत्याधान—' (पा० सू० १-४-७५)

कोऽपि लोकापवादो नियतमुपनमेत्; प्रतिकूलभाषितैः प्रख्यापितायां तु पवित्रतरचरित्रामनाथामेतां प्रति देवतानामखिलशङ्कापङ्कविध्वंसनः कोऽपि प्रसादो नूनमुदियात्; तदा तावदेनां सकलजनानुमोदितः स्वीकरिष्यामीत्युरसिकृत्येदमुदाजहार ॥

सञ्ज्ञाने विजने त्वयेह विपिनान्ते सङ्गतेनाद्य नो
जीवन् विस्मरति स्वयंकृतमहो को नाम लोके पुमान् ।
अन्यस्याहमनन्यजन्मविशिखश्रेणीविदीर्णाशयां
हन्त स्वैरचरीं वरीतुमबलां नो पौरवः पारये ॥ ६२ ॥

नारी परकरस्पृष्टा सत्प्रवेकेन केन वा ।
शुना लीढाहुतिरिव लोके परिजिघृक्ष्यते ॥ ६३ ॥

अनन्तरं शकुन्तला बहलबाष्पोद्गमेनापि सन्तापानलमव्यभिचारमनुमापयन्ती साभ्यर्थनमेवमभ्यभाषत—

---

इति गतित्वात् 'कुगति--' (पा० सू० २-२-१८) इति समासः । 'समासेऽनञ्पूर्वे–' (पा० सू० ७-१-३७) इति ल्यप् ॥

**सञ्ज्ञान** इत्यादि । सङ्गतेन सङ्गतम् । 'संज्ञः–' (पा० सू० २-३-२२) इति कर्मणि तृतीया । नो सञ्ज्ञाने न प्र(त्य? ति)जानामि । अत्र प्रत्यभिज्ञार्थे इति भट्टिः । त्वया नः सङ्गतेन सञ्ज्ञान इत्यपि स्फुरति । स्वयंकृतं आत्मना कृतम् । 'स्वयं क्तेन' (पा० सू० २-१-२५) इति समासः । वरीतुं, 'वृतो वा' (पा० सू० ७-२-३८) इति दीर्घः । अन्यस्येति । "अनायुष्यं परं नृणामगम्यागमनं स्मृतम् । परलोके च भयदं तस्मात् तत् परिवर्जयेत् ॥" इति **मानसोल्लासे** । पारये शक्नोमि ॥ ६२ ॥

**नारीत्यादि** । केन वा सत्प्रवेकेन साधुश्रेष्ठेन । परिजिघृक्ष्यते परिग्रहीतुमिष्यते ॥ ६३ ॥

**अनन्तरमित्यादि** । बाष्पोद्गमेन बाष्पोऽश्रु, अम्बुधूमश्च । "बाष्पोऽश्रुण्यम्बुधूमे च" इति **निघण्टुः** । शास्त्रेषु सर्वेषु बाष्पस्याग्न्यनुमान-

ऋतोदितामृतीयस्व ससुतां मामुपागताम् ।
जगत्यां किं पतिर्जायां जहाति जगतीपते! ॥ ६४ ॥

मान्य! मन्येऽस्मि पूर्वस्मिञ्जनुष्यकृषि किल्बिषम् ।
मातापितृभ्यां कौमारे सन्त्यक्ताद्य त्वयापि यत् ॥ ६५ ॥

हताशा दिष्टदोषेण कष्टं मादृङ् न विष्टपे ।
जीवन्त्येव विनष्टास्मि जीवितेश! दयां कुरु ॥ ६६ ॥

अयि ते दयितेह दीनबन्धो! हृदये हा सदये भृशातुरायाः ।
अपि मे वचनं विलोलपाथोलिपिरीतिं किमुरीचरीकरीति ॥ ६७ ॥

---

साधनत्वं व्यवच्छिद्यते । अत्र तु तेनाव्यभिचारेण सन्तापा(द्य? न्य)नुमानमिति विचित्रमेतदिति व्यज्यते ॥

ऋतेत्यादि । ऋतोदितां ऋतं सत्यं उदितं वाग् यस्यास्ताम् । ऋतीयस्व दयां कुरु । 'ऋतेरीयङ्' (पा० सू० ३-१-२९) इति ईयङ् । किंपतिरित्येकपदत्वे कुत्सितपतिरित्यपि स्फुरति । तदा 'किं क्षेपे' (पा० सू० २-१-६४) इति समासः ॥ ६४ ॥

मान्येत्यादि । जनुषि जन्मनि । अकृषि कृतवत्यस्मि । मातापितृभ्यां, 'आनङृतो द्वन्द्वे' (पा० सू० ६-३-२५) इत्यानङ् । कौमारे शैशवे । 'हायनान्त' (पा० सू० ५-१-१३०) इति भावेऽण् ॥ ६५ ॥

हतेत्यादि । मादृङ् मत्सदृशी । 'त्यदादिषु दृशः—' (पा० सू० ३-२-६०) इति क्विन् । 'आ सर्वनाम्नः' (पा० सू० ६-३-९१) इत्याकारः । 'जीवितेशः प्रियतमे' इत्यमरः ॥ ६६ ॥

अयीत्यादि । पाथोलिपिरीतिं जललिपिसादृश्यम् । उरीचरीकरीति अतिमात्रमङ्गीकरोति । 'ऊरी चेति मुरारिपञ्चिके'ति सर्वस्वे ॥ ६७ ॥

गोत्रापतेऽहं भवतोज्झिता सती
गोत्रातले यामि च यत्रकुत्रचित् ।
सर्वेश सौविं परिपाहि बालकं
को न प्रतीयात् प्रतिबिम्बदर्शने ॥ ६८ ॥

तदीयां शारदामेनां दीनदीनां निशम्य सः ।
अत्यार्द्रहृदयोऽप्यूचे वाचमत्यन्तदुःश्रवाम् ॥ ६९ ॥

अयि कपटहृदये! न चैवं दीनदीनैरुदितैरहं शक्यश्चालयितुं, योषितां मृषोद्यचातुरीधुरीणता वरीवर्तीति जगत्त्रयवर्तिनः कस्य हृदयं न संवदति । तस्मादमुष्मै मनोरथाय निवापाम्बु जवादेव वितीर्यताम् ॥

प्रेष्ठोपलब्ध्यै ननु तिष्ठसे मे सन्मार्गगृह्येऽलमगृह्यके त्वम् ।
साधिष्ठगृह्येण मयानते स्याद् यथाप्रगृह्यस्य पुरन्ध्रि! सन्धिः ॥७०॥

---

गोत्रेत्यादि । सौविं स्वस्यापत्यं, 'अत–' (पा०सू० ४-१-९५) इतीञ् । 'द्वारादीनां च' (पा० सू० ७-३-४) इत्यैच् । न प्रतीयात् न विश्वसेत् ॥ ६८॥

तदीयामित्यादि । दीनदीनां अत्यर्थदीनाम् । अत्यन्तदुःश्रवां पूर्वस्मादप्यतिदुःश्रवाम् ॥ ६९ ॥

अयीत्यादि । चलयितुं चलेः कम्पने मित्त्वं विहितम् । अन्यथाकरणे त्वमित्त्वमिति । मनश्चलयितुमित्यादौ मित्त्वाभावात् । चलशब्दात् 'तत्करोति' (वा०) इति णिचि तुमुन् । मृषोद्यं मृषावादः । "शयितव्यं तु शयनं स्थातव्यं स्थितिरेव च । एवं ल्युडादितुल्येऽपि भावे कृत्यान् हरोऽब्रवीत् ॥" इति सर्वस्वे । वरीवर्ति भृशं वर्तते । निवापाम्बु निवापजलम् ॥

प्रेष्ठेत्यादि । मे तिष्ठसे आत्मानं प्रकाश्य तिष्ठसि । 'श्लाघह्नुङ्–' (पा० सू० १-४-३४) इति संप्रदानसंज्ञा । 'प्रकाशनस्थेयाख्ययोश्च' (पा० सू० १-३-२३) इति तङ् । सन्मार्गगृह्या सन्मार्गबाह्या । अगृह्यके स्वतन्त्रे । साधिष्ठगृह्येण साधिष्ठपक्ष्येण । साधिष्ठा अतिशयेन साधवः । पक्ष्यः पक्षे भवः । प्रगृह्यस्य प्रगृह्यसंज्ञकस्य पदस्य यथा कदाचिदपि सन्धिर्न स्यात् तद्वदित्यर्थः ।

स्थानेऽस्मिन् स्थीयतां कामं गम्यतां वा दुरीप्सिते! ।
पुत्रेणानेन सत्रैव यत्र कुत्रापि साम्प्रतम् ॥ ७१ ॥

एवङ्कारं निकारव्यतिकरविषमां भारतीं भूपतेस्ता-
माकर्ण्योदीर्णवेगप्रसृमरपुरुसंरम्भसंरक्तनेत्रा ।
प्लुष्यन्तीव क्षणात् तं स्फुरदधरपुटा तिर्यगुद्वीक्षमाणा
सैषा वाचं बभाषे परुषमिति तपोजालजाज्वल्यमाना ॥ ७२ ॥

ननु हिमांशुवंशकलङ्कभूत! विश्वस्तजनवञ्चनविध्वस्तशङ्क! दुरध्वकाङ्क्ष! नगरध्वाङ्क्ष! निखिलजनाधिनेता खलु भवान् प्राक् तातवसतौ निभृतमापत्य मामधिकरागार्जितामुद्यदादरमुद्वहन् सदसि पुनर्न मयैतदनुष्ठितमिति नष्टशङ्कमैकागारिकवदनृतैकाभिधायकः स्वैर-

---

मया आनते अप्रगृह्यस्येति च छेदे सन्धिः स्यादिति च स्फुरति । आनते आश्रिते इति यावत् । अत्र सन्मार्गगृह्येत्यादिषु चतुर्षु 'पदास्वैरिबाह्यापक्ष्येषु च' (पा० सू० ३-१-११९) इति ग्रहेः क्यप् । बाह्येति स्त्रीलिङ्गनिर्देशादन्यत्र न ॥ ७० ॥

स्थान इत्यादि । दुरीप्सिते! दुष्टे । त्वं सत्रा सह ॥ ७१ ॥

एवमित्यादि । एवंकारं एवमित्येवार्थः । 'अन्यथैवं–' (पा० सू० ३-४-२७) इति णमुल् । प्लुष्यन्ती दहन्ती । 'प्लुष दाहे' । जाज्वल्यमाना भृशं ज्वलन्ती ॥ ७२ ॥

नन्वित्यादि । नन्वित्यामन्त्रणे । दुरध्वं दुष्टमध्वानं काङ्क्षतीति दुरध्वकाङ्क्षः । नगरध्वाङ्क्षः तथा धृष्ट इत्यर्थः । 'पात्रेसमितादयश्च' (पा० सू० २-१-४८) इति समासः । निखिलजनानामधिनेता खलु भवान्, आधिनेता इत्यपि स्फुरति । तातवसतौ तातस्याश्रमे । आर्जितां स्वीकृताम् । ऐकागारिकश्चोरः । 'ऐकागारिकट् चौरे' (पा० सू० ५-१-११३) इति निपातः । ऐकागारिकपक्षे निखिलजनानामाधिनेता । तातेति सम्बोधनम् । वसतौ रात्रौ । अधिकरागेण आर्जितां सञ्चितां मां लक्ष्मीं संपदमिति यावत् ।

मास्ते बत! आस्तेयमदोत्कर्षापास्तसत्समाजसमाचारः किमसंशय-मुपांशुविहितामिमामवस्थां ह्य(स्य? स्यां) विधास्यस एवेति मन्ये । मनीषिमानिन्! मनीषितसम्पदियं न सम्पत्स्यते ॥

सूर्याचन्द्रमसौ तथा हुतवहो वायुश्च सन्ध्याद्वयी
पाथश्च क्षणदाहनी च हृदयं द्यावापृथिव्यौ पुनः ।
धर्मश्चापि स धर्मराज इह तज्जानन्ति यज्जन्तवः
सन्तन्वन्ति सदेति सद्भिरुदितां वाणीं न जानासि किम् ॥ ७३ ॥

कष्टं निकारकरणान्मयि धर्मपत्न्यां
दुष्टाशयात्मनि भवान् परिवादजातम् ।
ऊरीकृताग्र्यचरितोऽपि चरीकरीति
हारी निजोपरि करीव रजांसि राजन्! ॥ ७४ ॥

---

आस्तेयो धनभावः । अस्तीति धनार्थमव्ययमिति रामः । तत्र भवः । 'दृति कुक्षि–' (पा० सू० ४-२-५६) इति ढञ् । उपांशु रहः । विधास्यसे विधास्ये इति मन्ये मन्यसे । 'प्रहासे च मन्योपपदे–' (पा० सू० १-४-१०६) इति पुरुषव्यत्ययः । मनीषिमानिन् आत्मानं मनीषिणं मन्यमान! । 'आत्ममाने खश्च' (पा० सू० ३-२-८३) इति णिनिः ॥

सूर्येत्यादि । सूर्यः चन्द्रमाश्च सूर्याचन्द्रमसौ । 'देवताद्वन्द्वे च' (पा० सू० ६-३-२६) इत्यानङ् । पाथः जलम् । यद्यपि पापाचारस्य भवत इह जन्मनि पूर्वाचरितपुण्यकर्मबलीयस्तया सुखानुभव एव न दुःखानुभवः तथापि जन्मान्तरे तदनुभवोऽवश्यं भविष्यतीति भावः । 'अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभमि'त्युक्तत्वात् ॥ ७३ ॥

कष्टमित्यादि । चरीकरीति अतितरां पौनःपुन्येन वा करोति । 'तस्या-त्मनोऽर्धं पत्न्यास्त' इत्युक्तत्वात् ॥ ७४ ॥

असत्यवद्ये सततोद्यता ये समुद्यतावद्यगणेन पूर्णाः ।
सद्यः समासाद्य निशान्तमन्ते कार्तान्तमार्ता ननु वर्तितारः ॥ ७५ ॥

इत्थंकारमुपालब्धस्तया संरब्धचेतसा ।
तरसा रभसान्धत्वं फणन्निव बभाण सः ॥ ७६ ॥

दुष्टां द्रष्टुं सहे न त्वां शिष्टोऽहं कष्टचेष्टिते! ।
जुष्टां निकृष्टैर्याहि त्वं काष्ठां निष्ठुरभाषिणि! ॥ ७७ ॥

अनन्तरमरुन्तुदतदीयशारदान्तरशरसन्तानान्तरितकर्णान्तराला शकुन्तला निजान्तरमान्तं महान्तममर्षबर्हिषं तत्क्षणमीक्षणशोणिम-मिषेणोद्गिरन्ती गरलकरालां गिरमराणीत् ॥

भो भो! धर्माध्वविध्वंसन! कपटमते! काश्यपस्याश्रमान्ते
कर्तुं प्राग्यौवराज्ये मम तनयमहो साधु सन्धां विधेहि ।
गान्धर्वाख्यं विवाहं नुहि परिणय मां प्रेषणं सङ्गिरस्व
प्रेष्याणां स्थापयास्मानुटज इति भवान् नाकरोत्तत्र किंकिम् ॥ ७८ ॥

---

असत्येत्यादि । असत्योक्तिरेवासत्यवद्यम् । समुद्यता सम्यगुद्गच्छता । कार्तान्तं कृतान्तसम्बन्धि । निशान्तं सदनम् । वर्तितारः अचिराद्वर्तिष्यन्ति । लुटा क्षणादायुःक्षयोऽपि भवतीति द्योत्यते । "प्रायश्चित्तमकुर्वाणाः पापे हि निरता जनाः । अपश्चात्तापिनः कष्टान्नरकान् यान्ति दारुणान् ॥" इति याज्ञवल्क्यः ॥ ७५ ॥

इत्थमित्यादि । इत्थंकारं इत्थमित्येवार्थः । 'अन्यथैवं--' (पा० सू० ३-४-२७) इति णमुल् । फणन्निव प्राप्नुवन्निव । बभाण उक्तवान् ॥ ७६ ॥

दुष्टामित्यादि । निकृष्टैः हीनैः । काष्ठां दिशम् ॥ ७७ ॥

अनन्तरमित्यादि । शारदान्तरं वचनविशेषः स एव शरसन्तानः । अमान्तं, 'मा माने' मानमिहान्तर्भावः । अमर्षबर्हिषं रोषाग्निम् । अराणीद् उक्तवती ॥

भो इत्यादि । सन्धां प्रतिज्ञाम् । विधेहि विहितवान् । नुहि स्तुत-वान् । परिणय परिणीतवान् । सङ्गिरस्व प्रतिज्ञातवान् । 'समः प्रतिज्ञाने'

हाहन्त! रागान्धमतिर्वनान्ते रहः स्वयं मामुपयम्य पूर्वम् ।
मदान्धधीः संप्रति हा! जहासि तत् ते विदध्यान्नृप! शर्म धर्मः ॥७९॥

एवमभिधाय हृदन्तरनिरन्तरसन्तायमानसन्तापशान्तिसन्तितंसया इव नितान्तनिस्सृतास्रधारासन्तानैः स्तनान्तरमासिञ्चन्ती सा शकुन्तला निजपुत्रैकमित्रा ततः प्रातिष्ठत ॥

परिणयविधिशङ्कायानभेरीनिनादो
विश्वसुनितनूजामङ्गलानन्दनान्दी ।
भरतचरितनाट्यप्रक्रियासूत्रधारो
द्रुतमजनि तदानीं काचिदाकाशवाणी ॥ ८० ॥

---

(पा० सू० १-३-५२) इति तङ् । स्थापय स्थापितवान् । विधेहीत्यादिषु पञ्चसु 'समुच्चयेऽन्यतरस्याम्' (पा० सू० ३-४-३) इति लोट् । लोटो हिस्वौ समुच्चये । 'सामान्यवचनस्य' (पा० सू० ३-४-५) इति सामान्यवचनस्य करोतेरनुप्रयोगः ॥ ७८ ॥

हाहन्तेत्यादि । धर्मः शर्म विदध्यात् । अत्र विपरीतलक्षणया धर्ममतिक्रम्य वर्तमानस्य तव तदुचितं फलं धर्म एव विदध्यादित्यर्थः ॥ ७९ ॥

एवमित्यादि । सन्तितंसया कर्तुमिच्छया । तनोतेः सनन्ताद् 'अ प्रत्ययात्' (पा० सू० ३-३-१०२) इति भावे अकारप्रत्ययः । 'तनोतेर्विभाषा' (पा० सू० ६-४-१७) इति झलादौ सनि दीर्घाभावपक्षे रूपम् । 'सनीवन्त—' (पा० सू० ७-२-४९) इत्यत्र 'तनोतेरुपसंख्यानम्' (वा०) इति इड्विकल्पात् सनो झलादित्वम् । प्रातिष्ठत प्रतस्थे ॥

परिणयविधीत्यादि । परिणयविधिशङ्काया यानार्थं कृतः भेरीनिनादः । नान्दी मङ्गलवाद्यम् ॥ ८० ॥

भो भो दुष्यन्त राजन्! निखिलकुलवधूमौलिमालायमानां
विद्ध्येनां सत्यवद्यामनितरशरणां तद् गृहाण स्वपत्नीम् ।
पुत्रं चैनं भर द्रागयमिह भरताख्यो भरेत्यस्मदुक्त्या
भूयात् किञ्चास्य पूर्वे ननु पुनरपरेऽप्येतदाख्यां लभेरन् ॥ ८१ ॥

अभिधायेति विबुधा विविधान् वसुधातले ।
अस्तोककुसुमस्तोमांस्ततस्तरुः स्वस्तरूद्भवान् ॥ ८२ ॥

हन्त चित्रमिदं मन्ये यदत्र सुमनोगणाः ।
प्राप्नुवन् मेदुरामोदाः कर्तृतां कर्मतामपि ॥ ८३ ॥

अनन्तरमामोदरसधोरणीं गगनवाणीमामोदरसधारिणीं कुसुमवेणीमपि समुदीयमानमोदविस्मयसमाकुलमाकलय्य जयजयवचनाभिनन्दिषु वन्दिषु अतिमात्रकृतार्थतापात्रेषु महामात्रेषु अन्तरिक्षवचनमन्त्रपरान्तरेण हन्त दूरतरमुत्सारितेयं शङ्कापिशाचिकेति विगतातङ्कमवस्थितेषु पुरोहितेषु परमहर्षिषु महर्षिषु विकचवदनशतपत्रेषु मित्रेषु परिगृह्यतां परिगृह्यतामिति ब्रुवाणेषु भूसुरगणेषु यथाभिलषितोदितदैवतानुमतिसमुपनतसम्मदरससंफुल्लहृदयाम्भोरुहोऽयमुडुपतिकुलापीडः

---

भो इत्यादि । अनितरशरणां इतररक्षितृरहिताम् । एतदाख्यां, भरता इति व्यपदेष्टव्या भवन्तीत्यर्थः ॥ ८१ ॥

अभिधायेत्यादि । अस्तोककुसुमस्तोमान् बहून् पुष्पोत्करान् । वसुधातले सर्वतस्तस्तरुः आस्तीर्णवन्तः ॥ ८२ ॥

हन्तेत्यादि । सुमनसो देवाः, पुष्पाणि च । मेदुरामोदा इति साधारणः ॥ ८३ ॥

अनन्तरमित्यादि । धोरणीवेण्यौ प्रवाहार्थौ । अतिमात्रकृतार्थतापात्रेषु समस्तकार्याधिकृतानामपि तेषां तस्या राज्ञश्च वचसोऽत्यन्तविरोधाद् इतिकर्तव्यतामूढशङ्कानां कृतार्थता जातेत्यर्थः । महामात्रेषु प्रधानामात्येषु अन्तरिक्षवचनमाकाशवाणी तदेव मन्त्रवरान्तरं मन्त्रश्रेष्ठविशेषः । शङ्कैव पिशाचिका ।

पीठोत्थायमुपगम्यातिपुषितरुषितरूषितपरुषभाषिताकर्णनपरिम्लानवदनारविन्दं जननीमेवानुव्रजन्तमङ्गजं तमालिङ्ग्य नयनोदरनिष्यन्दमानाभिरश्रुधाराभिधानाभिर्निजहृदयोज्जृम्भमाणोद्दामसम्मदामृतरसधोरणीभिरभिषिक्ते मूर्धनि कौतुकाक्रान्तहृदयमाघ्राय निजप्रत्यादेशजनितशोकरोषकलुषीकृतहृदयामात्मदयितां वदनेन्दुकन्दलितमन्दहसितामृतबिन्दुभिस्तदीयतापभारं निरस्यन् व्याजरहितां वाचं व्याजहार ॥

मामा प्रेयसि! कातरा भव जनैरज्ञातमत्सङ्गमां
त्वां साध्वीमपि देवतानिगदितैः प्रात्याय्य लोकत्रयीम् ।
स्वीकर्तुं नियतं मयैवमुदितं मा स्मान्यथा मन्यथाः
स्वल्पोऽप्येष तनोत्यनल्पमसुखं शङ्काकलङ्को नृणाम् ॥ ८४ ॥

अयि! निखिलपतिव्रताकुलवतंसायमाने! वितायमानरुषाकषायितनेत्ररक्तोत्पलमयकर्णपूरकम्रकर्णजाहे! जाहेतु कोपशोकौ । प्रणयिन्या त्वया निगदितानि तानि वचनानि मम प्रमोदनान्येव, मदुक्तानि दुरुक्तानि च भवती पतिदेवता मङ्क्षु चङ्क्षमीतु सामोदमिति सामोदितान्युपन्यस्य तस्या मकरीदृशोऽयममरीसदृशो मन्युममरीमृजीत् ॥

---

पीठोत्थायं पीठात् सिंहासनात् त्वरयोत्थाय। 'अपादाने–' (पा०सू०३-४-५२) इति णमुल् । परीप्सा त्वरा । अनुव्रजन्तं अनुगच्छन्तम् । अङ्गजं पुत्रं, 'वज व्रज गतौ' ॥

मामेत्यादि । 'माङि लुङ्' (पा० सू० ३-३-१७५) इत्युक्तत्वादत्र माशब्द एव न माङ् । प्रत्याय्य विश्वास्य । अमन्यथा इति 'स्मोत्तरे लङ् च' (पा० सू० ३-३-१७६) इति लङ् ॥ ८४ ॥

अयीत्यादि । कम्रकर्णजाहे मनोहरकर्णमूले । 'तस्य पाकमूले–' (पा० सू० ५-२-२४) इति जाहच् । जाहेतु अत्यर्थं त्यजतु । 'ओहाक् त्यागे' यङ्लुकि लोट् । मङ्क्षु शीघ्रम् । चङ्क्षमीतु भृशं क्षमताम् । सामोदितानि सामवचनानि । मकरी शफरीव दृग् यस्याः तस्याः । अमरीमृजीद् अत्यर्थं निःशेषं शोधितवान् । 'मृजू शुद्धौ' । यङ्लुगन्ताल्लुङ् । अत्र ईटि 'नाभ्य-

तदनु सानुरोधमवरोधमेनामानीय मन्देतरमन्दाक्षनन्नम्यमान-वदनेन्दुं नानन्द्यमानहृदयारविन्दामखिलगुणगणगरिष्ठां महिष्ठमहिषीपदे वरिष्ठमतिरतिष्ठिपत् ॥

उत्खातस्वनिखातशङ्कुमधिकं विख्यातसाध्वीगुणां
तां मासप्रमितेन्दुवत् कृशतरामापाण्डुगण्डस्थलीम् ।
पृथ्वीशोऽधिवसन् पुरीं सविभवैः ऋद्धामयोध्यां परैः
प्राग् बर्हिर्मुखशोधितां रघुपतिः सीतामिवारीरमत् ॥ ८५ ॥

सौहार्देन सुहृज्जनान् परिजनानुद्वेलवात्सल्यतो
भक्त्या सा परिचर्यया गुरुजनान् दानेन दीनान् जनान् ।
पत्यर्थं धृतजीवना गुणगणैरत्यर्थमेतादृशै-
र्निश्शेषं जगदप्यमूमुदद्मुं कान्तं निजं किं पुनः ॥ ८६ ॥

---

स्तस्य–' (पा० सू० ७-३-८७) इति 'मृजेर्वृद्धिः' (पा० सू० ७-२-११४) इत्यस्य प्रतिषेधः ॥

तदन्वित्यादि । महिष्ठा अतिशयेन महती । अग्रमहिषीपद इत्यर्थः । अतिष्ठिपत् स्थापितवान् । च्लेश्चङ् ॥

उत्खातेत्यादि । उत्खात उद्धृतः । स्वनिखातः आत्मना निखातः । शङ्कुः शल्यं । "वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः । मासं प्रमातुमारब्धः मासप्रमितः । प्रतिपच्चन्द्र इत्यर्थः । 'कालाः' (पा० सू० २-१-२८) इति तत्पुरुषः । विभवैः प्रशस्तपदार्थैः ऋद्धाम् । परैः शत्रुभिः । अयोध्यां पुरीम् अधिवसन् । अन्यत्र परैः श्रेष्ठैः विभवैः ऋद्धां अयोध्यां पुरीमधिवसन् । बर्हिर्मुखैः देवैः शोधिताम् । तद्वचनादेव शुद्धेर्निश्चितत्वात् तेषां प्रयोजकम् । अन्यत्र बर्हिरग्निरेव मुखमभ्युपायः तेन शोधितां, अग्निप्रवेशात् संशोधिता-मित्यर्थः । "मुखं तु वदने मुख्ये ताम्रद्वाराभ्युपाययोः" इति यादवः । अरीरमत् रमयति स ॥ ८५ ॥

सौहार्देनेत्यादि । सुहृद्भावेन । 'हृद्भग–' (पा० सू० ७-३-१९) इत्युभयपदवृद्धिः । भक्त्या परिचर्यया भक्तिसहितया परिचर्ययेत्यर्थः । पत्यर्थं

विद्योतमानसद्रूपां काश्यपीं वरवर्णिनीम् ।
बुभुजे भूभुजामीशो महितामधिकश्रियम् ॥ ८७ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
षष्ठः स्तबकः ॥

---

धृतजीवनेति प्राणधारणस्यापि तदर्थत्वोक्त्या तदभ्युदयतत्प्रीत्यर्थतयैव तस्याः सर्वाः प्रवृत्तय इति किमुच्यत इति भावः । अमूमुदत् मोदितवती ॥ ८६ ॥

विद्योतमानेत्यादि । प्रशस्ताः सन्तः सद्रूपाः । 'प्रशंसायां रूपप्' (पा० सू० ५-३-६६) प्रवृत्तिनिमित्तस्य प्रशंसायां प्रत्ययः । रूपं सौन्दर्यं च, स्वभावो वा । काश्यपीं भूमिं, शकुन्तलां च । वरवर्णिनीं वरा वर्णा यस्यां तां, स्त्रीषूत्तमां च । बुभुजे अनुभूतवान् । महितां चतुरुदधिपर्यन्तामिति यावत् । पूजितां च । श्रीः समृद्धिः, शोभा च ॥ ८७ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये षष्ठः स्तबकः ।



अथ भूपतिरद्भुतापदानं गुणसंरञ्जितसर्वजीवलोकम् ।
युवराजपदे युवानमेनं भरतं मोदभराञ्चितोऽभ्यषिञ्चत् ॥ १ ॥

राज्यभारं स भरते मोदभारं प्रजासु च ।
आधाय वसुधानाथो मुमुदे शरदां शतम् ॥ २ ॥

इत्थमस्मिन् पृथ्वीपतौ बहुतिथमनेहसं भूरिभूलोकसुखमनुभूय भूयो भूयस्तरं भोगमनुभोक्तुकाम इव प्रकृष्टादृष्टलभ्यं त्रिविष्टपं प्रविष्टे कष्टतरशोकाविष्टधीरपि सूरिवर्यो धैर्यसारमवष्टम्भयन्नयं भरतः पुष्टादरं निखिलानि निवापकृत्यानि निरवर्तयत् ॥

भद्रास्या भरतं प्रमोदभरतो भद्रासनाध्यासितं
भेरीभूरिरवे जगन्मदकरे रोदोन्तरं रुन्धति ।
गाङ्गैर्दाविकसारवैरपि ततो गाङ्गेयकुम्भोद्धृतै-
रम्भोभिस्सचिवादृताश्शुभदिने तं चाभ्यषिञ्चन् द्विजाः ॥ ३ ॥

---

अथ भरतचरितं वर्णयति—अथेत्यादि । मोदभरेण अञ्चितः प्राप्तः । 'अञ्चु गतौ याचने चे'त्यत्र 'अचि गता'वित्यन्य इति । अत्र इदित्पाठे अञ्चितमिति क्ङितिभेदः । तेन गतावञ्चितमिति भवति । अभ्यषिञ्चद् अभिषिक्तवान् । अत्र बहूनां विशेषणानां साभिप्रायत्वात् परिकरोऽलङ्कारः ॥ १ ॥

राज्येत्यादि । राज्यभाराधानमोदभाराधानयोर्हेतुहेतुमद्भावः ॥ २ ॥

इत्थमित्यादि । बहुतिथं बहूनां पूरणम् । अनेहसं कालम् । यागादिजन्यापूर्वापरपर्यायात्मगतस्संस्कारविशेषोऽदृष्टः । अवष्टम्भयन् अवष्टम्भं कुर्वन् । निरवर्तयत् निर्वर्तयति स्म ॥

भद्रास्या इत्यादि । प्रसन्नमुखा, अत्र हेतुः प्रमोदभरत इति । भद्रासनं सिंहासनम् । अध्यासितमिति द्विजानां प्रयोजकत्वोक्त्या तदुचितविधिनोपवेशितमिति प्रकाश्यते । गाङ्गैर्दाविकसारवैरित्यभिषेकोचितानामन्यतीर्थजलानामप्युपलक्षणम् । गाङ्गैः गङ्गासम्बन्धिभिः । दाविकैः देविका नाम काचिन्नदी

भूभारं बिभराम्बभूव भरतो भूरिश्रिया पूरितं
सद्रत्नैरपि भूषितं स्ववलयं यद्वद् भुजातल्लजे ।
प्राजायन्त तदा प्रजा गतरुजा व्याजत्यजो वाणिजा
गोत्रा सस्यकसूरलं पुरुपयश्शस्यातिभद्रान्विता ॥ ४ ॥

उपलीयन् मणिगणानुलपीयंश्च काञ्चनम् ।
विपुलीभूतकारुण्यादुपलीनमना ददौ ॥ ५ ॥

---

तस्यां भवैः । *देविकाशिंशपेत्यादेरचो वृद्धिप्रसङ्गे आकारादेशः । सारवैः सरयूभवैः । 'दाण्डिनायन–' (पा०सू० ६-४-१७४) इत्यत्र सरयू इत्येतस्याणि परतो अयूशब्दलोपो निपात्यते §। सचिवाद्दताः बहुमानपूर्वकं तत्तदुचितसम्भार-सम्भरणादिकमत्रादरः ॥ ३ ॥

भूभारमित्यादि । बिभराम्बभूव बभार । 'भीह्री–' (पा०सू०३-१-३९) इति आम् श्लुवद्भावश्च । भूरिश्रिया अतिशयितया समृद्ध्या, स्वर्णशोभया च । सद्रत्नैः साधुवर्यैः, प्रशस्तै रत्नैश्च । भुजातल्लजे प्रशस्तायां भुजायां, 'प्रशंसा-वचनैश्च–' (पा०सू०२-१-६६) इति समासः । व्याजं त्यजन्तीति व्याजत्यजः, क्विप् । वणिज एव वाणिजाः । प्रज्ञादित्वात् स्वार्थेऽण् । गोत्रा भूः, गोततिश्च । 'खलगोरथात्–' (पा० सू० ४-२-५०) 'इनित्रकट्यचश्च' (पा० सू० ४-२-५१) इति त्रः । सस्यकानि सस्यानि सूत इति सस्यकसूः, जन्मन्येव सर्वगुणोत्कृष्टान् प्रसूत इति च । पयो जलं, क्षीरं च । अतिभद्रेण शोभनेन भद्रेण । अतिभद्राः शोभना वृषाः । 'उक्षा भद्रो बलीवर्द' इत्यमरः । तैरन्विता च । ‡ स्वती पूजायाम् इति समासः ॥ ४ ॥

उपलीयन्नित्यादि । उपलीयन् उपलमिवाचरन् । उलपीन् उलप-मिवाचरन् । 'उपमानादाचारे' (पा० सू० ३-१-१०) इति क्यच् । उपलीन-मनाः आर्द्रमानसः ॥ ५ ॥

---

* 'देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्' (पा० सू० ७-३-१)

§ सरयू इत्यस्याणि परे य्वादेर्वा निपात्यते इति तत्त्वबोधिन्याम् ।

‡ 'कुगतिप्रादयः' (पा० सू० २-२-१८) इति सूत्रेणेत्यर्थः ।

तत्स्थयोर्वृद्धिगुणयोर्व्यवस्थापनकर्मणि ।
दाक्षी दाक्षीसुतस्यापि नैव जायेत जातुचित् ॥ ६ ॥

स सपक्षान् विपक्षांश्च प्रथमं स्वश्रितानपि ।
भूयोऽपि स्वश्रितान् दानैरतानीत् किमिदं बत! ॥ ७ ॥

यद्दोस्तम्भप्रशुम्भत्पृथुतरपरिघक्रूरघातप्रभिन्न-
प्रत्यर्थीभेन्द्रकुम्भस्थलविलगलिता मौक्तिकाली विरेजे ।
जन्यक्षोणीषु रागोदयविवशजयश्रीनिरूढोपगूढ-
प्रोद्यत्सम्मर्दसद्यस्त्रुटितपरिपतत्तारहारावलीव ॥ ८ ॥

स खलु निखिलप्रत्यर्थिपृथ्वीपतिपुरुमदस्तम्भिपृथुभुजास्तम्भ-संभृतसप्ताम्भोधिसप्तकीशुम्भिकुम्भिनीमण्डलः मण्डलाग्रपरिखण्ड्यमान-परराजमण्डलः परराजमण्डलपरमशोभापखण्डकवदनपुण्डरीकः पुण्ड-रीकवरवीर्यापहारिमहितवाहाबलः महितवाहाबलसदासन्नः सदासन्ना-शनसमाहितमानसः समाहितमानसदनः माहितमानसदनभूतः नभूत-

---

तत्स्थयोरित्यादि । वृद्धिगुणव्यवस्थापकस्यापि दाक्षीसुतस्य पाणिनेः । दाक्षी वैदग्ध्यम् ॥ ६ ॥

स इत्यादि । स्वश्रितान् सौशील्यादिगुणानुरञ्जिततयैव स्वमात्मानं श्रितान्, सुतरामश्रितांश्च । दानैः हिरण्यादिप्रदानैः, खण्डनैश्च । स्वश्रितान् स्वं धनं श्रितान्, स्वर्गमाश्रितांश्च ॥ ७ ॥

यदित्यादि । प्रशुम्भन् शोभमानः । परिघः 'परिघः परिघातेऽस्त्रेऽपी''-त्यमरः । निरूढम् आपादितम् । उपगूढमाश्लेषः ॥ ८ ॥

स इत्यादि । सप्तकी रशना । सप्ताम्भोधिसप्तकीत्युपमा । कुम्भिनी भूः । मण्डलाग्रः करवालः । परे शत्रवः । परस्योत्कृष्टस्य, परिपूर्णस्येत्यर्थः । राज-मण्डलस्य चन्द्रमण्डलस्य । पुण्डरीकं कमलं, पुण्डरीको व्याघ्रः । "व्याघ्रेऽपि पुण्डरीको ना" इत्यमरः । वाहाबलं भुजबलम् । महितैर्वाहैः वाहनैः । अव-लसत् शोभमानम् आसन्नं समीपं यस्य । सदा असन्नाशने दुष्टनिग्रहे सम्यगाहितं कृतम् । समाहितानां सर्वशत्रूणां मानोत्सादयिता । मया श्रिया

शोकविविधमित्रोपलसमानः मित्रोपलसमानमानसविमर्शितविविधदर्शनसन्दोहः दर्शनसन्दोहलोपगतसुन्दरीजनधैर्योच्चयपाटच्चरः, पाटच्चरशकलाच्छादकयाचकजनेच्छाधिकविश्राणितकच्चरेतरसचेलमुखविविधपदार्थसार्थः, दिनकर इव समग्रदिशादीयमानोदग्रकरः, कविरिव सकलसुमनोगणानन्दितश्लोकः, स्मर इव सकलजनसमाधिहाहिताधिकार्यपि अहिताधिकारी, धनद इव पुण्यजनवर्धनोऽपि पापजनवर्धनः, वासव इव बलाश्रयोऽप्यबलाश्रयः, रक्तमित्रमण्डलतया पूर्वगोत्रोल्लसितोऽप्यपूर्वगोत्रोल्लसितः, प्रथमोदाहरणं प्रथमानमानभाजां, आपणो गुणमणिगणानां, चरमसीमा व्यवसायितायाः, घोरदावो वैरिजनदावानां, लीलारामो रमायाः, प्रभातसमयः पामरजनतारजन्याः, महाप्रवाहः

---

आहितस्य मानस्य सदनभूतः । नभूतशोकैः अनुद्भूतशोकैः विविधैर्मित्रैः उपलसमानः । चानश् । मित्रोपलः स्फटिकमणिः । "स्फटिकः सूर्यकान्तः स्यादर्कश्च दहनोपलः" इत्यभिधानरत्नमाला । विमर्शितः विपूर्वान्मृशतेर्घञि विमर्शः, ततः 'तत्करोति' इति णिचि कर्मणि क्तः । दर्शनानि शास्त्राणि । सन्दोहलम् इच्छा । पाटच्चरः चोरः । "पटच्चरं जीर्णवस्त्रम्" इत्यमरः । तत्सम्बन्धि पाटच्चरम् । "कच्चरं मलदूषितम्" इत्यमरः । दिशासु, दिग्भ्यश्च दीयमानाः, आदीयमानाश्च करा रश्मयः, बलयश्च । कवते तात्पर्येण वर्णयतीति कविः काव्यकृत् । 'कवृ वर्णने', वर्णनं वर्ण इत्युक्तं तद्वृत्तौ । शुक्रश्च । सुमनोगणो विद्वत्समूहः, देवसमूहश्च । आनन्दितः अनन्दितश्च । श्लोकः पद्यं, कीर्तिश्च । "कीर्तिःश्लोकयशोऽभिख्यासमाख्यास्तुल्यलक्षणा" इत्यभिधानरत्नमाला । समाधिहा समाधिभङ्गकृत् । सर्वेषां मनःपीडापहश्च । हिताः पथ्यवादिनः, अधिकारिणो यस्य, अहितानामाधिकारी च । धनं दयते रक्षतीति धनदः । कुबेर इव पुण्यजनवर्धनकरोऽपि 'यक्षसन्तौ पुण्यजनौ', पापजनवर्धनः दुष्टानां छेदकृत् । बलं निहतवान् । अबलाश्रयः अबलानां दुर्बलानामाश्रयभूतः । रक्तमित्रमण्डलं सूर्यमण्डलं यत्र पूर्वगोत्रे सरक्तमित्रमण्डलः, तस्य भावः रक्तमित्रमण्डलता तया हेतुना, रक्तं आत्मन्यनुरागयुक्तं मित्रमण्डलं बन्धुसमूहो

करुणातरङ्गिण्याः, मूलनिलयो निखिलधर्मसूक्ष्माणां, सङ्केतभूः सकलनीतिसाराणाम्, अमृतशलाकिका सकललोकलोचनानां, प्रत्यापत्तिरनङ्गदेवस्य, अम्भोनिधानं सम्पदापगानां, सुखासिकास्थानं सौभाग्यलक्ष्म्याः, चिन्तामणिगुणनिका विविधदुर्विधजनानां, विश्रमशाला विश्वमङ्गलानां, आकरः सूक्तिरत्ननिकराणां, मूलकन्दः कीर्तिवल्लीमतल्लीनां, निकषोपलो निखिलकविवचनकनकसूत्राणां, प्रभवभूमिरखिलमर्यादानां, मरन्दसन्दोहः सकलाङ्गनानयनभृङ्गगणानां, प्रावृडागमः प्रतीपभूपकीर्तिहंसीनां, संवननमन्त्रदेवता समस्तभुवनवास्तव्यानां, अननुवर्णनीयाद्भुतापदानगणोत्पद्यमाननिरवद्यमहिमा भुजगेश्वरशोभापश्यतोहरेण यशोभरेण विश्वगर्भमदभ्रम् अवभ्राजत् ॥

---

यस्य राज्ञः । पूर्वगोत्र उदयगिरिः तद्वदुल्लसितः । अपूर्वगोत्रया आत्मनैव जित्वा लब्धया भूम्या इति विरोधपरिहारः । चरमसीमा पर्यन्तभूः । "दवदावौ वनारण्यवह्नी" इत्यमरः । प्रत्यापत्तिः दग्धस्य पुनर्जन्म । अम्भोनिधानं समुद्रः । चिन्तामणिः रत्नविशेषः तस्य गुणनिका । 'गुणनिका गुणना आम्रेडनं समूह इति यावत्' इति लक्ष्मीधराख्यायां सौन्दर्यलहरीव्याख्यायाम् । दुर्विधाः दरिद्राः । भृङ्गाणां गणाः भृङ्गसमूहाः । शोभायाः पश्यतोहरः । "पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः । "वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासङ्ख्यमलुग्वक्तव्यः" (वा०) इत्यलुक् ।

"षष्ठ्या अलुगिहाक्रोशे स्याद्देवानांप्रियस्तथा ।
वाचोयुक्तिर्दिशोदण्डः पश्यतोहर इत्यपि ॥
तथामुष्यायणादौ स्याच्छुनश्शेपादयोऽपि च ।"

इति लघुवृत्तिः । अवभ्राजत् शोभयति स । "भ्राजभास—' (पा० सू० ५-४-३) इति णौ चङ्युपधाया ह्रस्वविकल्पः ॥

कथ्यन्ते कथमस्य विक्रमगुणा विश्वेऽपि विश्वोत्तरा
रक्षाव्याप्तिविलोपशङ्कितधियेवानेन यन्मानिना।
स्वर्णाद्रिः परभूपकीर्तिचपलैर्दुर्वर्णितो निर्मल-
स्त्रैलोक्यप्रथितप्रतापशिखिना तूर्णं स्ववर्णीकृतः ॥ ९ ॥

तदनु मनुजसत्तमः सप्तसमुद्रमुद्रितधरित्रीतलपरिलौकितधात्री-परित्रायकान् अनायासमाजौ विजित्य सञ्चितेन तत्प्रतापसञ्चयेनेव नितरामुपर्युपरि निचितेन कनकभारनिचयेन भरतो भारतं समावृत-सुमेरुधरमिलावृतमिव विततान ॥

अक्षीणद्रविणं घृणापरिगतात्मानं प्रमोदाकुलैः
सर्वैः पुण्यजनैश्च वीतविनयैः सम्भाव्यमानं सदा।
अश्रान्तं च नराधिरोहणपरं स्वान्ते शिवं सन्ततं
तन्वानं च पुरा समस्तजनता पौलस्त्ययत्येव तम् ॥ १० ॥

---

कथ्यन्त इत्यादि। विक्रमप्रधाना गुणा विक्रमगुणाः। शाक-पार्थिवादि। व्याप्तिविलोपः अव्याप्तिः मानिनेत्युत्प्रेक्षाया निमित्तम्। अनेन परभूपानां कीर्तिरूपैश्चपलैः पारतैः अस्थिरत्वे न क्वचिदवस्थातुमर्हतीति चपलैः, दुर्वर्णितः रजतीकृतः स्वर्णाद्रिः प्रतापशिखिना पुनस्तूर्णं स्ववर्णीकृतः आत्मीय-वर्णतां नीतः। यत् तस्मात् कथं कथ्यन्त इति सम्बन्धः। पारतरससिक्तं हि सुवर्णं रजतं भवति। अग्निसंयोगात् पुनः स्वर्णमेव भवतीत्यनुभवः ॥ ९ ॥

तदन्वित्यादि। धरित्रीतलपरिलौकितान् धरित्रीतलं प्राप्तान्। धात्री-परित्रायकान् राज्ञः। भारतं भरतखण्डम्। समावृतसुमेरुधरं महामेरुसहितं इलावृतं जम्बूद्वीपमध्यखण्डम् ॥

अक्षीणेत्यादि। समस्तजनता तं पौलस्त्ययति पुरा पौलस्त्य इत्याचचक्षे। 'तत्करोति तदाचष्टे' (वा०) इति णिजन्तात् पौलस्त्यशब्दात् 'पुरि लुङ् चास्मे' (पा० सू० ३-२-१२२) इति भूते लट्। पौलस्त्यो वैश्रवणः, रावणश्च। द्रविणं धनं, बलं च। "द्रविणं तु बलं धनम्" इत्यमरः। घृणापरिगत आत्मा देहो यस्य तम्। घृणा जुगुप्सा। धनदस्य वैरूप्यं प्रसिद्धम्। घृणया कृपया

अथैकदा यज्ञभुजः स यज्ञैराराधयिष्यन् वसुधासुधांशुः ।
मातामहं मन्त्रविदां वरिष्ठं निमन्त्रयामास दुरन्तधामा ॥ ११ ॥

स त्रायमाणमवनीवलयं निरस्त-
सत्रायमाणमथ शिष्यगणैरनेकैः ।
सत्रायताखिलनृपोत्करमुत्कचेताः
सत्राय माननिधिमाप तपोनिधिस्तम् ॥ १२ ॥

इष्टापादन एवामुं दीक्षितं काश्यपो नृपम् ।
पुनरप्यतनोत् क्षिप्रमिष्टापादनदीक्षितम् ॥ १३ ॥

ततः स खलु काश्यपीसुतः काश्यपीपतिः काश्यपोपदिष्ट-विशिष्टविधानक्रमेण गोविततामिधानेन सहस्रपद्मपरिमितवरेण्यहिरण्य-

---

अपरिगतः, परिगतश्च आत्मा मनो यस्य । "जुगुप्साकरुणे घृणे" इत्यमरः । पुण्यजना यक्षा राक्षसाः सन्तश्च । वीतो विशेषेण इतो विगतश्च । अश्रान्तम् अनवरतम् । नराधिरोहणपरं नरवाहनमित्यर्थः । अविरतं नराणामाधिरोहण-तत्परं च । रोहणमुत्पादनं नराधिरोहणानां परं शत्रुं च । स्वान्ते मनसि शिवं तन्वानं भगवन्तं शम्भुमेव ध्यायन्तं, स्वान्ते अशिवममङ्गलमेव ध्यायन्तं, शिवं मङ्गलं लोकहितमेव चिन्तयन्तं च ॥ १० ॥

अथेत्यादि । मातामहं कण्वम् । निमन्त्रयामास आजुहाव । दुरन्तधामा अनन्ततेजाः ॥ ११ ॥

स इत्यादि । अवनीवलयं त्रायमाणं रक्षन्तम् । निरस्ताः सत्रायमाणा दुष्टा येन तम् । सत्रायमाणो दुष्टपर्यायः । अथ शिष्यगणैः सत्रा सह । आयतः विरमितः अखिलनृपोत्करो येन हेतुना तम् । सत्राय यज्ञाय ॥ १२ ॥

इष्टेत्यादि । इष्टापादने सर्वेषामभीष्टदाने । दीक्षितं संजातदीक्षं, सततोद्युक्तमित्यर्थः । अमुं पुनरपि इष्टस्य यज्ञस्यापादने दीक्षितं यज्ञाधिकारिण-मतनोत् ॥ १३ ॥

तत इत्यादि । काश्यपीसुतः शकुन्तलासुतः । काश्यपीपतिः राजा । गोविततामिधानेन, गोविततो नामाश्वमेधविशेषः । सहस्रपद्मपरिमितं वरेण्यं

दक्षिणेन वाजिमेधविशेषेण पुनरनुयमुनमनुसरस्वत्यनुसुरस्रवन्ति च विरचितासु विशालासु भूरिशालासु शालासु शतेन त्रिंशता चतुश्शतेन च विश्वोत्तरैरश्वमेधाध्वरैश्चाक्षामान्नदानमक्षीणदक्षिणमपि पुष्टाङ्गमयष्ट ॥

एतेष्वव्याहतेषु क्रतुषु बत! शतव्यामनाहास्सहस्र-
व्यामायामा हि यूपाः कृतकुतुकभरा जातरूपैकरूपाः।
सान्द्रामोदेन सान्द्रैरपि सकलसुरैरुच्छ्रिताः कृच्छ्रतो यत्
तत्ताद्दक्षानुभावः कथमिव स नृपो वर्ण्यते पुण्यराशिः ॥ १४ ॥

---

हिरण्यं दक्षिणा यस्य। पद्मं सङ्ख्याविशेषः। तथोक्तं प्रतापमार्ताण्डेन—

"शतं विद्वद्भिराख्यातं दशभिर्गुणिता दश।
सहस्रं स्याद्दशशती सहस्राणि दशायुतम् ॥
दशायुतानि प्रयुतं लक्षं लक्ष्मादि तत्स्मृतम्।
दशलक्षाणि नियुतं कोटिः स्याद् दशभिश्च तैः ॥
अर्बुदं दश कोट्यः स्युः पद्मं दशभिरर्बु(दः? दैः)।
खर्वं तु दशभिः पद्मैः समुद्रं दशभिश्च तैः।
समुद्रैर्दशभिर्मध्यं परार्धं दशभिश्च तैः।"

इति। अनुयमुनं यमुनासमीपे। अनुसरस्वति सरस्वतीसमीपे। अनुसुरस्रवन्ति सुरस्रवन्ती गङ्गा, तस्याः समीपे। 'अनुर्यत्समया—' (पा० सू० २-१-१५) इत्यव्ययीभावः। यत्समया यस्य समीपवाची तेन समस्यत इत्यर्थः। शाल्यन्ते श्लाघ्यन्त इति शालाः। भूरिणा सुवर्णेन शालाः भूरिशालाः। 'अकर्तरि च कारके—' (पा० सू० ३-३-१९) इति कर्मणि घञ्। 'शाडृ श्लाघायाम्'। 'डलयोरभेद इति काश्यप' इति माधवः। शतेनेत्यादि यथासङ्ख्यम् अनुयमुन-मित्यादिभिः सम्बध्यते। अक्षीणदक्षिणं दक्षते वर्धते फलमनयेति दक्षिणा। 'द्रुदक्षिभ्यामिनन्' (उ० सू० २१८) इत्यौणादिक इनन्। अयष्ट इष्टवान्। देवतोद्देशेन स्वद्रव्यत्यागो यागः ॥

एतेष्वित्यादि। शतव्यामो नाहः परिणाहो येषाम्। "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्" इत्यमरः। आयामः दैर्घ्यम्। जातरूपैकरूपाः स्वर्णमया इत्यर्थः। उच्छ्रिताः ऊर्ध्वीकृताः। तत्ताद्दक्षः तत्ताद्दृशः ॥ १४ ॥

स पुनरनुदिनमखिलभूतप्रीतिविधित्सया जिघत्सया घृतस्यया पयस्स्यया दध्यस्यया मध्वस्यया रजतीयया रत्नीयया कनककाम्यया वसनकाम्यया च निखिलनीवृद्भ्योऽभ्यागतेभ्यो वसुधासुधाशनेभ्योऽन्येभ्योऽपि यस्मैकस्मैचन स्पृहयालुभ्य आपतयालुभ्य उत्पनीपद्यमानदरिद्रतोद्रेकेभ्योऽवनीपकेभ्यो विश्वम्भराधीश्वरो विश्वकामानविश्रमेण व्यशिश्राणत् ॥

दारास्तस्यात्युदाराः पृथगथ जनयाञ्चक्रिरे दारकौघान्
दूरापेतानुभावान् मलिनतनुधियो रूपयन् नानुरूपान् ।
एतानेतद्वितानप्रचुरबलविनिर्यापितान् स्वानिवासौ
पापौघान् मोघकामो लघु निखिलजगन्माननीयो व्यमानीत् ॥१५॥

---

स पुनरित्यादि । विधित्सया विधातुमिच्छया । जिघत्सया अत्तुमिच्छया, सन् । घृतस्यया पयस्स्यया घृततृष्णातिरेकेण । 'अश्वक्षीरवृष—' (पा० सू० ७-१-५१) इत्यत्र वृत्तिः—'अपरे पुनराहुः सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्य' इति । तृष्णातिरेको लालसा । दध्यस्यया मध्वस्यया । आत्मनो दधीच्छया । 'अपर आह सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्य' इति च वृत्तिः । रजतीयया रत्नीयया आत्मनो रजतेच्छया । 'सुप आत्मनः—' (पा० सू० ३-१-८) इति क्यच् । कनककाम्यया वसनकाम्यया आत्मनः कनकेच्छया । 'काम्यच्च' (पा० सू० ३-१-९) इति काम्यच् । नीवृतो जनपदाः । यस्मै कस्मैचन वस्तुन इति शेषः । स्पृहयालुभ्यः स्पृहाशीलेभ्यः । 'स्पृहेरीप्सितः' (पा० सू० १-४-३६) इति संप्रदानसंज्ञा । 'स्पृहिगृहि—' (पा० सू० ३-२-१५८) इत्यालुच् । आपतयालुभ्यः आगमनशीलेभ्यः । अत्रापि पूर्वेणालुच् । उत्पनीपद्यमानः अत्यर्थमुत्पद्यमानः । वनीपकाः याचनकाः व्यशिश्राणत् दत्तवान् । "काण्यादीनामुपसङ्ख्यानम्" इति वा उपधाह्रस्वः ॥

दारा इत्यादि । मलिनतनुधियः । "शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा । ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः" ॥ इत्युक्तानां गुणानामभावो मलिनधीत्वम् । रूपयन् पश्यन् । नानुरूपान् अननुरूपान् । वितानो यज्ञः । व्यमानीद् विमानितवान्, त्यक्तवानित्यर्थः ॥ १५ ॥

ततश्च,

मरुत्स्तोमेन मरुतो भरतो भरितादरम् ।
सदात्मजानां जननमिष्टवानयमिष्टवान् ॥ १६ ॥

अस्मिन्ननेहसि महौजसो दिवौकसां गुरोर्गुरोरग्रजन्मनः सकलाग्रजन्मनामग्रेसरस्य मुनेरखिलभुवनकथ्यमानकीर्तेरुचथ्यस्य ममता नाम दयिता महितरूपेण गर्विणी गुर्विणीभावमभावयत ॥

अन्तर्वत्नीं गुरोः पत्नीं स्वपत्नीमिव तां गुरुः ।
अचीकमत चेतो हि भिद्यते महतामपि ॥ १७ ॥

ममतारहिताशयोऽपि जीवो ममताव्याकुलिताशयो हि दैवात् ।
मम तावदियं नुदेन्नु पीडाममतासाविति जाततीव्रतापः ॥ १८ ॥

---

ततश्च,

मरुदित्यादि । मरुत्स्तोमो नाम क्रतुविशेषः । सतामुत्कृष्टानामात्मजानां जननमिष्टवान् जननश्रद्धया, इष्टवान् ईजे ॥ १६ ॥

अस्मिन्नित्यादि । गुरोः बृहस्पतेः । गुर्विणीभावं गर्भिणीभावम् अभावयत प्राप्ता ॥

अन्तर्वत्नीमित्यादि । गर्भिणीम् । गुरोः ज्येष्ठस्य । अचीकमत अकामयत । 'कमेर्णिङ्' (पा० सू० ३-१-३०) इति णिङ् । 'णिश्रि–' (पा० सू० ३-१-४८) इति चङ् । 'सन्वल्लघुनि–' (पा० सू० ७-४-९३) इति सन्वद्भावः ॥ १७ ॥

ममतेत्यादि । ममतारहिताशयः निर्ममः । ममतया उचथ्यपत्न्या व्याकुलितः । मम तावद् इयं नुदेत् नु पीडाम् अमत इति छेदः । इयं मम पीडां नुदेन्नु इत्यसावमत इत्यन्वयः । अमत ज्ञातवान् । 'तनादिभ्यः–' (पा० सू० २-४-७९) इति सिज्लोपे रूपम् ॥ १८ ॥

एवमनुदिनमनुचिन्तयन्नभयं बृहतांपतिः कदाचन वेद-वेदाङ्गानां वेदयोऽपि स्त्रीकृत्यावेशविवशः कृत्याकृत्यविचारविमूढमना वृषस्यन्निमामयन्निदमसहमानेन सहमानेनार्भकेण गर्भगतेन निर्भरामर्षं निवारितोऽपि मदनदहनदवथुव्यथामसहिष्णुः सहसान्धंभविष्णुर्भवेति तं प्रशप्य प्रजावत्यामप्यस्यां प्रजावत्यामवार्यवीर्यं वीर्यमवाकिरत् ॥

दृश्यते जगति विश्वगर्हितं साहसं हि महतामपि क्वचित् ।
भूरिधामसु न लिप्यते च तत् पावके सकलदाहके यथा ॥ १९ ॥

जीवे न युक्तमिदमित्युरुलोकवाचां
शक्त्येव तत्क्षणमिदं मुनिवर्यवीर्यम् ।
जीवेन युक्तमजनि स्फुटिताखिलाङ्गं
मुग्धं चचाल च मनागुदरे तदीये ॥ २० ॥

---

एवमित्यादि । बृहतांपतिः बृहस्पतिः । बृहतां महताम् । वेदयो ज्ञाता । स्त्री एव कृत्या देवताविशेषः स्त्रीकृत्या । वृषस्यन् रतेच्छावान् । 'अश्वक्षीर–' (पा० सू० ७-१-५१) इत्यसुक् । 'अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम्' (वा०) । अयन् गच्छन् । सहमानेन मानसहितेन । दवथुस्तापः । 'टुदु उपतापे' । 'ट्वितोऽथुच्' (पा० सू० ३-३-८९) अन्धंभविष्णुः अनन्धः अन्धो भवन् । प्रजावत्यामपि गर्भिण्यामपि । प्रजावत्यां भ्रातृजायायाम् ॥

दृश्यत इत्यादि । साहसं साहसकर्म । सहसावितर्किताविमर्शयोः । लिप्यते, 'लिप उपदेहे' । कर्मकर्तरि । 'कर्णान्तमेत्य विभिद' इति स्वयंशब्देन विनापि प्रयोगः ॥ १९ ॥

जीवे इत्यादि । जीवे बृहस्पतौ । इदं न युक्तम् । जीवेन युक्तमजनि सजीवमभूत् । 'दीपजन–' (पा० सू० ३-१-६१) इति कर्तरि चिण् । 'चिणो लुक्' (पा० सू० ६-४-१०४) इति तशब्दस्य लुक् । स्फुटितानि अङ्कुरितानि ॥ २० ॥

अनन्तरमुत्थितानल्पकोपमुचथ्यतनयेन दीर्घतमोनामधेयेन मामतेयेन मूर्ध्नि पार्ष्णिप्रहाराद् दूरादुत्सारितं पितृभ्यामपि परित्यक्तं 'भर द्वाजमिम'मिति निजनिगदितापतितभरद्वाजाभिधानमेनं तृषा पातुकामं पोतकं पातुकामा त्रिधित्रिहितवितानत्वरत्रितायमानमोदास्तदैव देवाः समादाय 'सकलगुणभाजनं बालकममुं पुत्रीकुरुष्वे'त्यादरादादिष्टवन्तः दिष्टचेदमनभ्रा वृष्टिरिति हृष्टहृदयाय पुत्रीयते धात्रीभृते भरताय विदिताभिप्रायाः प्रायच्छन् ॥

भरतोऽथ भरद्वाजमेजमानममुं गुणैः ।
ततान तनुजन्मानं वितानविधिसाधितम् ॥ २१ ॥

भूपो मुमन्युरुदभूदथ मामतेयात् तं यौवराज्यमनयद्भरतो नयज्ञम् ।
अस्मात् सुहोत्रसुखपुत्रवरा बभूवुरिष्टैरयष्ट किल तत्र सुहोत्रनामा ॥ २२ ॥

हस्ती ततस्त्वजनि कृत्स्नसपत्नसङ्घ-
सान्द्रान्धकारमिहिरायितबाहुवीर्यः ।
प्रस्तीतनिस्तुषतरप्रथमानकीर्ति-
स्तोमप्रकामविशदीकृतविश्वचक्रः ॥ २३ ॥

---

अनन्तरमित्यादि । मामतेयेन ममताया अपत्येन । 'स्त्रीभ्यो ढक्' (पा०सू०४-१-१२०) । मूर्ध्नि शिरसि । पार्ष्णिः गुल्फाधोभागः । पितृभ्यां मातापितृभ्यां, 'पिता मात्रा' (पा० सू० १-२-७०) इत्येकशेषः । द्वाजमिममिति । "बाले भर द्वाजमिमं भरद्वाजं बृहस्पतेः" इति श्रीमहाभारतोक्तमेवानुवदति । पातुकामं स्तनपानेच्छुम् । पातुकामाः रक्षितुकामाः । पुत्रीयते आत्मनः पुत्रमिच्छते । 'सुप आत्मनः—' (पा० सू० ३-१-८) इति क्यच् ॥

भरत इत्यादि । एजमानं शोभमानम् । 'एजृ भेजृ भ्राजृ दीप्तौ' ॥२१॥

भूप इत्यादि । मामतेयाद् भरद्वाजात् । अयष्ट ईजे । इष्टैः अश्वमेधादियज्ञैः ॥ २२ ॥

हस्तीत्यादि । मिहिरायितः मिहिरवदाचरन् । 'कर्तुः क्यङ्—' (पा० सू० ३-१-११) इति क्यङ् । प्रस्तीतः घनीभूतः । 'स्त्यै ष्ट्यै शब्द-

आविभ्रन्महितं वपुः पुरुबलो वंशं विशालं वहन्
विक्रान्त्या चलितावनिः प्रविसरद्दानाम्बुराजत्करः ।
अश्रान्ताश्रितविन्दुजालविलसत्पौरस्त्यभागस्तदा
भद्रात्मा नितरां चकास्ति स पुरा हस्ती धरित्रीतले ॥ २४ ॥

सहरित् सहरीह जयन् सुनयः सुहितं च निरहितं चापि ।
सततं स ततान सतामवने रतधीरवनीभृदथ ॥ २५ ॥

अनेकधात्रीपतिभिर्मदोद्धतैरनेकधाकृष्य वशीकृता हठात् ।
धरातुरा सा हि पतिव्रताभवद्धरातुरासाहि सुधार्मिकेऽमुके ॥ २६ ॥

---

सङ्घातयोः' । 'प्रस्त्योऽन्यतरस्याम्' (पा० सू० ८-२-५४) इति निष्ठातकारस्य मकाराभावे रूपम् ॥ २३ ॥

आविभ्रदित्यादि । स हस्ती चकास्ति पुरा शुशुभे । 'पुरि–' (पा०सू० ३-२-१२२) इति भूते लट् । विशालं विस्तृतम् । वंशं कुलं, पृष्ठास्थि च । "वंशः पृष्ठास्थ्नि गेहोर्ध्वकाष्ठे वेणौ गणे कुले" इति वैजयन्ती । विक्रान्त्या पराक्रमेण, पदविक्षेपेण च । दानाम्बु दानार्थमम्बु, मदजलं च । करो हस्तः, शुण्डादण्डश्च । विन्दुजालं विद्वत्समूहः, पद्मकं च । पुरस्ताद् भवः पौरस्त्यः । 'अव्ययानां–' (वा०) इति टिलोपः । भद्रात्मा भद्रदेहः । "भद्रो मन्दो गजश्चेति विज्ञेया गजयोनयः" । "जाता भद्रद्विपेन्द्राः कृतयुगसमये लक्षणेनाभिपूर्णास्त्रेतायां मन्दजात्याः खलु गजपतयो द्वापराख्ये युगे च । नागाश्चैवं मृगाख्यास्तदनु कलियुगेऽत्रैव सङ्कीर्णजात्या नागानां जातिभेदाज्जनिरिह कथिता कालयोगानुरूपम् ॥" इति मातङ्गशास्त्रे ॥ २४ ॥

सहरिदित्यादि । सहरिद् दिक्साकल्यं जयन् । सहरि हरिणा तुल्यः । सुहितं हितसमृद्धिम् । निरहितं अहिताभावं च ततान । अत्र चतुर्षु 'अव्ययं–' (पा० सू० २-१-६) इत्यादिनाव्ययीभावः ॥ २५ ॥

अनेकेत्यादि । हठाद् बलात्कारेण । धरा भूः । आतुरा, हठाहरणात् । सुधार्मिके सुतरां धर्मं चरति । 'धर्मं चरति' (पा० सू० ४-४-४१) इति ठक् । अमुके अमुष्मिन् । 'अव्ययसर्वनाम्नाम्–' (पा०सू० ५-३-७१) इत्यकच् ॥ २६ ॥

तुङ्गे गङ्गाप्रतीरे प्रथितमिह ततः पत्तनं हस्तिनाख्यं
व्यातेने तेन वीतं नवकनकमयैरुन्नतैः सालजालैः ।
प्रासादा यत्र सातप्रवितरणचणाः स्वदयन्ति स्म सादं
नित्यं वैकर्तनानां गगनगतिरुजां वाजिनां वाजिनां हि ॥ २७॥

अतिदूरमवस्थितां द्युलक्ष्मीं प्रसरत्पुष्पवतीं पयोधराढ्याम् ।
अनुभूय च यत्र सौधसङ्घः सुरनद्यां प्रतिमाच्छलेन सस्नौ ॥ २८ ॥

रम्यासूत्तुङ्गहर्म्यावलिषु विलसतामुन्मुखं यौवनानां
लीलामालोकमाना बत! गगनचरा विस्मयन्ते स्म यस्मिन् ।
यस्मिन् वा प्राज्यवज्रप्रमुखमणिगणैर्भासुरो गोपुरौघो
लोकालोकापरार्धप्रचितमपि तमस्सञ्चयं लुञ्चति स्म ॥ २९ ॥

---

तुङ्ग इत्यादि । प्रतीरे तटे । हस्तिना निर्वृत्तं हस्तिनं 'तेन निर्वृत्तम्' (पा० सू० ५-१-७९) इत्यण् । "संज्ञापूर्वको विधिरनित्यः" इति वृद्धेरनित्यत्वाद् वृद्ध्यभावे रूपम् । वीतं वृतं, 'व्येञ् संवरणे' । विशेषेण इतं प्राप्तं वा । सालाः प्राकाराः । सातं सुखं; स्यति दुखमिति सातम् । 'षो अन्तकर्मणि' इति क्षीरस्वामी । प्रवितरणचणाः दानेन प्रसिद्धाः । 'तेन वित्तः–' (पा० सू० ५-२-२६) इति चणप् । वैकर्तनानां सूर्यसम्बन्धिनाम् । गगनगतिरुजाम् (वाजिनां) वजितुं व्रजितुं शीलमेषामिति 'सुप्यजातौ–' (पा० सू० ३-२-७८) इति णिनिः । 'वज व्रज गतौ' ॥ २७ ॥

अतिदूरमित्यादि । अतिदूरमवस्थितां द्युलक्ष्मीं दवीयस्तरमाकाशं, "आकाशे त्रिदिवे च द्युः" इति निघण्टुः । अनुभूय प्राप्य । 'भू प्राप्तौ' । तया सङ्गम्य च । प्रसरत्पुष्पवतीं प्रकर्षेण गच्छन्तौ पुष्पवन्तौ दिवाकरनिशाकरौ यस्यां, प्रसरद्रजोयुतां च । सुरनद्यां गङ्गायाम् । प्रतिमाच्छलेन प्रतिबिम्बव्याजेन । सस्नौ स्नातवान् । 'ष्णा शौचे' । अत्र समासोक्तिरलङ्कारः । प्रतिमेत्यत्रापह्नुतिः ॥ २८ ॥

रम्यास्वित्यादि । उन्मुखं लीलामालोकमानाः । उन्मुखावलोकनं हर्म्यावलीनां गगनचारिवीथ्या अप्युपरितनत्वात् । यौवनानां युवतिगणानां,

आसाञ्चक्रे सशक्रं सकलरिपुमदस्तम्भिदोःस्तम्भशुम्भत्-
सप्ताम्भोराशिभङ्गप्रकरपरिलसद्विश्वविश्वम्भरोऽसौ ।
हस्ती चास्तेयमादप्रसरविरहितो विश्रुते हस्तिनाख्ये
सुत्रामावासमित्रे सुखमथ नगरे तत्र सत्रा कलत्रैः ॥ ३० ॥

विकुञ्जनोऽथ संजज्ञे तस्मादरिविभञ्जनः ।
उदढौकन्त चैतस्मादजमीढादयस्त्रयः ॥ ३१ ॥

प्रौढधीरजमीढोऽयमूढमोदमुदूढवान् ।
धूमिनीं माननीयाङ्गीं मानिनीं मेदिनीपतिः ॥ ३२ ॥

अनुकूलामनुरूपामभिरूपां धूमिनीं कमनिरूपां ताम् ।
रमयन्नञ्चितरागं कञ्चन कालं स वीर्यमदधादस्याम् ॥ ३३ ॥

---

पुंवद्भावाभावे रूपम् । विस्मयन्ते स्म विस्मितवन्तः । तरणिकिरणप्रसरणाभावात् लोकालोकपर्वतापरार्धे सर्वदावस्थितमपि तमस्सञ्चयं लुञ्चति स्म अपनीतवान् । 'लुञ्च अपनयने' शप् ॥ २९ ॥

**आसाञ्चक्र** इत्यादि । आसितवान् । 'दयायासश्च' (पा० सू० ३-१-३७) इत्याम्प्रत्ययः । सशक्रं शक्रेण तुल्यः । सादृश्येऽव्ययीभावः । आस्तेयमादः धनभवो मदः । 'मदोऽनुपसर्गे' (पा० सू० ३-३-६७) इति केवलान्मदेरब्विहितोऽपि 'सध मादस्थयोः—' (पा० सू० ६-३-९६) इति निपातनान्मादः ॥ ३० ॥

**विकुञ्जन** इत्यादि । उदढौकन्त उत्पन्नाः । 'ढौकृ' गत्यर्थः ॥ ३१ ॥

**प्रौढ** इत्यादि । धूमिनीं नाम उदूढवान् उपयेमे ॥ ३२ ॥

**अनुकूलामित्यादि** । अभिरूपां सर्वज्ञां, "प्राज्ञरूपसुरूपाभिरूपा बुधमनोज्ञयोः" इत्यमरः । कमनिरूपां प्रशस्तां कमनीम् । प्रशंसायां रूपप् । 'घरूप—' (पा० सू० ६-३-४३) इति ङीपो ह्रस्वः । अदधाद् आहितवान् ॥ ३३ ॥

अनन्तरमियमखिलजनमोदजनने वैजनने मासि समुपागते निजाभिमतदैवतभावनाभिरतमना धूमिनी मनोजवमदोषोपशोभितं निजतेजोनिस्सरणनिश्शोभीकृतराजहंसं विरचितगोत्रास्पर्शनक्षत्राभिख्यातमद्भुतात्मकमृक्षमात्मभवमबीभवत् ॥

ततश्च,

एतस्मिन्नेधमाने स हि कवचहरे देवदेश्ये तनूजे
राजा स्वं राज्यभारं प्रकृतिपरिषदां दत्तमोदे न्यधत्त ।
मात्रा पित्रा च सत्रा सुखमिह निवसन् पत्तने तत्र तत्र
गोत्रामेकातपत्रां स च विशदयशःश्वेतिताशेषविश्वः ॥ ३४ ॥

धरित्र्या विधिवत् त्राणं पुत्रे तत्र वितन्वति ।
जरठस्त्वजमीढोऽयमाढौकिष्ट त्रिविष्टपम् ॥ ३५ ॥

---

अनन्तरमित्यादि । वैजनने मासि । "सूतिमासो वैजनन" इत्यमरः । मनोजवं पितृसदृशम्, "मनोजवः स्यात् पितृसन्निभः" इत्यमरः । अदोषोपशोभितम् अदोषः दोषरहितः अत एवोपशोभितः, दोषा रात्रिश्च । "क्षपा त्रियामा क्षणदा निशीथिनी निशा च दोषा रजनी च यामिनी" इति शब्दरत्नाकरः । निजतेजोनिस्सरणेन निश्शोभीकृता राजहंसा राजश्रेष्ठा येन सः, निश्शोभीकृतौ राजहंसौ चन्द्रसूर्यौ येन तम् । विरचितं गोत्रायाः गोसमूहस्य भुवो वा स्पर्शनं दानं येन, भूस्पर्शनं च । क्षत्रेषु मध्ये अभिख्यातं, नक्षत्रमित्यभिख्यातं च । एवंभूतत्वादद्भुतात्मकं ऋक्षमात्मभवं ऋक्षनामानं पुत्रं, ऋक्षं नक्षत्रं च । अबीभवत् भावयति स्म । 'णिश्रि–' (पा० सू० ३-१-४८) इति चङ् ॥

ततश्च,

एतस्मिन्नित्यादि । एधमाने वर्धमाने । कवचहरे, वर्मधारणात् । 'वयसि च' (पा० सू० ३-२-१०) इत्यच् । देवदेश्ये देवकल्पे । 'ईषदसमाप्तौ' इति देश्यः । तत्र पालयामास ॥ ३४ ॥

धरित्र्या इत्यादि । जरठः वृद्धः । आढौकिष्ट प्राप्तवान् ॥ ३५ ॥

ततः कृतलक्षणोऽयमृक्षो विपक्षकक्षदहनदक्षभीष्मप्रतापपावको-ष्मायमाणो न्यक्षेण निरीक्षिताक्षीणधर्मशास्त्रः समस्तासु नीतिषु नितरामवधारिती दर्पकदर्पापसर्पकमधुरकान्तिभरनिरस्तसमस्तमानिनीजन-मानसारः तनयाननावलोकनमनोरथान्तरतरीं राथन्तरीं तरणीतलतिल-कायमानां तरुणीमणीं परिणीय रमणीयरूपयानया सह रममाणः पारा-वारपरिघमखण्डं भूमण्डलं भुनक्ति स्म ॥

अभिपातिनो द्विजातीनभियातीनपि पुरा प्रसादयते ।
यमयन्नयं नियमयन् नियमेन कृपायुतो महीपालः ॥ ३६ ॥

ऋक्षं तं नृपमृक्षकल्पमनिशं सूर्याप्तशोभोदयं
राजत्पुष्करभासुरास्यममलं स्थित्येकसक्तं सदा ।
नित्योपस्थितराजमण्डललसत्पार्श्वप्रदेशं भृशं
नन्दन्ति स्म सदा समीक्ष्य वसतौ कालप्रतीक्षा जनाः ॥ ३७ ॥

---

तत इत्यादि । ऊष्मायमाणः ऊष्माणमुद्वमन् । "बाष्पोष्मभ्याम्—" (पा० सू० ३-१-१६) इति क्यङ् । न्यक्षेण कार्त्स्न्येन । "प्रकृत्यादिभ्य उपसंख्यानम्" (वा०) इति तृतीया । तत्र 'न्यक्षकार्त्स्न्यादिभ्यः क्रियाविशेषणे' (स० क० ३-१-२१६) इति क्रियाविशेषणत्वम् । नीतिषु, 'क्तस्येन्विषयस्य—' (वा०) इति सप्तमी । अवधारिती अवधारितमनेनेति विगृह्य 'इष्टादिभ्यश्च' (पा० सू० ५-२-८८) इतीनिः । तनयोदयरूपस्य मनोरथान्तरस्य मनोरथ-विशेषस्य तरीं नावम् । भुनक्ति स्म रक्षितवान् ॥

अभिपातिन इत्यादि । आपतनशीलान् द्विजातीन् ब्राह्मणान् । अभियातीन् शत्रूनपि प्रसादयते पुरा प्रसन्नानकरोत् प्रकर्षेण सादयुक्तांश्च । यमयन् भोजयन् । 'यमोऽपरिवेषणे' (ग० सू०) । 'यम उपरम' इत्यग्रे । अयं परिवेषणाद् भोजनाया अन्यत्रामन्तोऽपि न मिदिति माधवः । नियमयन् नियमं कुर्वन् । निगृह्णान इत्यर्थः । अवन्तान्नियमशब्दात् 'तत्करोति—' इति णिचि 'नियमयन्नि'ति माधवः । कृपया युत अयुतश्च ॥ ३६ ॥

ऋक्षमित्यादि । ऋक्षकल्पं प्रायेण नक्षत्रसदृशम् । सूर्यात् सूरिभ्यश्च आप्तः शोभोदयो यस्य तत्, तं च । राजत्पुष्करे निर्मेघगगने भासुरा आस्या

अचलामचलात्मैवमखिलामपि पालयन्।
बभूव भूमिपालोऽयं पुत्रवानप्यपुत्रवान्॥ ३८॥

अनन्तरमनुदिनममलगाङ्गेयसङ्गिशृङ्गैः रजतखचितखुरपुटैर्विशदतरकौशेयवरास्तृतसमस्तावयवैः सवत्सकैः सौधेनुकैरयाथाकथाचैराचोपचैरकुप्यैः कुप्यैरविकुप्यन्निवार्थसार्थाय निजधर्मनिवर्तनैकाभिप्रायान् विप्रानविभ्रान्तहृदयमभिप्रायमभिप्रायमपरानपि जनानभिप्रेतवितरणैरभिप्रायमभिप्रायं, किञ्च, सादरोदञ्चितया खादतमोदतयाश्नीत-

---

स्थितिर्यस्य तत्, राजत्पुष्करमिव शरत्पद्ममिव भासुरमास्यं यस्य तं च। सदास्थितावववस्थाने एकस्यां सक्तं गतिरहितमित्यर्थः। स्थितौ पालने च। नित्यं व्यवस्थया प्रतिदिनं च। उपस्थितेन राजमण्डलेन चन्द्रमण्डलेन, राजसमूहेन च लसन् पार्श्वप्रदेशो यस्य तत्, तच्च। वसतौ रात्र्यां, राजधान्यां च। "वसती रात्रिवेश्मनोः" इत्यमरः। कालं नाडिकायामादिकम्, अवसरं च प्रतीक्षन्ते जिज्ञासन्ते, प्रतिपालयन्त इति च, कालप्रतीक्षाः॥ ३७॥

अचलामित्यादि। भूमिं पुनात्यृणापकरणादिति पुत्रः, तं वाञ्छतीति पुत्रवान्। 'वाछि इच्छाया'मित्यस्मान्नुमि 'क्विप् च' (पा० सू० ३-२-७५) इति सोपपदनिरुपपदसाधारणे कर्तरि क्विपि तस्य लोपे 'छ्वोः शूडनुनासिके च' (पा०सू०६-४-१९) इति श् इत्यादेशे संयोगान्तलोपे रूपम्। पुत्रोऽस्यास्तीति पुत्रवान्। 'तदस्य–' (पा०सू० ५-२-९४)इति मतुप्। तस्मादन्योऽपुत्रवान्॥३८॥

अनन्तरमित्यादि। गाङ्गेयसङ्गिशृङ्गैः सुवर्णबद्धविषाणैः। सौधेनुकैः सुधेनुसमूहैः। 'अचित्त–' (पा० सू० ४-२-४७) इति ठक्। 'जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम्' (पा० सू० ७-३-२५) इति उत्तरपदस्य वा वृद्धिः पूर्वपदस्य नित्यम्। अयाथाकथाचैः यथाकथाचेत्यनादरेऽव्ययसमुदायः; अनादरेण दीयमानानि याथाकथाचानि तेभ्योऽन्यानि अयाथाकथाचानि। आचोपचैः आचितैरुपचितैश्च आर्जितैः परिवृद्धैश्च। अकुप्यैः कुप्यैश्च। 'अकुप्यं मणिमुक्तादि कुप्यं वस्त्रादि चेष्यते।' अर्थसार्थाय, 'क्रुधद्रुह–' (पा०सू० १-४-३७) इति संप्रदानसंज्ञा। विप्रानभिप्रायमभिप्रायं संप्रदानीकृत्य संप्रदानीकृत्य, एतानि

पिबतया चाश्नुवानेन मोदवेगेन विवशमानसानशनायतोऽखिलानपि जनानहर्निशं यथारुचि रुचिरतरेण चतुरगणभावितेन गुणभावितेन चतुर्विधेन भोजनेन भोजंभोजमपि महीयांसमनेहसं महीपतिरयमतिवाहयामास ॥

क्षेत्रव्रातान् वितेने दिशि दिशि महितानच्युतश्रीसमेतान्
भक्त्या चाभ्यर्णतोयाः पुरुतरविभवा शुक्तिशाला विशालाः ।
कूपानत्युज्ज्वलापानुरुतरसरसीर्विश्वचेतोभिरामा-
नारामांश्चैष धन्यः प्रतिसरणि धरण्यां निचख्नेन्यते स्म ॥ ३९ ॥

तृष्णजोऽथ जनान्मुष्णदुष्णांशुकिरणोष्णताम् ।
पुष्करं पुष्कलरसं प्रपास्वापीप्यदप्यसौ ॥ ४० ॥

---

विप्रेभ्यो दत्त्वेत्यर्थः । अपरानपि जनान् अभिप्रायमभिप्रायं अभितर्प्याभितर्प्य । 'प्रीञ् तर्पणे' । खादत मोदत इति नियोगः सातत्येन यस्यां सा खादतमोदता तया । मयूरव्यंसकादौ 'आख्यातमाख्यातेन क्रियासातत्ये' (वा०) इति क्रियायामन्यपदार्थे सातत्ये द्योत्ये तिङन्तः तिङन्तेन समस्यते । एवमश्नीतपिबतयेति । अश्नुवानेन व्याप्नुवता । अशनायतः बुभुक्षितान् । चतुरगणैः विदग्धपाचकैः । भावितेन उत्पादितेन । गुणभावितेन माधुर्यादिगुणप्रासेन । भोज्यभक्ष्यपेयलेह्यभेदात् चतुर्विधेन भोजनेन अन्नसामान्येन भोजंभोजं भोजयित्वा भोजयित्वा । अतिवाहयामास यापयामास ॥

क्षेत्रेत्यादि । क्षेत्रव्रातान् बहून् देवालयान् । अच्युतश्रीसमेतान् चित्रविशेषादिना अन्यूनशोभायुक्तान् । अच्युतेन विष्णुना श्रिया लक्ष्मीदेव्या च युतानिति वा । उपलक्षणमेतन्महेश्वरषण्मुखादीनाम् । अत्युज्ज्वला निर्मला आपो येषु ते अत्युज्ज्वलापाः । 'ऋक्पूः—' (पा० सू० ५-४-७४) इति समासान्तोऽकारप्रत्ययः । प्रतिसरणि सरण्यां सरण्यां, सरणिर्मार्गः, वीप्सायामव्ययीभावः । निचख्नेन्यते स्म निखातवान् ॥ ३९ ॥

तृष्णज इत्यादि । तृष्णजः अभिलाषुकान् । 'स्वपितृषोर्नजिङ्' (पा०सू० ३-२-१७२) इति नजिङ् । पुष्करं पानीयम् । प्रपासु पानीयशालिकासु,

अचिरादेव पश्येयं रुचिरं तनयाननम् ।
सदैवमर्थनां कुर्वन् स दैवं समुपास्त च ॥ ४१ ॥

अनन्तरमचिरेणैव कालेन राथन्तरीयमेवंविधविविधपुण्यपूरदूरीकृतदुरितनिकरेण तेन निजदयितेनाहितं गर्भं बिभराम्बभूव ॥

उपचेस्क्रीयमाणः स संस्कारैः समयोचितैः ।
क्रमतो वव्रृधे गर्भः प्रमदो जगतामपि ॥ ४२ ॥

वीर्योदग्रार्यमादिग्रहगणमहनीयेऽथ दिष्टे विशिष्टे
प्रासोष्टात्रिष्प्रमोदा निखिलजनमनोनन्दनं नन्दनं सा ।
पश्यन्नास्येन्दुमस्य प्रमदजलनिधौ साधु मज्जन्नपि द्रा-
गामज्ज्य द्युम्नजातं निरवधि स दिशन् जातकर्म व्यतानीत् ॥ ४३ ॥

---

प्रपिबन्ति अस्यामिति प्रपा । घञर्थे कविधानं 'स्थास्नापाव्यधिहनियुध्यर्थ'मिति घञर्थे कः । आपीप्यत् पाययति स्म । 'पा पाने', अस्माण्णिचि लुङि चङि पाय्शब्दे द्विरुक्ते हलादिशेषे सति 'लोपः पिबतेरी चाभ्यासस्य' (पा० सू० ७-४-४) इत्युपधालोप अभ्यासस्येत्वं च ॥ ४० ॥

अचिरादित्यादि । क्षणात् पश्येयं, प्रार्थनायां लिङ् । समुपास्त सम्यगुपासनां कृतवान् ॥ ४१ ॥

अनन्तरमित्यादि । बिभराम्बभूव बभार । 'भीह्री–' (पा० सू० ३-१-३९) इत्याम्प्रत्ययः श्लुवद्भावश्च ॥

उपचेस्क्रीयमाण इत्यादि । अत्यर्थमुपस्क्रियमाणः । उपस्कारो गुणान्तराधानम् । 'उपात् प्रतियत्न–' (पा० सू० ६-१-१३९) इति प्रतियत्ने सुट् । सुटो बहिरङ्गलक्षणस्यासिद्धत्वादभक्तत्वाद्वा संयोगादिलक्षणस्य 'यङि च' (पा०सू० ७-४-३०) इति गुणस्याभावात् 'रीङृतः' (पा०सू० ७-४-२७) इति रीङ् । समयोचितैः तत्तन्मासयोग्यैः ॥ ४२ ॥

वीर्येत्यादि । वीर्योदग्रो बलसम्पूर्णः, परमोच्चगत इत्यर्थः । "उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः । शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम् ॥" इत्युक्त्या परमोच्चगानामेव बलसम्पूर्णत्वम् ।

पोतेनानेन भुवने महितेन महीपतिः ।
स मनोरथपाथोधिं ततार तरसा ततः ॥ ४४ ॥

धाम्ना समेतमेतं स नाम्ना संवरणं नृपः ।
आम्नातवान् पुरोधोभिराम्नायनिरतैः समम् ॥ ४५ ॥

अवरीवृधीदरिवनितामुखसरसिजकम्रकान्तिहरणचणः ।
ऋक्षकुलाध्यक्षोऽयं बालो बालेन्दुवद् गृहीतकलः ॥ ४६ ॥

अनेन हि भुजेनैव चक्रिणो महिमा हृतः ।
कथमस्योपमानत्वं लभेरन्नपरे सुराः ॥ ४७ ॥

---

"अजवृषभमृगाङ्गनाकुलीरा झषवणिजौ च दिवाकरादितुङ्गाः ।
दशशिखिमनुयुक्तिथीन्द्रियांशैस्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः ॥"

ग्रहगणेति गणशब्देन ग्रहपञ्चकाद्युच्चस्थितिरुक्ता । "सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः । एकद्वित्रिचतुर्भिर्जायन्तेऽतःपरं दिव्याः ॥" एवमस्य दिव्यत्वाल्लोकातिशायिनी भाग्यसम्पत्सूच्यते । दिष्टे काले प्रासोष्ट प्रसूतवती । द्युम्नजातं द्रविणसमूहम् । व्यतानीद् अकरोत् ॥ ४३ ॥

पोतेनेत्यादि । पोतेन बालेन, प्लवेन च । भुवने लोके, जले च । महितेन पूजितेन । जले पूजितत्वं सुखतरणक्षमत्वं, तच्च बृहत्त्वम् । मनोरथमेव पाथोधिम् ॥ ४४ ॥

धाम्नेत्यादि । आम्नातवान् उक्तवान् । पुरोधोभिः "पुरोधास्तु पुरोहितः" इत्यमरः ॥ ४५ ॥

अवरीवृधीदित्यादि । क्रमेणात्यर्थं प्रवृद्धोऽभूत् । 'वृधु वृद्धौ' यङ्लुगन्ताल्लुङ् । अरिवनिताः शत्रुवनिताः, तासां सरसिजमिव यन्मुखं तस्य कान्तिहरणेन प्रसिद्धः । अरिवनिताश्चक्रवाकस्त्रियश्च, तासां मुखस्य सरसिजस्य च । ऋक्षकुलस्य ऋक्षवंशस्य, नक्षत्रसमूहस्य च । बालेन्दुवद् बालचन्द्र इव । कलाः चतुष्षष्टिकलाः, षोडशभागश्च ॥ ४६ ॥

अनेनेत्यादि । चक्रिणः विष्णोः, भुजगवरस्य च ॥ ४७ ॥

पित्राथ प्रहितः प्रजाविनयने वित्रासयन् विद्विष-
स्तन्त्रावापपटुर्वशी लघु वशीचक्रे स चक्रं भुवः ।
अर्थिभ्योऽर्थचयं व्यशिश्रणदपि श्रद्धालुराशान्तरा-
दायद्भ्यः सदयं यथा बहुतृषोपन्नाः कणेऽघ्नन्निमे ॥ ४८ ॥

सदार्थिवेदं बहुरिक्थजातं देदीयमाने खलु मानवेन्द्रे ।
मुक्तां स्ववाच्येन तदार्थिशब्दो निरर्थतामात्मनि सन्न्यधत्त ॥ ४९ ॥

शिरस्पदे वसन्नेव दिवस्पतिवनस्पतिः ।
अधस्पदास्पदोऽस्यासीदपरस्परदानतः ॥ ५० ॥

---

पित्रेत्यादि । तन्त्रं स्वविषयव्यापारः । आवापो मण्डलव्यापारः । व्यशिश्रणद् दत्तवान् । आयद्भ्यः आगच्छद्भ्यः । अर्थिभ्यः 'अर्थादसन्निहिते' (वा०) इतीनिः । 'अभिधानशक्तिस्वाभाव्याच्चात्राभिलाषवानेवोच्यत' इति **न्यासः** । बहुतृषाया उपन्ना आश्रयभूताः, बहुविधतृष्णातान्ता इत्यर्थः । 'उपन्न आश्रय' इति **निपातः** । कणेऽघ्नन् श्रद्धाप्रतिघातमकुर्वन् । 'कणेमनसी—' (पा० सू० १-४-६६) इति गतित्वात् 'ते प्राग्—' (पा० सू० १-४-८०) इति कणेशब्दस्य प्राक्प्रयोगः । कणेमनश्शब्दावभिलाषार्थौ, तस्य हतिमकुर्वन्नित्यर्थः ॥ ४८ ॥

**सदे**त्यादि । अर्थिवेदं यानर्थिनो जानाति लभते विचारयति वा तेभ्यस्सर्वेभ्य इत्यर्थः । 'कर्मणि दृशिविदोः—' (पा० सू० ३-४-२९) इति णमुल् । रिक्थजातं द्रविणसमूहम् । देदीयमाने पौनःपुन्येनात्यर्थं दिशति सति । अर्थीतिशब्दोऽर्थिशब्दः । स्वस्य वाच्यभूतेन दुर्गतेन मुक्तां बहुधनत्वात् त्यक्तां निरर्थताम् अर्थरहितत्वम् । अर्थोऽभिधेयं, द्रविणं च । आत्मनि सन्न्यधत्त, तया त्यक्ता चेद्दीनामिमामहं परिगृह्णामीति कृपालुतयेवात्मन्याहितवानित्युत्प्रेक्षा व्यज्यते । अर्थिशब्दोऽभिधेयरहितोऽभूत् । अर्थी सन् भुवि कोऽपि नास्तीति भावः ॥ ४९ ॥

**शिरस्पद** इत्यादि । शिरस्पदे उपरितने स्थाने । अधस्पदं अधोगतं स्थानमास्पदं यस्येति बहुव्रीहिः । अत्रोभयत्रापि मयूरव्यंसकादित्वात् समासे 'अधःशिरसी पदे' (पा० सू० ८-३-४७) इति विसर्जनीयस्य सकारः ।

अच्छादच्छयशा द्विषो धृतरुषः स्त्रागच्छविच्छायतः
पाञ्चालान् स पुरोहितीकृतवसिष्ठेद्धप्रतापानलः ।
नीतिज्ञः पुनरीतिभीतिरहितां सम्पूर्णसम्पद्वतीं
सप्तद्वीपवतीमपीपलदपि क्ष्मामण्डलीं क्ष्मापतिः ॥ ५१ ॥

ततश्च,

शत्रुनिकरशौर्यशिखरिशातनशतधारधुरन्धरोद्दण्डदोर्दण्डमुष्टि-कुण्डसन्धुक्षितकौक्षेयकाशुशुक्षणिवषट्कृतबहुक्षतजघृतोक्षितविपक्षमाही-क्षितमुण्डतण्डाभिधपुरुपुरोडाशप्रतिपदोक्तसमराध्वराक्षीणदीक्षः, मृत्यु-ञ्जयधनञ्जयाविव प्रकटिताहीनभूतिराजी, नारायणरावणाविव परमहित-

---

दिवस्पतिवनस्पतिरिति पारस्करप्रभृतित्वात् सुट्। दिवस्पतीति 'तत्पुरुषे कृति--' (पा०सू०६-३-१४) इति बहुलोक्तेरलुक्। अपरस्परम् अविच्छेदेन प्रवृत्तं दान-मपरस्परदानं, 'अपरस्पराः क्रियासातत्ये' (पा० सू० ६-१-१४४) इति सुट्। क्रियासातत्ये सततत्वे द्योत्ये। अत्र लिङ्गाद्यतन्त्रमिति टीकासर्वस्वे ॥ ५० ॥

अच्छादित्यादि। अच्छात् खण्डितवान्। 'छो छेदने'। 'विभाषा घ्राधेट्--' (पा० सू० २-४-७८) इति सिचो विभाषालुक्। धृतरुष इति द्वितीयान्तः प्रथमान्तो वा। स्राग् झटिति। "स्त्राग्झटित्यञ्जसाह्नाय मङ्क्षु द्राक् सपदि द्रुतम्" इत्यमरः। अच्छविच्छायतः आभिमुख्येन गच्छतः। ईतिभिः, "अतिवृष्टिरनावृष्टिर्मूषिकाः शलभाः शुकाः। अत्यासन्नाश्च राजानः षडेते ईतयः स्मृताः॥" भीतिभिश्च, "आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राज-वल्लभात्! पृथिवीपतिलोभाच्च प्रजानां पञ्चधा भयम् ॥" अपीपलद् रक्षितवान्। 'णिश्रि--' (पा० सू० ३-१-४८) इति चङ् ॥ ५१ ॥

ततश्च,

शत्रु इत्यादि। करकाण्डमुष्टिरूपे कुण्डे। वषट्कृतं हुतम्। माहीक्षितं महीक्षित्समूहः। 'तस्य समूहः' (पा० सू० ४-२-३७) इत्यण्। मुण्डतण्डा मुण्डमाला, मुण्डसमूह इत्यर्थः। पुरोडाशो हविर्विशेषः। प्रतिपदोक्ता कण्ठोक्ता। मृत्युञ्जयो हरः। धनञ्जयोऽग्निः। अहीनाः सर्पश्रेष्ठाः भूतिराजिश्च अहीनभूति-

दानवारी, वृद्धश्रवा इव वर्धिताविपक्षोऽपि वर्धितविपक्षः, आकाश इव राजहंसाश्रितः, राजहंस इव मानसं गतः, मानसमिव गुरुतरतरोभृद्, गुरुरिव सुमनोगणोपासितः, सुमनोगण इव सारङ्गलोचनानन्दसन्दायी, सारङ्ग इव कमलातिलसितास्थः, कमलेव प्रमदावेशकृत्, प्रमदेव धनदानारतमनाः, धनद इव पुण्यजनपरिपूरितपुरोभागः, पुण्यजन इव हरिपराक्रमः,

---

राजयः, । प्रकटिता अहीनभूतिराजयो येनेति द्वन्द्वगर्भो बहुव्रीहिः । अन्यत्र प्रकटिता अहीना अन्यूना भूतिराजिर्भस्मराशिर्येन । प्रकटितया अहीनया भूत्या राजितुं शीलमस्येति 'सुप्यजातौ–' (पा० सू० ३-२-७८) इति णिनिः । परमम् अत्यर्थं हिता इष्टा दानवारयो देवा यस्य सः । परम् अत्यर्थमहिता दानवारयो यस्य स च । अत्यर्थमहितो दानवारो दानसमूहोऽस्यास्तीति च । 'अत इनिठनौ' (पा० सू० ५-२-११५) इतीनिः । वृद्धश्रवा इन्द्रः । वर्धिता छिन्नाः अवीनां पर्वतानां, "अवयश्शैलमेषार्काः" इत्यमरः । पक्षा गरुतो येन सः । अविपक्षो बन्धुश्च । विपक्षः शत्रुः । 'वर्ध छेदनपूरणयोः' । राजहंसाभ्यां चन्द्रसूर्याभ्याम् आश्रितः, राजश्रेष्ठैश्च । राजहंसः पक्षिविशेषः । [मानसं गतः] मानसं मानससरः गतः प्राप्तः, मानेन सङ्गतश्च । मानसं मन इव [गुरुतरतरोभृत्] गुरुतरम् अतिबृहत्, तरो वेगः, बलं च । गुरुर्बृहस्पतिरिव । [सुमनोगणोपासितः] सुमनोगणाः देवाः, सन्तश्च । सुमनोगणः पुष्पसमूह इव । सारङ्गलोचनानां भ्रमरचक्षुषाम्, अङ्गनानां च । सारङ्गः मत्स्य इव [कमलातिलसितास्थः] कमले जले अतिलसिता आस्था स्थितिर्यस्य सः, कमलमिवातिलसितमास्यं यस्य सः । कमला श्रीरिव [प्रमदावेशकृत्] प्रमदावेशः प्रकृष्टमदावेशः, तं करोतीति क्विप् । प्रमदो हर्षश्च । प्रमदा युवतिरिव [धनदानारतमनाः] धनदे बहुप्रदे अनारतं सततं मनो यस्याः, धनदाने आरतमाभीक्ष्ण्येन रतं मनो यस्य स च । धनदः वैश्रवण इव पुण्यजना यक्षाः, सन्तश्च । पुण्यजन इव राक्षस इव हरिपराक्रमः हरिपरेषु विष्णुभक्तेषु आक्रमो यस्य सः । भावे घञ् । 'नोदात्तोपदेशस्य–' (पा० सू० ७-३-३४) इति वृद्धिप्रतिषेधः । यद्वा, हरिपराणामाक्रमः, पचाद्यच् । हरिरिन्द्र इव

हरिरिव दानवारातिराजिताभ्याशः, दानवा इव कविसमाराधनाधिकमुदः, धराधिराजमानोऽप्यधराधिराजमानः, सुमित्रानन्दनोऽपि न लक्ष्मणः, लक्ष्मणोऽपि न सुमित्रानन्दनः, सुदर्शनधरोऽपि न विष्वक्सेनः, विष्वक्सेनोऽपि न सुदर्शनधरः, प्रद्युम्नोऽपि नाच्युतभूः, अच्युतभूरपि न प्रद्युम्नः, नृत्तशाला सूक्तिनर्तकीनां, दुग्धमकराकरः सद्धर्मसुधाकरस्य, एकान्तविनोदनस्थानं साम्राज्यलक्ष्म्याः, नन्दनारामो गुणसन्तानसन्तानशाखिनां, क्रीडाचलः सकलकलाविलासिनीनां, प्रभाकरोदयः सज्जनावलिपद्मिनीनां, महितमणिमन्दुरा इन्दिरापाङ्गतुरङ्गमाणां, विधुन्तुदो वैरिजनविरोचनस्य, मलयमहीधरो महितनयोपयोगमन्दमारुतस्य, मरुभूमिरयशोवारिपूरस्य, महासेतुरधर्मरतिनिम्नगाप्रवाहस्य, कालरिपुरौद्धत्यकालकूटस्य, पूर्णिमाभोगो दौर्मुख्यतिमिरस्य, प्रत्यूषसमयः सकलदोषदोषावलीनाम्, अपरनृपदुरापतरापारगुणपूरविस्मायितविश्वलोकः स विश्वम्भराधीश्वरः काशावलिनिकाशैराशावलयकूलंकषैरुरुयशोराशिभिरखिलमचलातलमलमचचकासत् ॥

---

दानवारातिभिः देवैः राजितं, दानवारा दानजलेनातिराजितं च, अभ्याशं यस्य सः। दानवा असुरा इव कविः शुक्रः, विद्वांश्च। मुत् मुदा च। धरायाम् अधिकं राजमानः अपि अधरः अधिराजानां मानो येन हेतुना। सुमित्राया नन्दनोऽपि न लक्ष्मण इति विरोधः, सुमित्राणामानन्दन इति विरोधपरिहारः। लक्ष्मणोऽपि, पूर्ववद्विरोधः। लक्ष्मणो लक्ष्मीवानिति परिहारः। सुदर्शनधरः चक्रधरोऽपि न विष्णुरिति विरोधः। सुदर्शनस्य सच्छास्त्रस्य धर इति परिहारः। विष्वक्सेनोऽपि, पूर्ववद्विरोधः। विष्वक् परितः सेना यस्येति परिहारः। प्रद्युम्नोऽपि अच्युतात् श्रीकृष्णाद् भूर्भवनं यस्येति विरोधः। प्रकृष्टं द्युम्नं धनं यस्येति। अच्युतभूरपि, पूर्ववद्विरोधः। च्युता स्वहस्तात् पतिता तस्या अन्या अच्युता, भूर्भूमिर्यस्येति परिहारः। दुग्धमकराकरः क्षीराब्धिः। मन्दुरा वाजिशाला। "वाजिशाला तु मन्दुरा" इत्यमरः। "पौर्णमासी तु पूर्णिमा" इत्यमरः। विस्मायितः इति पाठः, न विस्मापित इति। गुणपूरस्य करणत्वात्। हेतुभये ह्यात्वं पुक् च भवतः। हेतुः प्रयोजकः। काशा

वार्धीनद्धा कराभ्यां तितरिषतितरां मित्सति क्षोणिरेणू-
स्तारौघांस्तारहाराय च दिवि विततान् सञ्चिचीषत्यसंख्यान् ।
तूर्णं सौवर्णमद्रिं स च बिभरिषते मस्तकेनास्तशङ्कं
प्राज्ञम्मन्योऽस्य राज्ञो गुणगणगणने स्वेच्छयायच्छते यः ॥ ५२ ॥

नूनं मां याचकानामयमिह विभजेद् भूरिदातेति मत्वा
निर्णिक्तैरम्बरौघैर्निजतनुमपिधायैष किं गूढमास्ते ।
इत्याशङ्कामतानीदखिलतनुभृतामन्वहं हेमशैलो
देदीयादीयमानामुकनिबिडयशोमण्डलीपाण्डरात्मा ॥ ५३ ॥

---

बल्वजाः । अचचकासद् दीपयति स्म । 'चकासृ दीप्तौ' । ऋदित्त्वाद् 'नाग्लोपिशास्वृदिताम्' (पा० सू० ७-४-२) इति णौ चङि ह्रस्वाभावः । तेन सन्वद्भावाभावः ॥

वार्धीनित्यादि । समुद्रान् तितरिषतितराम् अत्यर्थं तरितुमिच्छति । 'इट् सनि वा–' (पा०सू० ७-२-४१) इति वेट्, सेट्त्वाद् 'इको झल्' (पा०सू० १-२-२९) इति कित्त्वाभावः । सनन्तात् 'तिङश्च' (पा० सू० ५-३-५६) इति तरप् । 'किमेत्तिङ्–' (पा० सू० ५-४-११) इत्यामुः । मित्सति मातुमिच्छति । 'सनि मीमा–' (पा०सू०१-४-५४) इतीस् । 'अत्र लोपः-' (पा०सू०७-४-५८) इत्यभ्यासलोपः । सञ्चिचीषति सञ्चेतुमिच्छति । बिभरिषते भर्तुमिच्छति । प्राज्ञम्मन्यः प्राज्ञमात्मानं मन्यमानः । आयच्छते व्याप्रियते । 'आङो यम–' (पा० सू० १-३-२८) इति तङ् ॥ ५२ ॥

नूनमित्यादि । भूरिदाता बहुप्रदः, स्वर्णदाता च । निर्णिक्तैः शोधितैः, धवलैरिति यावत् । अपिधाय आच्छाद्य । देदीयया पौनःपुन्येनात्यर्थं यद्दानं तया । अमुकस्य अस्य ॥ ५३ ॥

एवमवनीविनेतरि तस्मिन् वर्धमानमहिमनि वर्तमाने सकलद्वीपमणिदीपायितस्य भगवतो भानुमतः संज्ञायामुदिता समस्तनिगमनिवहसवित्र्याः सावित्र्या यवीयसी वरीयसी तपती नाम कमनीयकान्तिविजिततपनीयवर्णा परमधन्या कन्या पितृसकाशादेव विदितसकलविद्याकलापा विकचमानयौवनमणीचकद्विगुणीकृतरामणीयकाङ्गवल्लिका प्रतिदिनं प्रतिनवलतावलयविलसितविमलमणिशिलातलरुचिरसन्निवेशान् विपिनप्रदेशान् प्रवेशंप्रवेशं विहरमाणा कदाचन हिमाचलस्य विविधतरुलतानिकरनिरन्तरोल्लसितपल्लवतल्लजोल्लोचनिवार्यमाणतरणिकिरण - प्रसरणाम् अनेकनाकनारीजनाधिष्ठितामत्युन्नतामधित्यकाभुवमवाप ॥

ततश्च,

तेषु तेषु सुजातेषु शृङ्गजातेषु सा मुदा ।
विचरन्ती विशालाक्षी विजहारासहायिनी ॥ ५४ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
सप्तमः स्तबकः ॥

---

एवमित्यादि । मणिदीपायितस्य मणिदीपवदाचरतः । संज्ञायां नाम भार्यायाम् उदिता जाता । विकचमानं विकसत् । शानच् । मणीचं पुष्पं, "मणीचमग्रहस्तेऽपि पुष्पमौक्तिकयोरपि" इति वैजयन्ती । पल्लवतल्लजान्येवोल्लोचः वितानम् ॥

ततश्च,

तेष्वित्यादि । सुजातेषु सुन्दरेषु ॥ ५४ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये सप्तमः स्तबकः ।



आरूढो घोटकाग्र्यं स च नरपतिराधातुमाखेटखेलां
दोर्दण्डाहिण्डमानप्रगुणशरवरोद्दण्डकोदण्डकाण्डः ।
शौवेनाशून्यपार्श्वः कलितरुचि तदा सानुगोऽस्यैव दैवा-
न्मेनाजानेर्जनानां भयजनकमरं द्रागरंहीदरण्यम् ॥ १ ॥

तदनु तापसजनतपोविघ्ननिघ्ननिखिलसत्त्वनिवहान् निजिघृक्षु-र्विशङ्कटहरितकङ्कटविशोभमानविशालतरदोरन्तरालो मुखतीयेन पार्श्व-तीयेन च मुखरेण जालिकजालेन श्वागणिकगणेन च सह मृगसम्बद्धं पाद्धतमद्धा गवेषयन् विषमेण धावन् अम्बुदकदम्बचुम्बिशृङ्गनिकुरुम्ब-निकुम्बिताम्बराडम्बरस्य तस्य धराधरस्य निरन्तरस्थिततरुनिकरशाखा-शतान्धकारितान्तरालम् अत्युन्नतमधित्यकादेशमधिरुह्य पत्त्रिनिकर-निकृत्तनिपतितपोतिवातायुवातमृगेहामृगमृगराजमुखमृगोत्कराणां करङ्क-सङ्करसङ्कटैरतिभयङ्करं मृगयाकर्म निर्माति स्म ॥

---

अथ तपतीदर्शनस्य द्वारमुपघाटयति---आरूढ इत्यादि । घोटकाग्र्यं तुरगवरम् । आखेटखेलां मृगयालीलाम् । आहिण्डमानेन प्राप्तेन । शौवेन शुनां समूहेन । 'खण्डिकादिभ्यश्च' (पा० सू० ४-२-४५) इत्यञ् । अनण्त्वाद् 'अन्' (पा० सू० ६-४-१६७) इति प्रकृतिभावाभावः । अस्यैव तपतीविह-रणाधिकरणतया पूर्वमुक्तस्य । मेनाजानेः हिमवतः । अरंहीद् गतवान् । 'रहि गतौ' ॥ १ ॥

तदन्वित्यादि । तपोविघ्नो निघ्नोऽधीनो यस्य । निजिघृक्षुः निग्रहीतु-मिच्छुः । कङ्कटः कवचः । मुखतीयं मुखे भवम् । पार्श्वतीयं पार्श्वयोर्भवं, गहादौ 'एकमुखपार्श्वेभ्यस्तसः' (स० क० ४-३-८८) इत्युक्तत्वात्तसन्ताच्छः । 'अव्ययानां–' (वा०) इति टिलोपः । जालिका जालोपजीविनः । श्वागणिकाः श्वगणेन चरन्तः । 'श्वगणाट्ठञ्च' (पा० सू० ४-४-११) इति ठञ् । पाद्धतं पद्धतिसमूहं, 'भिक्षादिभ्योऽण्' (पा० सू० ४-२-३८) इत्यण् । गवेषयन्

इति स तु मृगयोद्यत्कौतुकाक्रान्तचेता-
स्तुरगजवविदूरीभूतदासेरवर्गः ।
विदधदथ मृगाणां घातमुत्खातभाजि
प्रतिभयविपिनान्तः सञ्चरे सञ्चचार ॥ २ ॥

तदनु दुर्गममार्गनिरर्गलभ्रमणभावितभूरिपरिश्रमः ।
उभयसृक्कनिरन्तरनिस्सरत्प्रचुरफेनमयात् प्रलयं हयः ॥ ३ ॥

ततः परेतमेतं हयमपहाय पुनरपि मृगयाकौतुकेन पदपङ्कजाभ्यामेव चङ्क्रम्यमाणो विपिन इह विहरमाणां त्रिद्युतोऽनुहरमाणाम् अप्रतिरूप-रूपगुणोपालब्धयौवनामारब्धयौवनां चाम्पेयसच्छायया स्वच्छतरतनु-च्छायया उपशल्योल्लसितवल्लीपल्लवपादपादिकं तपनीयमयमिवापादय-न्तीमखिलजनमानसानि मोदसागरान्तरापातयन्तीमापादचूडकमनीयाम्

---

मार्गयन् । विषमेण धावन् विषमे धावन् । 'प्रकृत्यादिभ्यः–' (वा०) इति तृतीया । 'समविषमाभ्यामधिकरणे'[1] । निकुम्बितः छादितः । कुम्बिः छादने । पत्रिनिकरैः शरसमूहैः । निकृत्तनिपतितानां पूर्वं निकृत्तानां पश्चान्निपतितानाम् । 'पूर्वकाल–' (पा० सू० २-१-४९) इति समासः । करङ्काः शवशरीराणि । निर्माति स्म कृतवान् ॥

इतीत्यादि । दासेरवर्गः भृत्यसमूहः । दास्या अपत्यं दासेरः । 'क्षुद्राभ्यो वा' (पा०सू० ४-१-१३१) इति ढ्रक् । घातं हननम् । उत्खातः विषमभूभागः । सञ्चरः मार्गः ॥ २ ॥

तदन्वित्यादि । भावितः प्रासः । सृक्कणी ओष्ठप्रान्ते, ततो निरन्तरं यथा तथा निस्सरन् । प्रलयं निधनम् ॥ ३ ॥

तत इत्यादि । परेतं मृतम् । चङ्क्रम्यमाणः कुटिलं गच्छन् । 'नित्यं कौटिल्ये–' (पा० सू० ३-१-२३) इति कौटिल्ये यङ् । अनुहरमाणाम् अनु-कुर्वतीम् । यौवनं युवतिसमूहः । चाम्पेयः चम्पकः । "अथ हेमपुष्पे चाम्पेय-चम्पकौ" इति वैजयन्ती । तेन सच्छायया समानच्छायया । 'समानस्य

---

1. 'समविषमादिभ्योऽधिकरणे' (स० क० ३-१-२१९) इति मुद्रितपाठः ।

अधिकमहनीयां कामपि कन्यकामेष विसयवेपविस्मृतनिमेषमवलोकयन्नन्तरिति चिन्तयामास ॥

वापी काप्यूर्ध्ववाहा शिवशिव! सुषमापूरपीयूषयूष-
स्यन्दिन्यस्यां निमग्नं सरसिजमुपरिश्लिष्टशैवालजालम् ।
किञ्चास्मिन्नञ्चिताभा कुवलययुगली दृश्यते विश्वरम्या
चित्रं चित्रं वतैवं कुहचिदपि च नो विष्टपे दृष्टपूर्वम् ॥ ४ ॥

केयं लोकाभिरामा स्फुरति बत पुरः किन्नु विद्योतितात्मा
शृङ्गाराद्वैतविद्या किमु कमलभुवो नैपुणी रूपिणी सा ।
आहो लावण्यवेणी परमिह वनितारूपमालम्बमाना
किं वा भाग्येन नृणां नयनविषयतामागता दिव्यकन्या ॥ ५ ॥

गलोऽपि यूनां निगलो मनोहरा-
वुरोरुहौ हेमसरोरुहद्रुहौ ।
विलग्नमस्यास्तनुतापदं परं
तथापि हन्तातनुतापदं बत! ॥ ६ ॥

---

च्छन्दसि–' (पा० सू० ६-३-८४) इत्यतः समानस्य इति योगविभागात् सः । वेषो व्याप्तिः । 'विष्लृ व्याप्तौ' ॥

**वापीत्यादि** । कापि वापी दृश्यत इति शेषः । ऊर्ध्ववाहा ऊर्ध्वं प्रवहन्ती । शिवशिवेत्याश्चर्ये । स्यन्दोऽस्या अस्तीति स्यन्दिनी ॥ ४ ॥

**केयमित्यादि** । शृङ्गाराद्वैतविद्या विद्योतितात्मा किन्नु । अन्यथैवं मनोलयो नोपपद्यत इति भावः । किन्नु, तुल्यार्थनिपातानां सहोक्तावप्येकार्थतैव । नैपुणी रूपिणी सेत्यनेन एतादृशस्य सौन्दर्यसारस्य लेशतोऽपि कुत्राप्यदृष्टचरत्वमुक्तम् । लावण्यवेणी वनितारूपमालम्बमानेत्यनेन तदेकारब्धत्वोक्त्या तत्प्राचुर्यमुक्तम् । भाग्येनेत्यादिना कुतोऽपि न मानुषीष्वियं रूपसम्पदुदेतीति भावः ॥ ५ ॥

**गल इत्यादि** । तनुतापदं तनुतायाः स्थानम् । अतनुम् अधिकतरं तापं ददातीत्यतनुतापदं, 'आतोऽनुपसर्गे कः' (पा० सू० ३-२-३) ॥ ६ ॥

दरोल्लसत्पेलवपल्लवाभाभरापहारे चरणौ प्रवीणौ ।
अस्या मनोज्ञौ तुलया विहीनावहो तुलाकोटियुतौ तथापि ॥ ७ ॥

विषमेषुनिषङ्गस्य सुषमां सुषमे इमे ।
विधूतकाहलीकाण्डसङ्के जङ्के निजङ्घतः ॥ ८ ॥

बहुना किमियं सरोरुहाक्षी त्रिजगल्लोचनलोभनाखिलाङ्गी ।
अधुना विधिना निधाय किं वा हृदयेऽसौ नयनातिथीकृता मे ॥९॥

एवं सञ्चिन्तयन् सोऽयमयात् स्मरशरव्यताम् ।
सापि विश्वैकरम्यं तं पश्यन्त्येवमचिन्तयत् ॥ १० ॥

को वा युवायमवनीतलपूर्णचन्द्रो
धन्यो गभीरमधुराकृतिरात्तधन्वा ।
उन्निद्रशारदसरोजदलायताक्षो
मन्ये स्वयं मदन एव गृहीतमूर्तिः ॥ ११ ॥

रम्याः कटाक्षा हसितं च रम्यं रम्यं मुखं रम्यमतीव वक्षः ।
रम्यं समस्तं वपुरेष चेतो हरत्ययस्कान्त इवेह लोहम् ॥ १२ ॥

---

दरेत्यादि । आभाभरः शोभातिशयः । तुलया सादृश्येन विहीनौ तथापि तुलाकोटियुताविति विरोधः । तुलाकोटिर्मञ्जीर इति परिहारः ॥ ७ ॥

विषमेष्वित्यादि । सुषमां शोभाम् । सुषमे रुचिरे । काहली सुषिरवाद्यविशेषः । निजङ्घतः अत्यर्थं निहतः । निघ्न(न्तौ ? न्त्यौ) इत्यर्थः । हन्तेर्यङ्लुगन्ताल्लटि तसि रूपम् ॥ ८ ॥

बहुनेत्यादि । बहुना विचारेणेति शेषः ॥ ९ ॥

एवमित्यादि । स्मरशरव्यतामयादित्यनेन तात्पर्येण तस्मिन्नेव पुनःपुनः प्रहारो द्योत्यते ॥ १० ॥

को वेत्यादि । आत्तधन्वा, 'धनुषश्च' (पा० सू० ५-४-१३२) इत्यनङ् ॥ ११ ॥

रम्या इत्यादि । लोहम् अयः ॥ १२ ॥

एवं निरूपयन्ती तं रूपयन्ती च सस्पृहम् ।
सेयमञ्चितरोमाञ्चा नम्रवक्त्राम्बुजा स्थिता ॥ १३ ॥

सोऽयं तामवगन्तुमुत्सुकतरस्वान्तोऽथ तत्सन्निधिं
मन्दंमन्दमुपेत्य मञ्जु निजगादानम्रकम्रानानाम् ।
का त्वं पल्लवपेलवाङ्गि! कृतिनः कस्यासि वा नन्दना
कस्माद् घस्मरसत्त्वसेव्यविपिनेष्वव्याकुला दीव्यसि ॥ १४ ॥

धरणिपतेरिति वाणीं तरणिसुता सा निशम्य रम्यतराम् ।
वचनं विनमितवदनं समुदा समुदाजहारैवम् ॥ १५ ॥

रम्याकार! रवेरवेहि तनयां लोकप्रदीपस्य मां
सावित्र्याः सहजास्मि भातुरपि मे संज्ञेति संज्ञा विभो! ।
नाम्नाहं तपती च संप्रति भवद्वाक्यामृतासेवना-
द्विज्ञातुं कुलनामनी तव ममात्युत्कण्ठते मानसम् ॥ १६ ॥

---

एवमित्यादि । रूपयन्ती पश्यन्ती । 'रूप रूपक्रियायाम्' । 'रूपस्य करणं दर्शनं वा रूपक्रिया' इति क्षीरस्वामी । निरूपय(न्तीति:तीति) धातूनामनेकार्थत्वाद्विचार इति माधवः ॥ १३ ॥

सोऽयमित्यादि । कृतिनः सुकृतिनः । प्रशस्तं कृतमनुष्ठितं कर्मास्यास्तीति कृती । प्रशंसायां मत्वर्थीयः । नन्दना सुता । नन्द्यादित्वाल्ल्युः, टाप् । घस्मराणि हिंस्राणि । 'सृघसि--' (पा० सू० ३-२-१६०) इति क्मरच् । दीव्यसि क्रीडसि ॥ १४ ॥

धरणीत्यादि । तरणिसुता तपती । समुदा मुदया हर्षेण सह वर्तमाना ॥ १५ ॥

रम्येत्यादि । अवेहि अवगच्छ । अवेहीति वृद्धिरवद्येति वामनसूत्रम् । संज्ञा नाम । उत्कण्ठते उत्सुकं भवति ॥ १६ ॥

सोऽप्यूचे पृथुलोचने! प्रथयतां वंशं विशालं विधोः
प्रौढानां पृथिवीभुजां परिवृढस्योदारकीर्तेरहम् ।
ऋक्षस्य प्रतिपक्षतक्षणकलादक्षस्य पृथ्वीपतेः
पुत्रः संवरणोऽस्म्यदो वनमगामाखेटखेलोत्सुकः ॥ १७ ॥

जातोऽहं पूर्णकामो वनभुवि मृगयामाचरन्नम्बुजाक्षि!
द्रागद्राक्षं यतस्त्वामयि! निखिलजगल्लोचनानन्दनाङ्गीम् ।
अप्येवं धन्यशीले स खलु पुनरहं किञ्चिदभ्यर्थये त्वां
कुर्या मां जन्मभाजां प्रथममिह तु कः श्रेयसा तृप्तिमेति ॥ १८ ॥

चलत्यलं चारुविलोचने! त्वां निशाम्य शम्याकसवर्णवर्णाम् ।
मनो ममेदं मदनीयरूपे! चन्द्रोदयादम्बु यथाम्बुराशेः ॥ १९ ॥

बालिके! त्वमसि भानुनन्दना शीतभानुकुलसम्भवोऽस्म्यहम् ।
तद्भज त्वयि निरूढसौहृदं मामनन्यजनलोलमानसम् ॥ २० ॥

---

सोऽपीत्यादि। प्रथयतां प्रख्यापयताम्। परिवृढस्य, 'प्रभौ परिवृढः' (पा० सू० ७-२-२१) इति निपातः। तक्षणं तनूकरणं, खण्डनमित्यर्थः। आखेटखेला मृगयालीला ॥ १७ ॥

जात इत्यादि। अभ्यर्थये, 'अर्थ याच्ञायां' चुरादिः। 'आ गर्वादात्मनेपदिनः' इत्यात्मनेपदी। 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इति कृदन्तात् 'तत्करोति–' इति णिचि। इह लोके ॥ १८ ॥

चलतीत्यादि। शम्याक आरग्वधः। मदयतीति मदनीयं 'कृत्यल्युटः–' (पा० सू० ३-३-११३) इति बहुलोक्तेः कर्तर्यनीयर् ॥ १९ ॥

बालिके इत्यादि। निरूढं प्रवृद्धम्। अन्यजने लोलं न भवतीत्यनन्यजनलोलं मानसं यस्य तं, यद्वा अनन्यजनेन मदनेन लोलम्। जनेर्घञि 'जनिवध्योश्च–' (पा० सू० ७-३-३५) इति वृद्धिप्रतिषेधः ॥ २० ॥

प्रीत्या प्रत्यवदच्च सा पितृपराधीनास्मि रम्याकृते!
जाने नो हृदयं च तस्य गहनं साक्षाज्जगत्साक्षिणः ।
एषा धर्मपरायणा कुलवधूवृन्देषु निन्दास्पदं
स्वातन्त्र्यं कथमङ्ग! वासरमणेरङ्गीकरोम्यात्मजा ॥ २१ ॥

रूपं लोचनचन्द्रिका त्रिजगतां कर्णे सुधाधोरणी
वाणी विश्वविमोहनौषधिरिदं शीलं च रूपोचितम् ।
धर्माणामपि हन्त मूलभवनं वंशोऽपि ते भूपते
सर्वं चैतदयि! प्रविश्य हृदयं धैर्यं धुनीते मम ॥ २२ ॥

नैवेह तातपरितोषणकर्मतोऽन्या
धन्याकृते! गतिरभीप्सितसिद्धये नौ ।
तत् त्वं समाहितमनाः करुणापयोधि-
माराधयामुमखिलाधिहरं तपोभिः ॥ २३ ॥

एवंविधमधुरवागमृतधारासम्पातान्तरितसन्तापानलं विकचवदन-कमलमेनम् "अयि महाभाग! साम्प्रतमहं पितृपरिसरमेव प्रयामि। पराधीनेयमिति पराङ्मुखो मा भूः" इत्यादिकमुदीयमानभावभेदमुदीरयन्ती पदे पदे तमेव वलितकन्धरमवलोकयन्ती व्रजन्ती सवितृ-समीपमेव समीयते स्म ॥

---

प्रीत्येत्यादि । पितृपराधीना पित्रा पराधीना ॥ २१ ॥

रूपमित्यादि । सुधाधोरणी धोरणीरिञ्छोलीशब्दौ समूहार्थौ । धुनीते, 'धूञ् कम्पने' ॥ २२ ॥

नैवेत्यादि । गतिरुपायः ॥ २३ ॥

एवमित्यादि । विकचं विकसितम् । प्रयामि गच्छामि । समीयते स्म प्राप्तवती ॥

प्राप्य च सोत्कण्ठं सा पितुरुपकण्ठं प्रणम्य पदयुगले ।
विनमितवदनसरोजा तस्थौ निष्यन्दमानकान्तिझरी ॥ २४ ॥

उद्यत्तारुण्यविद्योतिततनुसुषमामुल्लसद्भ्रूविलासा-
मुल्लोलापाङ्गलीलां दिनकृदथ निजामात्मजामीक्षमाणः ।
सौन्दर्यौदार्यशीलश्रुतजननवयोमाधुरीचातुरीभि-
स्तस्यास्तुल्यं पुमांसं कमपि च भुवने क्वाप्यपश्यन्नताप्सीत् ॥ २५ ॥

इत्थमुत्थितव्यथ एव गगनसञ्चरे सञ्चरन्नयमखिललोका-धिवासिभिरप्यलंचित्रीयमाणचित्तैः तत्रतत्रोदीयमानादरं जेगीयमानं विश्वविश्वम्भरेश्वरविकटकिरीटकोटिघटितविशदमणिमरीचिवीचि-विलसितविमलपदपल्लवस्य सकलसुरासुरदुरासदपराक्रमदुराक्रमस्य अक्षीणदाक्षिण्यानुरञ्जितनिखिलजीवलोकस्य अप्रतिरूपरूपदूरीकृत-कन्दर्पदर्पस्य सम्पादितमन्त्रसंवरणस्य संवरणस्य रसापतेरसाधारणं गुणगणमाकर्णयन्नामोदवशंवदाशयो नूनमस्मै परमधार्मिकाय भरत-कुलोत्तमायैव मम पुत्री शुभसवित्री विश्राणनीयेति विनिश्चित्य तदुपायमेव चिन्तयन्ननवरतमवतिष्ठते स्म ॥

---

प्राप्येत्यादि । "अदृष्टविषये रागो वेदना महती च या । संशोषिणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः" । कान्तिझरी कान्तिप्रवाहः । "रूपोपभोग-तारुण्यैर्योऽलङ्कारोऽङ्गसंश्रयः । सा शोभा सैव कान्तिः स्यान्मन्मथाप्यायित-च्छविः" ॥ इति भावप्रकाशः ॥ २४ ॥

उद्यदित्यादि । विद्योतिता प्रकाशिता । औदार्यं महत्त्वम् । जननं कुलम् । माधुरी माधुर्यं, "माधुर्यं चेष्टितालापस्पर्शानां स्पृहणीयता" इति भावप्रकाशः । अताप्सीत् सन्तप्तोऽभूत् । 'तप सन्तापे' सिच् ॥ २५ ॥

इत्थमित्यादि । सञ्चरो मार्गः । चित्रीयमाणमाश्चर्यमनुभवत् । जेगीयमानं पुनःपुनर्गीयमानम् । विश्वविश्वम्भरेत्यादौ परिकरः । विश्राणनीया दातव्या । तदुपायमेव चिन्तयन्निति, "अयाचितानि देयानि सर्वद्रव्याणि भारत! अन्नं विद्या तथा कन्याप्यनर्थिभ्यो न दीयते ॥" इत्युक्तत्वात् ॥

संवरणस्तु तस्यां गतायां तदीयभावदर्शनसमाश्वस्तचित्तोऽपि तदात्वोदित्वरविरहव्यथयाभिभूयमानो विवशमनास्तादृशे श्रेयसि विघ्नशतविशङ्की विविधमिति चिन्तयन् विललाप ॥

अकाण्डे मे सद्यस्समुपनतमेतत् परिणमेत्
कथं वा निस्सत्त्वं लुठति विवशं हन्त! हृदयम् ।
ध्रुवं यावज्जीवं प्रचुरपरितापाय हि भवेत्
तथाभूतं श्रेयो जगति पुरुपुण्यो हि लभते ॥ २६ ॥

समीरोऽयं मन्दो मदभरकलाः कोकिलरवाः
सरोजिन्यो माद्यन्मधुपकुलझङ्कारमुखराः ।
अमी बालाः साला अपि च विलसद्बाललतिका-
समाश्लिष्टाः कष्टं दवथुमिह पुष्णन्ति किमिदम् ॥ २७ ॥

---

संवरण इत्यादि । तदात्वे तत्काले । उदित्वरी उद्गमनशीला । विललाप, "विलापः स्यादात्मदुःखोद्भावनातत्परं वचः" इति भावप्रकाशः ॥

अकाण्ड इत्यादि । अकाण्डे अनवकाशे । काण्डोऽवसरः । सद्यः अतर्कितोपनतमेतद्दिव्यव्यपनीतोपलम्भभूतमवस्थान्तरं कथं परिणमेत् । सुख-रूपतया दुःखरूपतया वेत्यर्थः । निस्सत्त्वं दुर्बलं, किमपि निश्चेतुमशक्तम् । अत एव विवशं लुठति परिवर्तते । एवं चिन्तयन् कोट्यन्तरे हृदयं निवेशयति ध्रुवमित्यादि । ध्रुवमिति संभावनायाम् । यावज्जीवं यावज्जीवामि तावदित्यर्थः । 'यावति विन्दजीवोः' (पा० सू० ३-४-३०) इति णमुल् । उक्तमर्थं सामान्येन द्रढयति तथाभूतमित्यादि । अत्र चिन्तावेगविषादानां शबलता ॥ २६ ॥

समीर इत्यादि । दवथुं तापम् । 'टुदु उपतापे' । 'ट्वितोऽथुच्' (पा० सू० ३-३-८९) ॥ २७ ॥

करव्रातैरेतैः क्षरदुरुतुषारैरयमहो!
मभाङ्गेष्वङ्गारानमृतकिरणो वर्षति मुहुः ।
अधीयानो नूनं निखिलभुवनप्लोषपटुतां
तृतीयस्मान्नेत्रादभजदतिबाल्ये हरजटाम् ॥ २८ ॥

स्मरो रन्ध्रान्वेषी क्षिपति विशिखानेष विषमान्
व्रणग्रन्थिस्फोटं स्फुटति हृदयं मामकमिदम् ।
विशत्यन्तर्मोहो बत विवशिताशेषकरणः
परीतापस्तीव्रः प्रसरति च हालाहल इव ॥ २९ ॥

प्रलयदहनज्वालामालाकरालमिवाखिलं
क्रकचघटया किं वा चेतो ममाद्य विदीर्यते ।
तपनतनये! यावत् भस्मीभवामि न वल्लभे!
शिशिरयतरामङ्गान्यङ्गैः सुधारसशीतलैः ॥ ३० ॥

---

करेत्यादि । अधीयानः अध्ययनस्य हेतोः, अध्येतुमिति यावत् । 'लक्षणहेत्वोः–' (पा० सू० ३-२-११६) इति हेतौ शानच् । तृतीयस्मात् 'तीयस्य–' (वा०) इति सर्वनामसंज्ञाविकल्पः ॥ २८ ॥

स्मर इत्यादि । व्रणग्रन्थिस्फोटं व्रणग्रन्थिरिव स्फुटति, यथा रूढ-ग्रन्थिर्व्रणः पुनरपि स्फुटति तथा वेदनातिरेकाद् दलतीवेत्यर्थः। अत एवान्तर्मोहो विशति । वैचित्त्ये हि सति किमपि नानुभाव्यमित्यत आह परितापस्तीव्र इति । हालहलो विषभेदः ॥ २९ ॥

प्रलयेत्यादि । करालं क्रूरम् । अखिलं सर्वमपि वस्तु । क्रकचो नाम दार्वादिविदारकोऽयोविकारविशेषः । 'क्रकचोऽस्त्री करपत्रं स्यात्' इत्यमरः । यावन्न भस्मीभवामि तावत् । शिशिरयतराम् अत्यर्थं शिशिराणि कुरु ॥ ३० ॥

हाहा! प्रेयसि दुस्सहां मम दशामेनां न जानासि किं
हाहा! संवरणो गलान्तरलुठत्प्राणोऽधुना निर्दये! ।
हाहा! मे मतिमावृणोति जगतीं कृत्स्नां च घोरं तमो
हाहा! किन्तु करोम्यहं विशरणो हाहा! पतामि प्रिये! ॥ ३१ ॥

विविधं विलपन्नेवमवनावयनीपतिः ।
शिथिलीभूतसर्वाङ्गो मूर्च्छितो निपपात सः ॥ ३२ ॥

मृगयूथशरण्ये तमरण्येऽथ मृगंमृगम् ।
सानुयात्रो महामात्रस्तत्रालौकत सत्वरः ॥ ३३ ॥

अनन्तरमयमखिलमहेष्वासाग्रतस्सरमात्मनः स्वामिनमश्वरहितमनन्यमेवावन्यां निपतितं विसंज्ञमपि विलोक्य तत्क्षणापतिताक्षामशोकविक्षोभितात्मा "हन्त! निखिलजगदालम्बभूतस्यास्य किमेतदापतित"मिति ससंभ्रमं समभ्येत्य शनैः सुमुत्थाप्य अल्पेतरकवाटकल्पे निजभुजान्तरे विधुरजनपरिचरणधुरीणमतिरमुं प्रेमधाराधारयो धारयन् "देव! महानुभाव! भुवनकल्याण! भरतकुलार्णवपूर्णचन्द्र! भवतो भद्रमेव बोभवीतु । हन्त कष्टतरा तव दशा निखिलजनमनो मोहनाङ्ग

---

हाहेत्यादि ॥ 'हा विषादशुगार्तिषु' इत्यमरः । विशरणः अन्यरक्षितृरहितः ॥ ३१ ॥

विविधमित्यादि । मूर्च्छास्य सञ्जाता मूर्च्छितः । मूर्च्छा मोहः । 'तदस्य सञ्जातं–' (पा० सू० ५-२-३६) इति इतच् ॥ ३२ ॥

मृगेत्यादि । मृगंमृगं अन्विष्यान्विष्य । सानुयात्रः अनुयातॄणां समूह आनुयात्रं, तेन सह वर्तमानः । अलौकत प्राप्तवान् ॥ ३३ ॥

अनन्तरमित्यादि ॥ अग्रतस्सरं पुरस्सरं, 'पुरोऽग्रत–' (पा० सू० ३-२-१८) इति टच् । तत्क्षणं झटिति । "तत्क्षणैकपदे समे" इति निघण्टुः । प्रेमभारस्य धारयो धर्ता । मोहनाङ्ग मित्रनन्दन, नन्दयतीति नन्दनः । असौ तव दशा निखिलमनस्तपतीत्यन्वयः । अत्र मित्रनन्दना सूर्यसुता तपती असावित्य-

मित्रनन्दनासौ तपतीति भाषिते, क्वासाविति सहसैव सकलदिक्षु विक्षिप्ताक्षमपि सपद्येवापद्यमानमोहम् ईहाविहीनमेनं विलोक्य विदोदूयमानमना "हन्त! महाभाग! समाश्वसिही"ति मुहुर्मुहुरुदाजहार ॥

अश्रुकणमिश्रमुखमश्रुतगिरं तं
वीक्ष्य लघु विश्लथितविश्वधृतिबन्धम् ।
अन्तरचिचिन्तदिति मन्त्रिवृषभोऽसा-
वन्तरहितान्तरशुचान्धतरचेताः ॥ ३४ ॥

आश्वस्तोऽप्ययमाश्वस्तबोधः स्वामी ममाजनि ।
जातमेतद्वचोजातमरण्यरुदितं बत! ॥ ३५ ॥

विद्यानां पारदृश्वा प्रतिभटपटलीकक्षकल्पान्तवह्नि-
र्निर्धूताम्भोधिगम्भीरिममतिमहिमा सर्वधर्मैकधाम ।
सर्वासां च प्रजानां पितृवदवनकृन्मेदिनीपार्वणेन्दुः
सोऽयं वीराग्रयायी कथमगमदिमां हन्त! दुःस्थामवस्थाम् ॥३६॥

---

नेनोक्तमिति मत्वा कासावित्युक्तम् । क्वासौ तपतीति शेषः । विदोदूयमानम् अत्यर्थं दूयमानम् । समाश्वसिहि 'श्वस प्राणने' । 'रुदादिभ्यः सार्वधातुके—' (पा० सू० ७-२-७६) इतीट् ॥

अश्रिवत्यादि । लघु शीघ्रम् । अचिचिन्तत् चिन्तितवान् । अन्तरहितया आन्तरशुचा मानसेन दुःखेन अन्धतरं चेतो यस्य । "इन्दुवदना भजसनैः सगुरुयुग्मैः" ॥ ३४ ॥

आश्वस्त इत्यादि । आशु अस्तबोधः त्यक्तबोधः । वचोजातं वचनसमूहः । अरण्यरुदितं निष्फलमित्यर्थः ॥ ३५ ॥

विद्यानामित्यादि । पारदृश्वा पारं दृष्टवान् । 'दृशेः क्वनिप्—'(पा०सू० ३-२-९४) इति भूते क्वनिप् । पर्वणि दृश्यते पार्वणः । 'शेषे—' (पा० सू० ४-२-९२) इत्यण् ॥ ३६ ॥

हन्ताऽयं क्लान्तवाहोऽप्यतितरमृगयालोभतः काननान्ते-
ष्वाधावन् क्षुत्पिपासाश्रमत इह दशां नूनमेनामयासीत् ।
एवं निर्णीय तूर्णं शिशिरतरझरीशीकरैः शीर्षदेशे
सिञ्चत्यस्मिन्नुदञ्चत्स्मृतिरथ तरसा प्रोत्थितः पार्थिवोऽसौ ॥ ३७ ॥

अथ महितलोत्थायं महितविनयं विहितचरणाभिवन्दनममन्दानन्दविकचवदनारविन्दममुं निजसचिवमलोकयन्नविलम्बमेव धैर्यमवलम्बयन्नयं पृथिवीपतिराचावहित्थमित्थमकथयत् ॥

राज्यं प्रति विसृज्यैतद्वसुमित्रानुयात्रकम् ।
अनन्यः सन्निधेह्यत्र गोत्रे त्वं प्रमदास्पदे ॥ ३८ ॥

बीज्यमेनं नियुज्यैव प्राज्यभावं स भूपतिः ।
स्वयं विचारयामास विरहातुरमानसः ॥ ३९ ॥

पाटीरपङ्कशिशिरैरतिपेलवैर्या
गात्रैः सुधारसझरीमसिचद् दृशोर्मे ।
सा हन्त ! सन्तपति सम्प्रति मामपत्ये
स्वां तापशक्तिमतनोत् किमु तिग्मभानुः ॥ ४० ॥

---

हन्तेत्यादि । क्लान्तवाहः मृताश्व इत्यर्थः ॥ ३७ ॥

अथेत्यादि । महितलोत्थायं महितलात् त्वरितमुत्थाय 'अपादान—' (पा० सू० ३-४-५२) इति णमुल् । महि इति ङीषभावे रूपम् । आलम्बयन् आलम्बनं कुर्वन् । अवहित्थाकारगुप्तिः ॥

राज्यमित्यादि । आनुयात्रं अनुयातृसमूहम् । अनन्यः असहायः । गोत्रे शैले । प्रमदस्यास्पदे । प्रमदाया इत्यपि स्फुरति ॥ ३८ ॥

बीज्यमित्यादि । "बीज्यस्तु कुलसम्भवः" इत्यमरः । प्राज्यभावं प्रचुरभक्तिम् ॥ ३९ ॥

पाटीरेत्यादि । पाटीरपङ्कः चन्दनपङ्कः ॥ ४० ॥

आयातु यातु भवती तपतीह चास्ता-
मित्थं सदा निगदिताजनि सा पितृभ्याम् ।
सत्यं विधातुमधुना वचनं तदेषा
मय्येवमाचरति नूनमनूनरागे ॥ ४१ ॥

किं वा विदध्यां कमिहाभिदध्यां कं वा भजेयं क्व नु वा व्रजेयम् ।
विनानया पल्लवपेलवाङ्ग्या क्षणं पुनः संवरणो न जीवेत् ॥ ४२ ॥

केयं विचिन्ता तरसा तदुक्तां त्रयीतनोः प्रीतिकरीं तपस्याम् ।
अयं विधास्ये निजहस्तसंस्थं गवेषयेत् को मणिमापणेषु ॥ ४३ ॥

इति विपश्चितामपश्चिमो विनिश्चित्य विहितनिजनिदेशं सदेशमापात्यममुममात्यम् "अहमपत्यार्थे भगवतो भानुमतो वरिवस्यां विधास्ये । त्वमपि यावदवसानं प्रतिगिरमिह क्वचित् प्रतिपालय" इत्यधिकादरमादिश्य धात्रीपतिरत्र धरित्रीधरे क्वचन पवित्रतरे धरित्रीतलेऽयमुभयबाहु शिरसि विहिताञ्जलिरवतिष्ठमानः संश्रितजनाभीष्टदायिनमखिलमुनिवरिष्ठं वसिष्ठमात्मपुरोधसं मनसा संस्मरन् कृपामृतसरस्वन्तं विवस्वन्तं तरसा प्रसिषादयिषुराहितेन्द्रियविनीतिः केवलतोयपीतिस्तातपीति स्म ॥

---

आयात्वित्यादि ।.सा पितृभ्यां मातापितृभ्याम् । तपति! आयातु, तपति! इह आस्ताम् इति सदा तपति! तपति! इति आभाषिताजनि । अधुना तद् वचनं सत्यं विधातुं एषा मयि एवमाचरति तपति सन्तापं करोतीत्यर्थः ॥ ४१ ॥

किमित्यादि । अभिदध्यां ब्रूयाम् ॥ ४२ ॥

केयमित्यादि । गवेषयेत् मार्गयेत् । 'गवेष मार्गणे', चुरादिः ॥ ४३ ॥

इतीत्यादि । सदेशमापात्यं सविधमागतम् । अपत्यार्थे पुत्रोत्पत्त्यर्थं भानुमतो वरिवस्यां विधास्ये । भानुमतः अपत्यार्थे तपतीनिमित्तमिति च स्फुरति । प्रतिगिरं गिरौ । 'गिरेश्च सेनकस्य' (पा०सू० ५-४-११२) इति टच् समासान्तः । धरित्रीधरे पर्वते । उभयबाहु क्रियाविशेषणम् । उभाभ्यां बाहुभ्यामित्यर्थः । कृपामृतस्य सरस्वन्तं सागरम् । प्रसिषादयिषुः प्रसादयितुमिच्छुः । पीतिः पानम् । तातपीति स्म अत्यर्थं तपस्तप्तवान् । यङ्लुक् ॥

एवं तातप्यमाने क्षितिभृति हृदयं विश्ववेदी तदीयं
विज्ञायोल्लङ्घ्य मार्गं सपदि मुनिवरिष्ठो वसिष्ठो दविष्ठम् ।
प्राप्तः सप्ताश्वपार्श्वं व्यनमदुरुतपोधाम सोऽनूनधामा
धावन्तं योजनानां त्रिशतमपि चतुष्षष्टिमेतन्निमेषात् ॥ ४४ ॥

अस्तोदग्रगदस्तोममस्तोककरुणास्पदम् ।
हस्तौ स मस्तके कुर्वन्नस्तौदस्मुमृषिस्ततः ॥ ४५ ॥

आद्यायाचिन्त्यधाम्ने निगमनिवहगम्याय नम्याय लोकै-
श्शश्वन्निश्शेषविश्वोदयविलयपरित्राणदत्तादराय ।
कारुण्यार्द्राय विद्रावितशमलशतायार्दनायामयाना-
मश्रान्तं संश्रितानामभयद! भगवन्! भानुमालिन्! नमस्ते ॥४६॥

महत्तमतमस्तोमनिकर्तन! विकर्तन! ।
नमो नमस्थितपदे कन्मषोन्मथनाय ते ॥ ४७ ॥

---

एवमित्यादि । वसिष्ठं, वसुशब्दो नैर्मल्यगुणवचनः । प्रशस्तवचन इत्यन्ये । तथातिशयेन वसुर्वसिष्ठ इति हरदत्तमिश्रः । दविष्ठं अतिशयेन दूरम्, इष्ठनि 'स्थूलदूर—' (पा० सू० ६-४-१५६) इति यणादिपरं लुप्यते, पूर्वस्य गुणश्च । तपोधाम तपसः धाम गृहम् । अनूनं धाम यस्य सः अनून-धामा । निमेषाद् योजनानां त्रिशतं चतुष्षष्टिमपि धावन्तम् । "योजनानां चतुष्षष्टिं निमेषात्त्रिशतं तथा । अश्वैर्गच्छति नित्यं यस्तत्पार्श्वस्थोऽब्रवीदिदम् ॥" इति श्रीमहाभारते । अनेन पार्श्वगमननमनस्तवनानामत्यन्तदुस्साधत्वमुक्तम् । अनूनधामेति अत्रोपपादकम् ॥ ४४ ॥

अस्तेत्यादि । गदा व्याधयः । अस्तौत् स्तुतवान् ॥ ४५ ॥

आद्येत्यादि । गम्याय ज्ञेयाय । सर्वे गत्यर्थाः ज्ञानार्थाः । शमलशतं पापसमूहः । आमयानां अर्दनाय विनाशकाय ॥ ४६ ॥

महत्तमेत्यादि । निकर्तनः छेदकः । नमस्यितौ पूजितौ पादौ यस्य तस्मै । 'नमोवरिवः—' (पा० सू० ३-१-१९) इति क्यजन्तात् क्तः । उन्मथन इति बाहुलकात् कर्तरि ल्युट् ॥ ४७ ॥

इति पनायितेन तेन प्रसादमासेदुषा ज्योतिषामीश्वरेण दयाविष्ट-हृदयेन हृदयाविष्ठमभीष्टं वरं वृणीष्वेत्यादिष्टो वसिष्ठस्तपतीनामधेयामति-रुचिररूपधेयां तदीयां तनयामात्मैकशरणस्य संवरणस्यार्थे प्रार्थयाञ्चक्रे ॥

इत्यर्थनामस्य सदार्थ्यमानां स्वेनैव शृण्वन्नरुणो बभाषे ।
विमृग्यमाणा परमौषधिर्मे पदाग्रलग्नेति परीतमोदः ॥ ४८ ॥

राजा संवरणः सुधाकरकुलोत्तंसो विवोढा मुने !
त्वं तावद्यमिनां वरो वरयिता साक्षात्सुतो वेधसः ।
दातव्या नवयौवना पुनरियं कन्या च किन्नाम भो
धन्यात्मन्नवशिष्यते तदधुना बालेयमादीयताम् ॥ ४९ ॥

इति स निजतनूजां भानुमानानताङ्गी-
मदित मुदितचेतास्तापसोत्तंसहस्ते ।
स च नृपतिसदेशं द्वादशाहातिवाह्य-
व्रतचरणसमाप्तावाससवानाप्तकामः ॥ ५० ॥

---

इतीत्यादि । पनायितेन स्तुतेन । 'गुपूधूप–' (पा० सू० ३-१-२८) इत्यायः । 'पण व्यवहारे स्तुतौ च । पन च' । रूपमेव रूपधेयम् । आत्मा एकः शरणं यस्य आत्मैकशरणः । संवरणस्यार्थे संवरणनिमित्तम् ॥

इतीत्यादि । स्वेनैव आत्मनैव अर्थ्यमानाम् । विमृग्यमाणा अन्विष्य-माणा परमौषधिः । पदाग्रलग्नेति निरूप्य परीतमोदः ॥ ४८ ॥

राजेत्यादि । वरयिता प्रार्थयिता । 'वर ईप्सायां' चुरादिरदन्तः । साक्षाद् अव्यवधानेन ॥ ४९ ॥

इतीत्यादि । अदित दत्तवान् । 'स्थाघ्वोरिच्च' (पा० सू० १-२-२७) इतीकारः । 'ह्रस्वादङ्गात्' (पा० सू० ८-२-२७) इति सकारलोपः । द्वादश अहानि द्वादशाहाः । 'राजाहः–' (पा० सू० ५-४-९१) इति टच् समासान्तः, तैः अतिवाह्यं समाप्यम् ॥ ५० ॥

रहितं मदेन सुहितं स्वधर्मतः
स्वहितं हृदेकनिहितं विधित्सुकम् ।
सहितं मुदालमहितं वृषद्विषां
स हि तं ददर्श महितं महीपतिः ॥ ५१ ॥

पश्चादस्य च विश्वमोहनतनुं विद्युल्लतोद्योतिनी-
मायान्तीमुदितोरुसम्मदभरामानम्रकम्रानननाम् ।
लोलापाङ्गनिरीक्षितैर्निजगले नीलाब्जमालामिव
न्यस्यन्तीं निभृतं दिनेशतनयामालोकयामास ताम् ॥ ५२ ॥

प्राप्य तं तपसां राशिं तरसा स रसाधिपः ।
नत्वेह स्थितवान् भक्तिभारावनतकन्धरः ॥ ५३ ॥

एवं सन्तिष्ठमानं पुरत इह गुरोः पूरुवंशावतंसं
तन्वी स्वावाप्तिहेतुव्रतचरणपरिक्षीणमक्षीणकान्तिम् ।
गूढोद्यन्मन्दहासाङ्कुरमधुरमुखाम्भोजमुद्वेलरागा-
दात्मानं सा दृशैव प्रतिमुहुरुपगूहन्तमालोकतैनम् ॥ ५४ ॥

आपादचूडं प्रमदा तदासीदापूर्यमाणा पुलकप्रपञ्चैः ।
लब्धान्तरानङ्गनिरन्तरालनिखातनाराचशताचितेव ॥ ५५ ॥

---

रहितमित्यादि । स्वधर्मतः सुहितं स्वधर्मतृप्तम् । विधित्सुकं विधातु-मिच्छुम् । वृषद्विषां धर्मद्विषाम् अहितम् । "सजसा जगौ भवति "मञ्जुभाषिणी" ॥ ५१ ॥

पश्चादित्यादि । निभृतं गूढं न्यस्यन्तीमिव ॥ ५२ ॥

प्राप्येत्यादि । रसाधिपः नृपः । स्थितवान् स्थितः । भक्तिभारावनत-कन्धरः भक्तिभारेण अवनता कन्धरा यस्य ॥ ५३ ॥

एवमित्यादि । प्रतिमुहुः मुहुर्मुहुः । आलोकत अपश्यत् ॥ ४४ ॥

आपादचूडमित्यादि । सर्वेष्वङ्गेष्वित्यर्थः । लब्धान्तरः लब्धा-वसरः ॥ ५५ ॥

तदाननेन्दुनिष्यन्दिमृदुलस्मितचन्द्रिकाम् ।
चकोरीव चकोराक्षी पायंपायमियं स्थिता ॥ ५६ ॥

वाचं वाचंयमोऽसावथ तमचकथद्वत्स! सिद्धव्रतोऽयं
कालः क्षेमङ्करस्ते नियतमुपयमे तद्भवान् पावितात्मा ।
शैलेऽस्मिन्नेव गौरीपितरि वरगुणाढ्यङ्करण्यां धरण्यां
गृह्णीतां पाणिमस्याः श्रुतिगदितसरण्या तरण्यात्मजायाः ॥ ५७ ॥

अनन्तरं स वसुन्धरापतिररुन्धतीजानेरभिधामवधार्य परमादरं चरणारविन्दयोरभिवन्द्य निखिलजगदात्मानं द्वादशात्मानमपि विशद-भक्तिरसार्द्रया धिया संस्मरन्नस्मिन्नेव गिरिवरिष्ठे विशिष्टे दिष्टोत्तमे तदुपदिष्टेन विधिना विधिवदेव तां चित्रभानोः पुत्रीं चित्रभानोः पुरस्तादुपायंस्त ॥

ततश्च;

भक्ताभिप्रेतदानप्रवणतरमनस्यादरादेवमेतद्
दुस्साधं साधयित्वा पुरुमहसि वसिष्ठे प्रतिष्ठासमाने ।
हन्तायं गन्तुकामः किमु निखिलजगद्बन्धुरित्याकुलो द्रा-
गभ्येत्याभ्याशमस्य प्रचुरतरशमस्याभ्यभाणीत् स वाणीम् ॥ ५८ ॥

---

तदित्यादि । चकोर इव अक्षिणी यस्याः सा । पायंपायं पीत्वापीत्वा ॥ ५६ ॥

वाचमित्यादि । वाचंयमो मुनिः । 'वाचि यमो व्रते' (पा० सू० ३-२-४०) इति खच् । अचकथत् उक्तवान् । क्षेमं करोतीति क्षेमङ्करः । उपयमे विवाहे । वरगुणा, अत एवाढ्यङ्करणी च आढ्यङ्करणभूता । श्रुति-गदितसरण्या वेदोदितेन मार्गेण ॥ ५७ ॥

अनन्तरमित्यादि । अभिधां वाचम् । द्वादशात्मानं सूर्यम् । दिष्टोत्तमे श्रेष्ठे मुहूर्ते । चित्रभानोः सूर्यस्य पुत्रीं चित्रभानोः पुरस्ताद् अग्निसाक्षिकं, "सूर्यवह्नी चित्रभानू" इत्यमरः । उपायंस्त उदूढवान् ॥

ततश्च;

भक्तेत्यादि । प्रतिष्ठासमाने गन्तुमिच्छति । अभ्यभाणीद् अवोचत् । अत्राकुल इत्यनेन राज्ञो वनविहरणे गुर्वनुग्रहलिप्सा द्योत्यते । कञ्चित्काल-

शश्वत्संश्रितलोकशोकशमनप्रोद्युक्तचित्ताधुना
को वा ते व्यवसाय एष भगवन्! कारुण्यवारांनिधे! ।
कश्चित्कालमलंकुरुष्व विपिनक्षोणीमिमां मे मनः
पातुं कौतुकि वाङ्मयीं नवसुधामास्येन्दुनिष्यन्दिनीम् ॥ ५९ ॥

निस्सीमोद्यन्निरुपमतपोदीप्तिसंवीतमूर्ते!
राज्यं प्राज्यं वसु वसुमतीदुर्लभं वल्लभाश्च ।
बन्धुव्रातो वरमपि पुरं कृत्स्नमेव त्वदीयं
मत्संबद्धं तदभिरुचिते योजयास्मान् स्वकीयान् ॥ ६० ॥

एवमनल्पभक्तिभारोपरुद्धगलतया कथंकथमपि वदन्तं पदान्ते नमन्तमेनं विहितविधुरजनमैत्राचरणः स मैत्रावरुणिः करुणातिशयमसृणाशयः प्रणताशयवेद्यो भूरितरादरमिदमनुशशास ॥

स्वस्थाने स्थापितानां विधिवदनुदिनं भूमिदेवादिकानां
वर्णानां यच्चतुर्णामवनमवनिपानां स धर्मो विशुद्धः ।
स त्वं सन्तिष्ठमानो नृवर! सुमनसां विष्टपे वा यथेष्टं
राष्ट्रे वा कानने वा सततमवहितात्मा तमेवानुतिष्ठ ॥ ६१ ॥

---

मलंकुरुष्व विपिनक्षोणीमित्यनेन अभिरुचित इत्यनेन च एतदेव स्पष्टयिष्यते ॥ ५८ ॥

शश्वदित्यादि । व्यवसायः अध्यवसायः ॥ ५९ ॥

निस्सीमेत्यादि । स्वकीयान् आत्मीयान् । 'प्रहादिभ्यश्च' (पा० सू० ४-२-१३८) इति छे 'स्वपरजनदेवानां कुक् च' (स० क० ४-३-९०) इति कुगागमः ॥ ६० ॥

एवमित्यादि । विहितविधुरजनमैत्राचरणः सर्वपीडाविनाशक इत्यर्थः । मैत्रावरुणिः वसिष्ठः । वेदयो ज्ञाता ॥

स्वस्थान इत्यादि । विधिवत् सङ्करादिकं विना । अवहितात्मा सावधानः सन् । तदभिप्रायवेदनात् कानने वेत्युक्तिः ॥ ६१ ॥

---

* 'वराज्ञां कुक् च' इति मुद्रितसरस्वतीकण्ठाभरणपाठः ।

कल्पान्तात्युग्रतिग्मद्युतिपरिभवदः शश्वदूष्मायमाणो
यौष्माकीणः सुविस्मापितसकलसुरेशः प्रतापाश्रयाशः ।
आस्माकीनेन शेश्वीयितपरमतपोवायुना प्रेर्यमाणो
नित्यं प्रत्यर्थिपृथ्वीपतिविततवनीं सर्वतो वर्वृधीतु ॥ ६२ ॥

पुत्रः पूरुकुलोत्तंसो भूयान् भूयाद् गुणोत्करैः ।
साधयाम्यधुना साधो! सेधतात् सततं शुभम् ॥ ६३ ॥

इत्थं मनोरथमहोदधिपारभूमिं
प्रापय्य भूमिपमुदित्वरभूरिमोदः ।
आशीभिरेनमभियोज्य मुहुर्नमन्त-
मामन्त्र्य च स्वनिलयं प्रति स प्रतस्थे ॥ ६४ ॥

अनन्तरमनुपाधिकप्रणयभारादधिकादरमनुयान्तं निजं तमन्ते वसन्तं निशाम्य पुनरपि वात्सल्यातिशयसार्द्रतराशयोऽलमाशास्य सान्त्ववचसा कथमपि निवर्त्य मुनिपुङ्गवोऽयमयाम्बभूव ॥

---

कल्पान्तेत्यादि । ऊष्मायमाणः ऊष्माणमुद्वमन् । यौष्माकीणः युष्मदीयः । आस्माकीनमस्मदीयं, 'युष्मदस्मदोः—' (पा० सू० ४-३-१) इति खञ् । 'तस्मिन्नणि च—' (पा० सू० ४-३-२) इति युष्माकास्माकादेशौ । प्रताप एवाश्रयाशोऽग्निः । शेश्वीयितः अत्यर्थं प्रवृद्धः । वनीं सर्वतः, 'उभसर्व—' (वा०) इति द्वितीया । वर्वृधीतु अतितरां वर्धताम् ॥ ६२ ॥

पुत्र इत्यादि । भूयान् अतिशयेन बहु । 'बहोर्लोप—' (पा० सू० ६-४-१५८) इति ईयस ईकारस्य लोपो बहोर्भूभावश्च । साधयामि गच्छामि । त्वं शुभं सेधतात् प्राप्नुयात् । मध्यमपुरुषः । 'तुह्योः—' (पा० सू० ७-१-३५) इति ह्वेस्तातङ् । 'षिध गत्याम्' ॥ ६३ ॥

इत्थमित्यादि । प्रापय्य गमयित्वा । 'ल्यपि लघुपूर्वात्' (पा० सू० ६-४-५६) इत्ययादेशः ॥ ६४ ॥

अनन्तरमित्यादि । अनुपाधिकः अहेतुकः । सार्द्रतरः अतिशयेन सार्द्रः । आशास्य आशिषं कृत्वा । आङः 'शासु इच्छायाम्' । अयाम्बभूव जगाम ॥

अथ पृथिवीपतिरसौ निजमनोरथानुकूलादसीयवचनामृतसेवनामोदितहृदयारविन्दोऽपि तदीयवियोगेन मनागिव विमनाः क्षणमात्रमत्रावतिष्ठते स्म ॥

तदनु मनुजनाथः शैलनाथं प्रहृष्य-
त्सुरमिथुनसनाथं सैष मेनासुनाथम् ।
कुसुमितनववल्लीश्लिष्टसालं च दृष्ट्वा
सचिवममुमुपाहूयैवमूचे रिरंसुः ॥ ६५ ॥

कान्तामिमां वनगतां श्रियमार्य! भोक्तुं
काङ्क्षत्यलं कमपि कालमिदं मनो मे ।
स त्वं समेत्य नगरीमवधानपूर्व-
मुर्वीमिमामनुदिनं परिपाहि सर्वाम् ॥ ६६ ॥

तदनु निशमितनिजस्वामिनिदेशः सर्वधुरीणः सोऽयममात्यसत्तमो "देव! यथानुशिष्टमखिलमप्यनुतिष्ठामि । मय्यधिष्ठापिता युष्मदाज्ञैवेयं विष्टपत्रयमपि परित्रातुमीष्टे, तदनुपरोधमनुभूधरमियं वनश्रीरनुभूयताम्" इत्युदीयमानविनयमुदीर्य तदीयपदारविन्दयोरभिवन्द्य दुर्वहसर्वराज्यभारसमुद्वहनसमुद्योजितोऽपि अचलमतिरेव ततः पुरीमरंहीत् ॥

---

अथेत्यादि । मनागिव किञ्चिद् । विमनाः दुःखित इत्यर्थः ॥

तदन्वित्यादि । स एष इति छेदः । 'सोऽचि लोपे चेत्—' (पा० सू० ६-१-१३४) इति सुलोपः । मेनासुनाथं मेनाप्राणवल्लभम् । रिरंसुः रन्तुमिच्छुः ॥ ६५ ॥

कान्तामित्यादि । वनगतां कान्तां मनोहरामिमां श्रियं भोक्तुमिमां वनलक्ष्मीं अनुभवितुं वने विहर्तुमिति यावदिति वाच्यः । इमां कान्तां प्रियामनुभोक्तुमित्यान्तरः ॥ ६६ ॥

तदन्वित्यादि । सर्वधुरीणः । "स तु सर्वधुरीणः स्याद्यो हि सर्वधुरावहः" इत्यमरः । ईष्टे शक्ता भवति । अनुभूधरं भूधरे । अरंहीत् प्राप्तवान् ॥

इति गदितवति गतवति सचिवसत्तमे धरित्रीपतिः कृतकृत्यतया विविक्ततया च द्विगुणोन्मिषितमन्मथविलासः शनैरस्या रणरणिका-गृहीतहृदयाया रहसि निजावलोकनादधिकाकुलाया विनमितवदन-कमलाया धन्येतरजनदुर्लभाया वल्लभायाः परिसरं सरसमभिसरन् "अयि प्रेयसि! किमेवं व्याकुलासि भृशं विस्मयप्रदेऽस्मिन् प्रदेशे। भृशं प्रसारये"ति कुसुमविसरप्रसरदामोदभरसुभगतरवातपोतापातसुरभिलं विमलतलं कञ्चन कन्दरोदरोद्देशं मन्दमन्दमुपानीय, तत्र च द्वारो-पान्तनिरन्तरनिपतदरीणझरीनिरीतशीकरव्यतिकरशीतले ललिततमे मृदुलमणितलिमे "सुतनु! सादरमाकलयास्य सुकुमारता"मिति कराम्बुज-मवलम्ब्योपवेश्य स्वयमपि स देशे शनैरुपविवेश ॥

आलोकि नालोकितया तयाय-
मभाषि नाभाषितया प्रियोऽपि ।
तथापि सा तस्य मनो जहार
रम्यं हि रम्यं खलु सर्वथापि ॥ ६७ ॥

पुनरयमशनैराानुकूल्यापादनाशालीनतया विवशमनाः शालीन-तयाकुलाकुलामिमां सरसमिदमुदीरयामास ॥

---

इतीत्यादि । मतिः मत् । सम्पदादित्वात् क्विप् । मथ्नातीति मथः पचाद्यच् । मतो मथः मन्मथः । रणरणिका भयादीनामनुभावः कश्चिन्मनोविकारः । 'हृल्लेखो रणरणकोऽपी'ति वैजयन्ती । अरीणा अक्षीणा । मणितलिमे रत्नस्थले । "तलिमं कुट्टिमे तल्पे" इति वैजयन्ती ॥

आलोकीत्यादि । आलोकि आभाषीति कर्मणि लुङ् । सर्वथापि अनानुकूल्यप्रतिकूलाचरणादिष्वपि ॥ ६७ ॥

पुनरित्यादि । आनुकूल्यापादनाशायां लीनतया शालीनतया लज्जि-ततया ॥

अयि तपति! सुजाते! त्वत्कृते क्लेशजातं
यदिह सुबहु जातं साम्प्रतं तत् समस्तम् ।
मम सुखमयमासीद्यत्तवेदं मुखाब्जं
धृतरुचि परिपश्यन् मोहनं मोमुदीमि ॥ ६८ ॥

वलभिदुपलजालैरेधमानान्धकारे
वरतनु! यदिहैवं व्याकुला निर्जनेऽपि ।
विवशयति तदेतन्मे मनस्तत् कटाक्षै-
र्मृदुहसितसुधार्द्रैः सिञ्च मां चञ्चलाक्षि! ॥ ६९ ॥

केयं ते भीरु! शङ्का रहसि परिजने तावकीनेऽप्यमुष्मि-
न्नेणीशावाक्षि! वाणीमपि मम वचनैर्योजयेः कीरवाणि! ।
मामा वामाङ्गि! वामा भव कुचयुगलीमाबुभूर्षत्युरो मे
बाहानालीं मृणालीवलयमृदुतरां कण्ठकाण्डोऽपि कान्ते! ॥७०॥

श्रुतियुगमिति हृद्यैरुक्तिपीयूषयूषै
रहसि शिशिरयित्वा कञ्चुके स्पृश्यमाने ।
विवशितमति मामेत्यालपन्तीमपीमा-
मुदितपुलकजालां वीक्ष्य मोदं प्रपेदे ॥ ७१ ॥

---

अयीत्यादि। सुजाते! सुन्दरि! । धृतरुचीति भक्तिस्थानीयत्वादुभयत्रापि सम्बध्यते । मोमुदीमि अतीव हृष्टो भवामि ॥ ६८ ॥

वलभिदित्यादि । वलभिदुपला इन्द्रनीलाः ॥ ६९ ॥

केयमित्यादि । आबुभूर्षति आभर्तुमाभरणं कर्तुमिच्छति ॥ ७० ॥

श्रुतीत्यादि । शिशिरयित्वा शीतलीकृत्य । कञ्चुके गात्रिकायां स्पृश्यमाने मामेत्यालपन्तीमपि । उदितेत्यनेन 'अभ्यर्थ्यमानापि नातिविवृता स्यादि'ति वात्स्यायनोक्तं सूच्यते । पुलकोद्भेदेनान्तरूढरागत्वप्रतीते-र्मोदः ॥ ७१ ॥

अङ्के पङ्केरुहाक्षीमवनतवदनामुल्लसद्गूढहासा-
मेनामावेश्य पश्यन् कलितरुचि मुखं मन्दमुन्नाम्य रम्यम् ।
आचुम्बन् नीतमंसे कथमपि निभृतं मञ्जुलां वेपमाना-
मालिङ्गन्नङ्गवल्लीं निजमिह सफलं जन्म मेने सुजन्मा ॥ ७२ ॥

सकुतुकमतिगूढं कान्तमालोकयन्ती
कथमपि कलयन्ती मन्दमन्दोपगूढम् ।
अरमरमत बाला रागवेगेन तुन्ना
प्रकृतिसुभगलज्जाभीतिभाराकुलापि ॥ ७३ ॥

एवमनुकूलतामुपगतयानया सह मृदुलमृदुलैरनल्पैस्स्वैर-जल्पितैः परस्परपरिमेलितवदनकमलोरुयुगलोरःस्थलैरविश्लथनातियत-मानबाहुलतिकैराश्लेषशतै रागवेगादहमहमिकया वितन्यमानैर्वदननयना-द्यालम्बनैराचुम्बनैः, किं बहुना, तदातदा विशिष्टमदनदेशिकोपदिष्टैः शशप्लुतमयूरपदमणिमालाविन्दुप्रवालमणिप्रभृतिभिरधिकसुभगम्भावुकै-

---

अङ्के इत्यादि । मुखमुन्नाम्य, "घञन्तात् तत्करोतीति णिचि क्त्वो ल्यबि"ति माधवः । "मितां ह्रस्व इत्यत्र वेत्यनुवृत्त्या व्यवस्थितविकल्पत्वात् क्वचिद् विकल्पः । संक्रामयति उत्क्रामयति उन्नामयती"ति सर्वस्वे ॥ ७२ ॥

सकुतुकमित्यादि । कलयन्ती कुर्वती । उपगूढमाश्लेषम् ॥ ७३ ॥

एवमित्यादि । वदननयनाद्यालम्बनैरिति । "शिरो ललाटं वदनं कपोलं वक्षोऽक्षिणी पादतले कराग्रे । नाभिश्च गुह्यं च दशोपदिष्टस्थानानि शास्त्रे परिचुम्बनस्य ॥" इति कामशास्त्रे । तदातदेत्यनेनाक्रमत्वं सूच्यते । तथा च वात्स्यायनः—"शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रमः ॥" इति । शशप्लुतमयूरपदमणिमालाविन्दुप्रवालमणि-प्रभृतिभिः । "स्तनस्य सन्निकृष्टानि प्रत्येकं कुटिलानि च । पदानि नखरेखाणां शशप्लुतमुदाहृतम् ।" "कुचाग्रे तु नखै रेखा चूचुकाभिमुखा यदि । नखक्षतं बुधैरुक्तं मयूरपदकं तु तत् ॥ शिताग्रैर्दशनैस्सर्वैर्युगपद्दंशनात् कृता । विन्दुमालेव मुनिभिर्मणिमालेति सोदिता ॥ मध्येधरं रदद्वन्द्वनिर्देशेनोपपीडनात् । जातं

रैभपुरुषायितादिभिरानन्दैकनिलीयमाननिखिलकरणैरखिलकरणैरप्यतिकुतुकमनवरतमभिरेमे ॥

ततश्च;

सकलकालविलसमानकुसुमजालवलमानमृदुलगामिपवमानदीयमानमदनेषु निखिलजनमनोमदनेषु विजनेषु विपिनेषु विपुलोपलनिर्भरास्फालनझर्झरतरनिर्झरशतनिकटस्थलनिरूढविविधविटपिराजिविराजितेषु विबुधयुवतिविहितललितलीलायितेषु विरहितनखरायुधेषु शिखरायुतेषु कमलकुवलयादिसकलकुसुमजातजातकामनीयकासु निखिलजनसन्तापहारिकासु विमलोदकासु वापिकासु उल्लसितफुल्लकुलनिर्गलितवल्गुमधुसंस्वदनलब्धमदसिद्धमृदुविभ्रमलसद्भ्रमरमुग्धतरनिध्वनितमञ्जुतरकुञ्जगृहतल्लजसमुल्लसितेषु मुखरतरहंससारसकुररमुखविकिरनिकरसुखासितेषु सुजातेषु तेषु तेषु तटिनीतटजातेषु च निरवधि विजृम्भमाणमदनो निरतिशयरतिकारिण्या करिण्या करिवर इव तया सह विश्रृङ्खलं विहरमाणो राजकुञ्जरोऽयमविदितसमयसङ्क्रमं चिराय चङ्क्रमीति स ॥

---

दन्तक्षतं विन्दुं मुनिर्वात्स्यायनोऽब्रवीत् ॥ दन्तोष्ठयोगाभ्यासेन निष्पत्तेरधरे पुनः । प्रवाळपाटलं यत्तु निहितं चिह्नमात्रकम् ॥ प्रवाळमणिराख्यातः स कामागमवेदिभिः ।" इति रतिरत्नप्रदीपिकायाम् । एवंविधनखक्षतदन्तक्षतैरधिकं सुभगम्भावुकैः ऐभपुरुषायितादिभिः । "भूगतस्तनभुजास्यमस्तकामुन्नतस्फिजमधोमुखीं स्त्रियम् । क्रामति स्वकरसंस्थमेहने वल्लभे करिवदैभमुच्यते ॥" "नायकस्यानुमत्या वा स्वमनीषकयाथवा । पुंवत् स्त्री रमते रागात् पुरुषायितमुच्यते ॥" निखिलकरणैः निखिलेन्द्रियैः । अखिलकरणैः करणभेदैः ॥

ततश्च ;

सकलेत्यादि । विलसमानं शोभमानशीलं, 'ताच्छील्यवयोवचन–' (पा० सू० ३-२-१२९) इति चानश् । लीलायितं लीला । नखरायुधाः सिंहाः । शिखरायुतेषु शिखरसमूहेषु । फुल्लकुलं पुष्पचयः । संस्वदनम् आस्वादनम् । विकिराः पक्षिणः । सुजातेषु सुन्दरेषु । समयसङ्क्रमः कालातिक्रम इति यावत् । चङ्क्रमीति स तत्रैव बभ्राम । 'नित्यं कौटिल्ये–' (पा०सू० ३-१-२३) इति विहितस्य यङो लुक् ॥

वियोगमनलं मेने पूर्वं भूपोऽधुना पुनः ।
सङ्गमं चानलं मेने दुर्बोधा कामिनां गतिः ॥ ७४ ॥

इत्थं हि सत्रैव दिनेशपुत्र्या तत्रैव गोत्रे रुचिरोरुसत्रे ।
संक्रीडमानस्य समा व्यतीयुः पत्युर्विशां द्वादश वासराभाः ॥ ७५ ॥

यदायं मृगयालोलो निलयान्निरयान्नृपः ।
तदा प्रभृति तद्राज्यं जज्ञे पर्जन्यवर्जितम् ॥ ७६ ॥

तदनु गुरुणा करुणाभरेणैव निखिलजगतामपि तापं निरुन्धानः स भगवानरुन्धतीजानिरुग्रतरेणावग्रहेण परिक्षीणविग्रहमुदग्रतरशोकमदसीयजनपदासीनमखिलमपि लोकमवलोक्य पोपुष्यमाणनिजशिष्यवात्सल्यवेगवशंवदाशयः सहसा महिमवतो हिमवतस्तटीमटीकत ।

पतिरथ स विशां तं देहिनां दुर्दशान्तं
निखिलगुणनिशान्तं वीक्ष्य विज्ञानशान्तम् ।
सपदि समुपयान्तं प्रेमभारादुपान्तं
व्यनमदधिपदान्तं भक्तिनम्रो नितान्तम् ॥ ७७ ॥

---

**वियोगमित्यादि** । पूर्वं वियोगमनलम् अग्निं मेने । अधुना सङ्गमं च अनलं मेने, अपर्याप्तमित्यर्थः ॥ ७४ ॥

**इत्थमित्यादि** । सत्रा सह । गोत्रे गिरौ । सत्रं वनम् । "सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च" इत्यमरः । विशां नृणाम् ॥ ७५ ॥

**यदेत्यादि** । निरयात् निर्गतवान् । तद्राज्यं तस्य राज्यं राजकर्म परिपालनरक्षणम् । अत्र लक्षणया तद्विषयो देशः । सर्वव्यापित्वं व्यङ्ग्यम् । पर्जन्यवर्जितं तत्कार्यवर्षवर्जितमित्यर्थः । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः ॥ ७६ ॥

**तदन्वित्यादि** । अवग्रहेण वर्षप्रतिबन्धेन । 'अवे ग्रह–' (पा० सू० ३-३-५२) इत्यप् । निजशिष्ये राज्ञि संवरणे । अटीकत प्राप्तवान् ॥

**पतिरित्यादि** । देहिनां दुर्दशाया दुरवस्थायाः । गुणानां निशान्तं निवासस्थानमित्यर्थः । विज्ञानेन विशिष्टेन ज्ञानेन, ब्रह्मज्ञानेनेत्यर्थः । शान्तं व्यनमत् प्रणतवान् । अधिपदान्तं पदान्ते ॥ ७७ ॥

तदनु दयितासङ्गसञ्जताप्रतिमरसाप्रती(य ? ज)मानातीयमाना-नेहसमनया सह रहसि विहरन्तमेनं वनान्ते वसन्तमन्तेवसन्तं संवरणं प्रति वरीयसीं वैखरीमयमुदीरयामास ॥

कामो नाम न जातु शाम्यति नृणां बोभुज्यमानोऽन्वहं
वत्स! प्रत्युत नित्यमेष हविषेवाग्निर्जरीजृम्भ्यते ।
किञ्चानेन विहीयते हि विहितो धर्मोऽपि तस्मात्त्वया
सद्योऽस्मादुपरम्य सम्यगत्रनिर्न्यक्षेण भो! रक्ष्यताम् ॥ ७८ ॥

निरवग्रहताव्यग्रं युष्मद्विषया स्थितैव सम्प्रति तु ।
सावग्रहतापि विभो! युष्मद्विषयास्थितेति किमिदमहो! ॥ ७९ ॥

प्रस्थानतः प्रभृति ते विषयेषु वर्षं
वृत्रार्दनेन न कृतं क्रतुभागभाजा ।
तेनाखिलापि जनता परितापदूना
दीनां दशामुपगता बत! दुर्निरूपाम् ॥ ८० ॥

---

तदन्वित्यादि । अप्रतिमरसेन अप्रतीयमानम् अविदितं यथा तथा अती(यः ज)मानः अतिगच्छन्, 'ईजृ गतौ' । (त्यन् ?) अनेहा कालो यस्य । 'ऋदुशनस्–' (पा० सू० ७-१-९४) इत्यनङ् । अन्तेवसन्तं शिष्यम् । वैखरीं सरस्वतीम् ॥

काम इत्यादि । शाम्यति । 'शमामष्टानां–' (पा०सू० ७-३-७४) इति दीर्घः । प्रत्युत, प्रत्युतोक्तान्यथात्वे । जरीजृम्भ्यते अतीव वर्धते । इदित्त्वान्नलोपा-भावः । विहीयते क्षीयते । न्यक्षेण कात्स्न्येन ॥ ७८ ॥

निरवग्रहतेत्यादि । स्वतन्त्रता । "स्वच्छन्दो निरवग्रहः" इत्यमरः । युष्मद्विषया भवद्विषया एव स्थिता । कुत्रापि न ते पारतन्त्र्यमिति भावः । अत्र शाब्दो विरोधः । अवग्रहो वर्षप्रतिबन्धः । युष्मद्विषयास्थिता भवज्जनपदा-धिष्ठिता ॥ ७९ ॥

प्रस्थानत इत्यादि । प्रस्थानतः प्रभृति भवन्निर्गमनादारभ्य । क्रतुभाग-भाजेति वर्षाकरणस्य हेतुगर्भं विशेषणम् ॥ ८० ॥

व्यभ्रस्वच्छाभ्रदीप्रद्युमणिखरकरैस्तप्ततैलायिताल्प-
प्रस्तीताम्भस्तटाकप्रहिनिवहमहो नष्टनिश्शेषभोग्यम् ।
गृध्राद्यारब्धगात्रार्दनविवशजनं प्रायशो वर्तते ते
प्रेताधीशाधिवासप्रतिभयमधुना भूरिराष्ट्रं हि राष्ट्रम् ॥ ८१ ॥

इत्थं स्वक्षेमसम्पादननिरतमतेस्तापसोद्धस्य वाक्यं
पथ्यं पृथ्वीविनेता पृथुविनयमयं धर्म्यमेतन्निशम्य ।
व्रीलानिर्वेदखेदैरतिविवशमतिस्तत्क्षणोदीयमानैः
सत्रा सप्ताश्वपुत्र्या यमिनमपि पुरस्कृत्य सद्यः प्रतस्थे ॥ ८२ ॥

यदा पादाम्भोजप्रविततपरागाः परमहो !
परापेतुः पृथ्वीतलवलरिपोरस्य विषये ।
तदा धारा वारामपि च शिशिरा व्योमविवरा-
दतिस्थूलाकारा निखिलजननिर्वापणपराः ॥ ८३ ॥

---

व्यभ्रेत्यादि । व्यभ्रे विगतमेघे अभ्रे आकाशे तप्ततैलायितं तप्त-तैलवदाचरच्च अल्पं च प्रस्तीकं घनीभूतं चाम्भो यस्य । 'स्त्यै ष्ट्यै शब्द-सङ्घातयोः' । 'प्रस्त्योऽन्यतरस्याम्' (पा० सू० ८-२-५४) इति निष्ठातकारस्य मकाराभावे रूपम् । राष्ट्रं राज्यम् । भूरिराष्ट्रं बहुलोपद्रवं, "अथ राष्ट्रोऽस्त्री विषये स्यादुपद्रवे" इत्यमरः ॥ ८१ ॥

इत्थमित्यादि । तापसोद्धस्य ऋषिश्रेष्ठस्य । धर्म्यं धर्मादनपेतम् । व्रीलेत्यादि । गुरुजनप्रतिबोधनीयया भोगान्धतया व्रीळा । निखिलकरणीयलोप-स्मरणादनुभूतचरान्निजचरितान्निर्वेदः । स्वप्रजानां तथाविधावग्रहकर्शनस्मरणात् खेदः ॥ ८२ ॥

यदेत्यादि । परं केवलम् । परागाः परापेतुरिति पादस्पर्शात् पूर्व-मेवेत्यर्थः । यदा परापेतुः न्यपतन् तदा वारां धारा अपि परापेतुरित्यनुषङ्गः । शिशिराः शीतलाः ॥ ८३ ॥

अभ्रैरद्भिस्साकं पीता तापोद्रेकादुद्रागुद्वान्ता ।
और्वज्वालेवाशाचक्रे कासाञ्चक्रे विद्युन्माला ॥ ८४ ॥

आसाराग्रावपातिप्रसृमरकरकैर्मेदिनी मेदुराभा
कासारावापवापीप्रहिनदसरितस्तूर्णमेवाभिपूर्णाः ।
केदारा वारिधारागिरणजरिहृषज्झिल्लिकाघोषघुष्टाः
कन्तारा भूरिवाराप्लुतिलसितलतागुल्मकुञ्जद्रुपुञ्जाः ॥ ८५ ॥

क्षिप्रं कूपप्रमेवं सकलजलधरैर्वासवप्रेर्यमाणैः
पुष्टे तोयेऽभिवृष्टे लघु निखिलजना विद्रुतोद्रिक्ततापाः ।
मृष्टाभीष्टाम्बुपानादतिसुहितधियः प्राज्यतद्राज्यसंस्थाः
संस्थातीतप्रमोदाः किमिदमिति तदा व्यत्यजल्पन्ननल्पम् ॥८६॥

---

अभ्रैरित्यादि । उद्वान्ता उद्गीर्णा । और्वो बडवानलः । कासाञ्चक्रे दीप्ताभूत् । 'कासृ शब्दकुत्सायाम्' । "कासाञ्चक्रे पुरी सौधैः" इति कासेरेव दीप्त्यर्थत्वमुक्तम् । वृत्तनामाङ्कितोऽयं श्लोकः । "मो मो गो गो विद्युन्माला" ॥ ८४ ॥

आसाराग्रेत्यादि । "घनोपलस्तु करकः पुञ्जिका मटचीति च" इति वैजयन्ती । "वर्षोपले तु करका करकोऽपि च दृश्यते इति रुद्रः" इति सुबोधिनी । कासारः सरः । आवापः आलवालः । केदाराः क्षेत्राणि । गिरणेन, 'गॄ निगरणे' ल्युटि गुणः निगरणम् । टुवम उद्गिरण इति धातुपाठे निपातनादित्वमपीति केचित् । जरिहृषतीनाम् अतीव हृष्यन्तीनां झिल्लिकानां चीरीणां घोषेण घुष्टाः । वाराप्लुतिः जलाप्लवनम् । द्रुपुञ्जाः वृक्षसमूहाः ॥ ८५ ॥

क्षिप्रमित्यादि । कूपप्रं यावता कूपः पूर्यते तावत्तोयेऽभिवृष्टे । 'वर्षप्रमाण—' (पा० सू० ३-४-३२) इति णमुल् ऊलोपश्च । अतिसुहिता अतितृप्ता । व्यत्यजल्पन् अन्योन्यमूचुः । "हासशब्दार्थयोर्नेति वाच्यम्" इति तङभावः ॥ ८६ ॥

समभृण्वन्नपि तदा समायान्तं महीक्षितम् ।
अयाम्बभूवुरपि ते रयादालोकनोत्सुकाः ॥ ८७ ॥

तदनु निजागमनिशमनोदीयमानमोदैः निशामनमहोत्सवोत्सुकतया संसम्भ्रममाप्तपरिसरैर्विप्रविसरैः चतुरतरसेनानीविनीयमानानेकानीकिनीशतानुबद्धेन सचिवगणानुषक्तेन सकलजनमित्रेण वसुमित्रेण अतिमात्रभक्तिपात्रैर्महामात्रैरुपनीयमानमहितोपायनराजिः आजिबाहुकैः अतिविकचवदनवारिजैः अखिलवाणिजैः पदकमलपरागपरामर्शनमात्रनिर्वर्तितावग्रहनिग्रहोद्भूतभूरितराद्भुतैकभाजनैः अनेककैर्जानपदजनैः स्वप्रसादासादिताधिपत्यैराशामुखापात्यैर्मूर्धाभिषक्तकरपुटैः अखिलमूर्धाभिषिक्तपरिवृढैरपि परितः परिवीयमाणः, वन्दिवृन्दारकवृन्दपणायितगुणाढ्यः,वसुमित्रोपनीतैरवितर्क्यमूल्यमकुटमाणिक्यमाल्यकटककेयूरमुखैरखिलैरलङ्कारैरलमलङ्कृताङ्गः, महितमणिगणाञ्चितां काञ्चन काञ्चनशिविकां द्युतिविजितदिवसनाथः सनाथयन् उभयभागदोधूयमानचमरवालव्यजनवोभूयमानपवमानवालाहन्यमानगमनखेदः,

---

समभृण्वन्नित्यादि । सकर्मकत्वादात्मनेपदाभावः । अयाम्बभूवुः प्राप्नुवन् ॥ ८७ ॥

तदन्वित्यादि । निशामनं दर्शनमेव उत्सवः । "उत्सूते हर्षमित्येष उत्सवः परिकीर्तितः" इति भावप्रकाशः । विसरः समूहः । सेनानीः वाहिनीपतिः । महामात्राः प्रधानामात्याः । वाणिजैः वणिग्भिः । पणत इति वणिक् । 'पणेरिज्यादेश्च वः" (स० क० २-१-२५०) इतीजिप्रत्ययः आदेर्वकारश्च । वणिगेव वाणिजः प्रज्ञादिः । आपात्यैः आपतितैः । 'भव्यगेय—' (पा० सू० ३-४-६८) इति कर्तरि निपातः । मूर्धाभिषक्तकरपुटैः शिरसि निहितकराञ्जलिभिः । परिवीयमाणः परिगम्यमानः । 'वी गतिप्रजनकान्त्यशनखादनेषु' । पणायितं स्तुतम् । अवितर्क्यमूल्यैः अनर्घैरित्यर्थः । शिबिका चतुरन्तयानम् । महार्हेण यानेन नेतव्यो राजादिर्याप्यः तस्य यानम् याप्यमानम् । अत्यन्तश्लाघ्यं तत् शिबिकेत्युच्यते । दोधूयमानाभ्याम् अत्यर्थं पुनःपुनः धूयमानाभ्याम् ।

छत्रातपत्रपताकादिविततिवितानितवियदन्तरालः, कमनीयतरतपनीया-कल्पपरिकल्पिताल्पेतरकान्तिसङ्गताङ्गलतया परिलसितविमलसितमृदुल-दुकूलवर्यपर्यावृतं सौवर्णं कर्णीरथमारोपितया पौरनारीविसरपरिभासित-परिसरभागया उन्नमितोद्दण्डदोर्दण्डहिण्डमानकनकवेत्रविलोकनमात्र-वित्रस्तसमस्तलोकम् उत्सरोत्सरेति वावदूकैः कञ्चुकिसञ्चयैरञ्चित-पुरस्सञ्चरया तपनतनयया शनैश्शनैरनुगम्यमानः, सुषिरघनततघन-तरनिनादमेदुरैः कल्पकालहिण्डमानचण्डमरुदुल्लोलकल्लोलहल्लोहलतुल्यो-दयैः निर्धूतपुष्कलावर्तनिध्वनितैः पटुतरमाहन्यमानपटहपणवमुखानद्ध-निध्वानैः अखिलदिगन्तरागतनिखिलजननिरन्तरसञ्चरणसम्मर्दसमुदीय-मानविविधकोलाहलैः गोत्रापतियात्रासमयसमुचितैः निजनिजायुध-विधीयमानमृषामृधविभाव्यमाननिग्रहचातुरीविस्मापितसमस्तजनसंस्तूय-मानैर्नैस्त्रिंशिकधानुष्कयाष्टीकशाक्तीकपारश्वधिकपारिघिकप्रासिकप्रचुर-पृतनाप्रकरपुरुतरविरावैरपि बधिरितहरिदन्तरालः, वाराम्निधिरिव अखिलाचलान्तवेगापतितवाहिनीसङ्घसङ्गताभोगः, वसुदेवसूनुरिव अधिकंसमाविष्कृतनिरतिशयनिजानुभावः, श्रीकण्ठ इव सदा नन्दि-

---

वितानितं सञ्जातवितानम्। सौवर्णं सुवर्णविकारम्। कर्णीरथः पुरुषस्कन्धवाह्योऽल्प-रथः। 'कर्णीरथं प्रवहणं डयनं रथगर्भके' इति यादवः। पुरस्सञ्चरः पुरोमार्गः। सुषिरेत्यादि वाद्यं नादस्वरूपं तच्चतुर्धा — ततानद्धसुषिरघनभेदाद् इति नाट्यसूत्रम्। हल्लोहलः कोलाहलः। पुष्कलावर्तकाः प्रलयमेघाः। कोलाहलः कलकलः। निस्त्रिंशः प्रहरणं आयुधम् अस्येति नैस्त्रिंशिकः। 'प्रहरणम्' (पा० सू० ४-४-५७) इति ठक्। शक्तिः प्रहरणं शाक्तीकः, एवं याष्टीकः। 'शक्तियष्ट्योरीकक्' (पा० सू० ४-४-५९)। पारश्वधिकः 'परश्वधाट्ठञ्च' (पा० सू० ४-४-५८)। धानुष्कादिषु 'प्रहरणम्' इति ठक्। अचलानाम् अचलायाः भूमेश्च। वाहिन्यो नद्यः सेनाश्च। अधिकंसं कंसे, विभक्त्यर्थेऽव्ययी-भावः। अधिकम् अत्यर्थं च। नन्दिमुखाः नन्दिकेश्वरप्रधानाः। भूताः भूतगणाः, आनन्दिमुखैः निखिलभूतैः अखिलजनैः। हरिरिन्द्रः। वृत्रो वृत्रासुरः, वृत्रा

मुखनिखिलभूतोपशोभितोपकण्ठः, हरिरिवाविरतवन्दिवृन्दारकवृन्दाभिनन्द्यमानवृत्रविध्वंसनविधादिविविधापदानः सकलराजकुलावतंसः स खलु राजकुलवतंसः हस्तिनाभिधानं पुरवरिष्ठमुपतिष्ठमानं तत्र तत्र तत्रत्यजनविन्यस्तविविधमङ्गलपदार्थसार्थसमिन्धानं पन्थानं शनैश्शनैः सम्भावयन् निजनिजागारबहिर्द्वारवेदिषु चतुष्पथादिषु च गरिष्ठकुतुकमवतिष्ठमानान् वर्षिष्ठानर्भकानपि निर्भरानुकम्पार्द्रमन्दहसितावलोकनादिभिरधिकमानन्दयन्, विविधविलुलोकयिषुलोकोपशोभितोभयभागं गगनचुम्बिकेतुकदम्बलम्बमानवैजयन्तीराजिविराजमानं राजमार्गमलंकुर्वाणः दिदृक्षावेशविहस्तधिषणाभिर्व्यत्यस्तभूषणाभिरूढसंभ्रममधिरूढहर्म्यमध्याभिः कृशमध्याभिरवकीर्यमाणं लाजजालं प्रीतिपूर्वमुररीकुर्वन्, आदरादापुरद्वारमागताभिः समस्तमङ्गलवस्तुपरिस्तृतकमनस्फारकनकस्थालमणिदीपिकाञ्चितकराञ्चलाभी रूपविजितसुरसुन्दरीभिः पुरसुन्दरीभिः अभ्यधिककुतुकमभ्युद्गम्यमानः, महितमालादुकूलादिविलसितचारुचामीकरतोरणखचितविविधमणिनिचयमरीचिवीचिविरचितशतमन्युशरासनां हेमकुम्भरम्भास्तम्भादिपरिशोभितद्वारदेशां संमृष्टसंसिक्तविततचत्वरसत्वरावकीर्णकुसुमविसरापादितभक्तिविशेषां विततवितानलम्बमानमुक्ताकलापां यथोचितनिवेशितविशददीपशतदेदीप्यमानां निखिलमङ्गलावासभूतां निजपुरीमाविशन्, देव्याः शुद्धान्तप्रवेशनाय कञ्चन कञ्चुकिनं भ्रूसंज्ञयैवाज्ञाप्य आस्थानद्वारदेशमासाद्य यानादूढमोदमवरूढः, सकलजनानामपि दर्शनावसरमनुगृह्णानः, नृप-

---

अस्यश्च। "ध्वान्तारिदानवा वृत्राः" इत्यमरः। विधा विधानम्। राजकुलस्य राजसमूहस्य। राजकुलावतंसः सोमवंशालङ्कारभूतः। तत्रत्याः तत्र भवाः। समिन्धानं शोभमानम्। वर्षिष्ठान् वृद्धतरान्। विलुलोकयिषुः विलोकयितुमिच्छुः। विहस्ताः व्याकुलाः। ऊढसंभ्रमं, संभ्रमो भयादीनां कर्मस्वावेशः। कनकमये स्थाले पात्रविशेषे। विविधेत्यादि। अत्रोदात्तमलङ्कारः। 'समृद्धिमद्वस्तुवर्णनमुदात्तम्' (अ० सू० ८०), स्वभावोक्तौ भाविके च यथास्थितवस्तु-

निवहोपहृताञ्जलिमुकुलमालामपि परिगृह्णानस्तदेव भूतलं कञ्चित्काल-मलंचकार ॥

इत्थं सन्तिष्ठमानं स्वपतिमतिचिराल्लोचनानन्दधारां
तन्वानं भूरिवारिद्रुतपरिपतनस्पष्टदृष्टानुभावम् ।
कारुण्यार्णोधिमुद्यन्मृदुहसितसुधासारसार्द्रावलोकं
पश्यन्तो विश्वलोका विगतपुरुपरीतापमापुः प्रमोदम् ॥ ८८ ॥

स्फूर्जन्निष्षमदुष्षमातिविवशान् विश्वम्भराधीश्वरो
विश्वानेष जनाननन्यशरणानात्मावलोकोत्सुकान् ।
वित्तेनापि यथोचितं मधुमुचा वाचा च जातादरं
सन्तर्प्य प्रमनाः पुरोहितमुखानामन्त्र्य चान्तर्ययौ ॥ ८९ ॥

अथासौ प्रेयस्या प्रवरमहिषीस्थानगतया
तया साकं सर्वान् विदधदिह धर्माननवमान् ।
यथाशास्त्रं पुत्रानिव सदयमत्रायत निजाः
प्रजास्ता दूरास्तव्यसनविसरा हृष्टहृदयाः ॥ ९० ॥

अथ कदाचन यथाविधिविरचितनिखिलप्रगेतनविधिः अति-रक्तमण्डलो विच्छायितसकलराजको विश्वलोकदृश्याकृतिः आरात्कृत-

---

वर्णनम्, असम्भाव्यमानविभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्य-लक्षणमुदात्तम् । भक्तिर्विन्यासविच्छित्तिः ॥

इत्थमित्यादि । आर्द्रमित्यार्द्रत्वेऽपि । तेन सह वर्तमानं सार्द्रम् इति टीकासर्वस्वे । "आर्द्रं सार्द्रं क्लिन्नम्" इत्यमरः ॥ ८८ ॥

स्फूर्जदित्यादि । निष्षमं गर्ह्यं, दुष्षमं दुर्भिक्षं, तिष्ठद्गुप्रभृतित्वा-त्साधुः । प्रमनाः हृष्टमनाः ॥ ८९ ॥

अथेत्यादि । यथाशास्त्रं शास्त्रमनतिक्रम्य । अत्रायत रक्षितवान् ॥ ९० ॥

अथेत्यादि । प्रगेतनः प्राभातिकः । मण्डलं बिम्बं, द्वादश राजमण्डलं च । विच्छायितसकलराजकः विच्छायितः निश्शोभीकृतः सकलः कलाभिः

सकलसत्त्वसमूहो महीपतिः मयूखमालीव पूर्वधरणीधरं विविधरत्नचयाचित-गरिष्ठपादं वरिष्ठं भद्रासनमधितिष्ठन् वसुमित्रपुरस्सरामात्यवरपुरस्कृतः पुरोहितं पुरोनिहितमहितविष्टरोपविष्टं वसिष्ठं प्रति विशिष्टां गिरमभाषिष्ट ॥

प्रसादादेवाप्तं गुरुवर! समस्तं तव मया
प्रयासान्नानैव द्रुतमनुगृहाणेदमपि तत् ।
ऋभुक्षाणं साक्षादयमहमिमा द्वादश समा
यियक्षे यः क्षामं जनपदमतीवापुषदसुम् ॥ ९१ ॥

तदनु तदनुमोदनोदीयमानमोदो मेदिनीपतिरसौ वसुमित्र-मुखमहामात्रसत्तमसद्यस्सम्भृतसमस्तमुख्यसंभारो, नियतमसदुपहृत-स्वापतेयेनैव नः स्वामी निखिलामपीष्टिं विधातुमीष्टामिति पुष्टा-दरम् अहमहमिकयोपयातैर्विविधोपदापदार्थसार्थकितमूर्धभृत्यसार्थ-समिद्धपार्श्वैरवनीश्वरैरपनीतमानमुपनीतेन वसुपूरेण परिपूरितपुरान्तरः, सर्ववेदार्थविवरणैकचेतोभिः सर्ववेदोभिर्विहितकर्मजागरूकैः यायजूकैः अखिलभूदेवलोकैः यथाविधि वृतैः स्वस्वकर्मकर्मठैरास्तिक्यवद्भि-

---

सहितो राजा चन्द्रो येन सः; सकलानि अखिलानि राजकानि राजसमूहाश्च । दृश्या दर्शनयोग्या रम्या च । आरात्कृतः दूरीकृतः । अदृश्यतां गमित इति यावत् । समीपे उपवेशितश्च । "आराद् दूरसमीपयोः" इत्यमरः । सत् नक्षत्रं, सज्जनश्च । "तारा भं रात्रिजं धिष्ण्यं सन्नक्षत्रमुडुर्न ना" इति निघण्टुः । भद्रासनं सिंहासनम् ॥

प्रसादादित्यादि । प्रयासान्नानैव क्लेशं विना । 'पृथग्विना–' (वा०) इति पञ्चमी । ऋभुक्षाणमिन्द्रं, 'पथिमथि–' (पा० सू० ७-१-८५) इत्यात् । इमा आसन्नीभूताः । यियक्षे यष्टुमिच्छामि । क्षामं क्षीणं, 'क्षायो मः' (पा० सू० ८-२-५३) इति निष्ठातकारस्य मकारः ॥ ९१ ॥

तदन्वित्यादि । स्वापतेयेन द्रव्येण । 'पथ्यतिथि-'(पा०सू० ४-४-१०४) इति ढञ् । 'द्रव्यं वित्तं स्वापतेय'मित्यमरः । ईष्टाम् ईशो भवतु । सार्थकितः सफलीकृतः । सर्ववेदोभिः । "सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः"

ऋत्विग्भिः महितशरस्तम्बनिर्वर्तितयोक्त्रपरितौ(?)क्कितजघनया मितनय-
याप्युपशोभितोपशल्यः अहतवसनोष्णीषचर्मकृष्णविषाणदण्डमण्डिताङ्गः
द्वादशवत्सरानखिलजननेत्रोत्सवकरान् वसिष्ठानुष्ठाप्यमानसकलक्रिया-
कलापान् अनुपक्षीणदक्षिणान् विविधतेमनातिमहितविमलजेमनाति-
सुहितनिखिलमानवाभिहितबहुविधाशीर्वचनमुखरितदिशामुखान् विशद-
तरयशोवितानावृतदिगन्तरान् वितानवरान् विधिवदेव विततान ॥

एवं कृतैः क्रतुवरैः प्रमदाभिभूत-
निश्शेषभूतनिवहैरिदमीदृशैस्तैः।
सर्वामरौघसहितः स हि मेघवाह-
स्तुष्टोऽजनिष्ट जगतां पुरुपुष्टिहेतुः॥ ९२॥

अथ यथोचितं विविधविभवचर्यैराचोपचैरपचितेषु तेषु मैत्रा-
वरुणिमुखेषु गोत्रासुरवरेषु, "ननु गोत्रापरित्राणपारीण! धात्रीवलय-
सुत्रामन्! पत्त्रिविसरासारकूलङ्कषीकृतशत्रुयुवतिनेत्रसलिलकूलङ्कषो-
पवर्धितरत्नाकरस्तव मित्रानन्दनः पुत्रो भूयाद्" इति मन्देतरादरमुमा-
माशिषाभिनन्द्य यथागतं गतेषु, सन्तीर्णमनोरथार्णोधिरपि समुदीर्ण-
सम्मदार्णोधिपतितः पृथिवीपतिसत्तमः सप्ततन्तुविधिसन्तुष्टवृत्रहन्तृ-
विहितयथेष्टवृष्टिपरिहृष्टं सप्तसिन्धुवलयितवसुन्धरान्तराधिवासिनमखिल-

---

इत्यमरः। विश्वजिदादियागः सर्वस्वदक्षिणः, तद्याजी सर्ववेदाः। सर्वं सर्वस्वं वेदयति लम्भयति ऋत्विज इति। विदिर्लाभे, ण्यन्तादसुन्। यायजूकैः यजनशीलैः। 'यजजपदशां यङः' (पा० सू० ३-२-१६६) इत्यूकः। तेमनैः व्यञ्जनैः। अतिमहितानि जेमनानि तैरतिसुहिताः अतितृप्ताः। वितानवरान् मखश्रेष्ठान्॥

एवमित्यादि। मेघवाहः इन्द्रः। मेघा गजरूपिणः ते वाहाः अस्येति मेघवाहः॥ ९२॥

अथेत्यादि। आचोपचैः आचितैरुपचितैश्च, आर्जितैः परिवर्धितैश्चेत्यर्थः। अपचितेषु पूजितेषु। मैत्रावरुणिर्वसिष्ठः। पत्त्रिविसरः शरसमूहः। कूलं कषतीति

मपि लोकं परिपालयन्नर्भकाननात्रलोकमपि प्रतिपालयन्नयमनया तपन-तनयया सह परिपुरवरिष्ठमवतिष्ठते स्म ॥

इत्यल्पे गतवत्यनेहसि सदा रक्षापरेणामुना
तस्यां राजकशेखरेण विलसद्भूषाजुषा शम्भुना ।
कन्यायां मिहिकागिरेः परधराभृद्दारणोद्यद्यशाः
सेनानीरिव नन्दनोऽथ जनयाञ्चक्रे जनानन्दनः ॥ ९३ ॥

कुरुरिति भुवने यो गीयतेऽमेयधामा
यत इह समवापुः पौरवाः कौरवाख्याम् ।
अभजत शनकैस्तं वर्धमानानुभावं
सकुतुकमनुरज्यद्यौवना यौवनश्रीः ॥ ९४ ॥

अथ पृथिवीपतिस्तु तूर्णविदीर्णदृढतराधमर्ण्यनिगलो निरतिशय-सम्मदैस्सकलसम्मतैर्वसुमित्रमुखैर्मन्त्रिवरैरमा सम्मन्त्र्यास्मिन् विस्मयनीय-गुणगणानुरञ्जितसकलजीवलोके भुवनकमनयौवनावतारविशदीकृत-सकललक्षणसंसूचितलोकोत्तरानुभावे विविधविद्यानिलयेऽतिविनयेऽधि-गतनये तनये प्राज्यं राज्यभारं विधातृसुतविहितविधानतो निधाय कृतार्थतामुपगतो नगरे नयनोत्सवकरे यथासुखमवात्सीत् ॥

---

कूलङ्कषा कृता कूलङ्कषीकृता । नेत्रसलिलमेव कूलङ्कषा नदी । "धुनी कूलङ्कषा सिन्धुरापगा वाहिनी वहा" इति वैजयन्ती । परिपुरवरिष्ठं पुरश्रेष्ठे ॥

इतीत्यादि । रक्षा रक्षणं, भस्म च । राजकस्य राजसमूहस्य शेखरेण । राजको बालचन्द्रः स शेखरो यस्य । "राजा तु क्षत्रिये चन्द्रे लताभेदे नृपे प्रभौ" इति वैजयन्ती । विलसन्तः शोभमानाः, सर्पाश्च । मिहिकागिरेः हिमवतः । परधराभृतां शत्रुभूपानां, परधराभृतः क्रौञ्चस्य च । सेनानीः गुहः । जनयाञ्चक्रे कर्मणि लिट् ॥ ९३ ॥

कुरुरित्यादि । यतः यस्मादारभ्य । यौवनं युवतिसमूहः ॥ ९४ ॥

अथेत्यादि । आधमर्ण्यं पितृसम्बन्धि ॥

अथ तातस्य तामाज्ञां प्राज्ञो मूर्ध्ना वहन्नसौ ।
अञ्जसा रञ्जयामास पौरजानपदान् जनान् ॥ ९५ ॥

भूपालोऽयमवोभुजीद् भुवमिमां सप्तार्णवीमेखलां
भूपालालिरवाभजीदपि यतो रेकातिरेकं हृदि ।
यः स्फायत्तपसा चकार च कुरुक्षेत्रं पवित्रं परं
यन्नाम्ना कुरुजाङ्गलं खलु जगत्याढौकते रूढताम् ॥ ९६ ॥

विबुधान् प्रीणयन् पुष्णन् सकलं राजमण्डलम् ।
उस्रावलिं स विसृजन्नसहस्रकरायत ॥ ९७ ॥

मित्रसङ्गेन विलसन् सुकलः प्रवरः सताम् ।
ईक्षणापास्तपद्माभो रेजे राजा च राजवत् ॥ ९८ ॥

---

अथेत्यादि । प्राज्ञः प्रज्ञावान् । 'प्रज्ञाश्रद्धा–' (पा० सू० ५-२-१०१) इति णः । अञ्जसा सम्यक् । (अञ्जसा) सम्यग्वेगयोः ॥ ९५ ॥

भूपाल इत्यादि । अवोभुजीत् अत्यर्थं रक्षति स्म । यङ्लुकि लङ् । सप्तकी रशना । अवाभजीद् अत्यर्थं सेवितवती । रेकातिरेकं प्रीत्यतिशयम् । य इत्यादि । "तस्य नाम्ना च विख्यातमभूच्च कुरुजाङ्गलम् । कुरुक्षेत्रं च तपसा पुण्यं चक्रे महायशाः ॥" इति महाभारते । आढौकते, ढौकृ गत्यर्थः ॥ ९६ ॥

विबुधानित्यादि । राजमण्डलं चन्द्रमण्डलं च । रश्मिप्रसारणेन चन्द्रमण्डलं पुष्णन् देवान् प्रीणयतीत्यर्थः । उस्रावलिं गोसमूहं, रश्मिसमूहं च । "उस्रा माहा च शृङ्गिणी" इत्यमरः । असहस्रकरायत सहस्रकरः सूर्य इवाचरति स्म । 'कर्तुः क्यङ्–' (पा० सू० ३-१-११) इति क्यङ् ॥ ९७ ॥

मित्रेत्यादि । मित्राणां सुहृदाम् । मित्रसङ्गेन सूर्यरश्मिसम्पर्केण च । सुकलः, "सुकलो दातृभोक्तरि" इत्यमरः । शोभनाः कलाः यस्य स च । ईक्षणेन नयनेन आत्मकरदर्शनेन च । राजवत् चन्द्र इव ॥ ९८ ॥

बलेन गोत्रामविता सत्यभामासमन्वितः ।
सदामोदरमप्यासीत् सदाक्रूरप्रसादकृत् ॥ ९९ ॥

उदारहारवलयो जागरूकः सदावने ।
बभूव स च भूपालस्तद्वैरिनिवहोऽप्यहो! ॥ १०० ॥

इह शासति सदिवस्पति जगतीं महतीं निरीतिभूतिमतीम् ।
इतिकुरु जगति बत! स्फुटमुदजृम्भत जृम्भितारिकम्पभरम् ॥१०१॥

इष्टौघैर्विबुधानयष्ट विविधैस्तैरेव पुष्टादरं
तुष्टात्मा स दरिद्रतोऽप्यलमपिप्रीणत् कृपावारिधिः ।
संरम्भेण रिरन्धिषूनपि रिपून् जघ्नन्ति सङ्ख्ये पुरा
नार्वाचीनमचीखनत् प्रतिपथं वा कूपवापीशतम् ॥ १०२ ॥

---

बलेनेत्यादि । शक्त्या, हलिना च । गोत्रां भूमिं, गोसमूहं च । अविता रक्षणशीलः । ताच्छील्ये तृन् । सत्यभामासमन्वितः सत्येन भया शोभया मया सम्पत्त्या च । सदामोदरमपि दामोदरसदृशोऽपि । सादृश्येऽव्ययीभावः । सदा क्रूराणां प्रकर्षेण सादकृत्, अक्रूरस्य प्रसादं करोतीति च ॥ ९९ ॥

उदारेत्यादि । उदारहारवलयाः महान्तः हारवलया यस्य । "उदारो दातृमहतो"रित्यमरः । हा इति रवश्च । अवने वने च ॥ १०० ॥

इहेत्यादि । इह अस्मिन् । सदिवस्पति महेन्द्रसदृशे । निर्गता ईतयो यस्यां क्रियायाम् । ईतयः अतिवृष्ट्यादयः । इतिकुरु कुरुशब्दप्रसिद्धिः । शब्दप्रादुर्भावेऽव्ययीभावः । शब्दप्रादुर्भावो नाम्नः प्रसिद्धिः । उदजृम्भत अवर्धत ॥ १०१ ॥

इष्टौघैरित्यादि । क्रतुसमूहैः । अयष्ट ईजे । तैरेव इष्टौघैरेव अभीप्सितपदार्थौघैः । दरिद्रतः दुर्गतान्, 'दरिद्रा दुर्गतौ' । अपिप्रीणत् प्रीणयति स्म । अत्र हेतुः—कृपावारिधिरिति । "आविष्ट इव दुःखेन तद्गतेन गरीयसा । समन्वितः करुणया परया दीनमुद्धरेत्" ॥ इति कामन्दकः । रिरन्धिषून् हिंसितुमिच्छून् । 'रध हिंसासंराद्ध्योः । जघ्नन्ति पुरा अत्यर्थं निहतवान् ।

करतलविलसितखरतरविजय-
द्रुततरविशसितसमखलनिसरः ।
सुरपुरमदहरसुमहितनगरे
समहिषि चिरमयमतिसुखमवसत् ॥ १०३ ॥

ततश्च;

सोऽजीजनद्विश्रुतमश्ववन्तं परीक्षितं सोऽपि महीक्षिदाद्यम् ।
तस्मादमेयो जनमेजयोऽस्माद्भीमोरुसेनोऽजनि भीमसेनः ॥ १०४ ॥

अथोदयासीदुदयाचलाग्राह्वास्वानिवासादनुरञ्जिताशः ।
धात्रीभृतां मूर्धसु क्लृप्तपादः प्रतीतधामा नृपतिः प्रतीपः ॥ १०५ ॥

स प्रतीपोऽपि जगतामप्रतीपो नृपोऽभवत् ।
परमोदहरोऽप्येष परमोदकरः सदा ॥ १०६ ॥

---

स(ङ्घे ? ङ्ख्ये)युद्धे । नार्वाचीनमुत्कृष्टमित्यर्थः । अर्वम् अधोभागम् अञ्चतीत्यर्वाक् । 'विभाषाञ्चेः—' (पा० सू० ५-४-८) इति स्वार्थे खः । अचीखनत् खनयति स्म । 'खनु अवदारणे ।' प्रतिपथं पथि पथि । वीप्सायामव्ययीभावः ॥ १०२ ॥

करेत्यादि । विजयः असिः । "श्रीगर्भो विजयश्शास्ता कृपाणासङ्ग-रिष्टयः" इति वैजयन्ती । विशसिताः हिंसिताः । समे सर्वे । समहिषि महिष्या समं यथा तथा । "वसुहययतिरिह मणिगणनिकरः" ॥ १०३ ॥

ततश्च,

स इत्यादि । अश्ववन्तं "अश्ववन्तात् परीक्षितु" इति श्रीमहाभारतोक्तेरकारान्तोऽयम् ॥ १०४ ॥

अथेत्यादि । उदयासीद् उदभूद् । धात्रीभृतां भूपानां, पर्वतानां च । "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः ॥ १०५ ॥

स इत्यादि । अप्रतीपः अनुकूलः । परे शत्रवः, पर अतिशयितश्च ॥ १०६ ॥

विश्वोदन्वदुरुप्रतीरविहरद्युग्येन जिग्येतरां
विश्वोद्रिक्तभुजाबलेन निखिला दिग् येन दिग्येऽपि च ।
भुञ्जानेन हि सार्वभौमपदवीयोग्यानि भोग्यान्यहो!
वाचामेष पदं कथं पृथुयशोभाग्याति भाग्याम्बुधिः ॥ १०७ ॥

उपयम्य स रम्याङ्गीं सुनन्दां शिविनन्दनाम् ।
विनयन्नवनीं रेमे विनायनतयानया ॥ १०८ ॥

तदा कदाचिदिक्ष्वाकुप्रभवो नृपतिरक्षामप्रभावो महाभिषगिह महाभिजनोचितैरुपचितैः क्रतुशतैः पुष्टादरमिष्ट्वा क्षणाद्देवभूयमनुभूय अनुभूयमानसर्वसौवसुखो विहरमाणो द्रुहिणचरणपरिचरणपरायणधिषणै-रमरगणैरमा सद्यः सत्यलोकमासाद्य सकलतपस्विलोकसभाजितं सभा-मध्यमध्यासीनं परमेष्ठिनमुपतिष्ठमानस्तत्र दैवादागतां निभृतमात्मान-मीक्षमाणां तत्क्षणापतितमारुतापनीतवसनतया विवृतकटितटां विबुध-तटिनीं विगताशङ्कं विलोकयन् 'अयि महाभिषग्! अधुना खलु परदार-दर्शनमहाभिषग्भवान् मनुजयोनिजो भवेदि'ति शतधृतिना रभसेन शप्तः प्रतप्तमना मनागिव विचार्य परमधार्मिकं भरतकुलप्रदीपं प्रतीपमेव पित्री-कृत्य पृथ्वीतले समुत्पत्स्य इति व्यवस्यन्नवसरमनुपालयन्नेवायमवतस्थे ॥

---

विश्वेत्यादि । युग्योऽश्वः । जिग्येतरां अतिशयेन जीयते स्म । दिग् येन दिग्ये पालयामासे । 'देङ् रक्षणे' कर्मणि लिट् । 'दयतेर्दिगि लिटि' (पा० सू० ७-४-९) इति दिग्यादेशः ॥ १०७ ॥

उपयम्येत्यादि । परिणीय । विनयन् शिक्षयन् ॥ २०८ ॥

तदेत्यादि । महाभिषगिति प्रसिद्धः । इह अस्मिंल्लोके । देवभूयं देवत्वम् । अनुभूय प्राप्य । सौवं स्वर्गसम्बन्धि । निभृतं गूढम् । अयि महाभिषक्! हे महाभिषक् ! परदारदर्शने महाभिषग् अभिषजन् । 'षञ्ज सङ्गे' । 'क्विप् च' (पा० सू० ३-२-७६) इति क्विप् । महाभिषङ्ग्युक्तो भवान् । शतधृतिना ब्रह्मणा । "शतानन्दः शतधृतिः स्वयंभूः सर्वतोमुखः" इति वैजयन्ती । पित्रीकृत्य पितरं कृत्वा । समुत्पत्स्ये उत्पन्नो भविष्यामि ॥

मानुष्यमेष्यसीत्युक्ता विधिना विधुराशया ।
गङ्गाप्युद्यन्नृपासङ्गा ययावथ यथागतम् ॥ १०९ ॥

तदनु कदाचन निखिलभुवनप्रतीतकीर्तिविततिः प्रतीपो निजनिगमान्निर्गत्य निखिलनिगमपारगः स्वधीयानः स्वाधीनधीः सुरधुनीतीरवधिवसन्निमां विबुधापगां महाभिषगभिषङ्गसङ्गतं पैतामहं शापमपहातुकामामङ्गीकृतमञ्जुलाङ्गीं सपदि नयनपथमवतरन्तीं स्नुषाजननिवासोचितं वामेतरं निजोरुतलमधिवसन्तीं विहितसमयः प्रसादयन् प्रस्थाप्य प्रतिहतप्रतीपभूपोऽयं सुतीयन् पुनस्तत्प्रतीर एव सहधर्मचारिण्या परिक्षीयमाणतारुण्यया सुनन्दनीयया तया सुनन्दया सह तपस्यासमुत्सुको न्यवात्सीत् ॥

एवं बहुतिथे काले याते सा पतिदेवता ।
सुनन्दा दौहृदं देधे सुनन्दितजनाशयम् ॥ ११० ॥

महाभिषक् तस्य महानुभावस्ततो महिष्यां नृपतेरमुष्याम् ।
जज्ञे स विज्ञातगुणैकधामा शान्ताशयः शन्तनुनामधेयः ॥ १११ ॥

ततः प्रसूतं प्रसमीक्ष्य पुत्रं प्रभूतमोदाकुलधीः प्रतीपः ।
विधिं वितेने विधिना द्विजानां समं समाजैः समयानुरूपम् ॥ ११२ ॥

---

मानुष्यमित्यादि । मानुष्यं मनुष्यभावम् ॥ १०९ ॥

तदन्वित्यादि । निजनिगमात् स्वपुरात् । स्वधीयानः स्वाध्यायं कुर्वन् । स्नुषा पुत्रभार्या । वामेतरं दक्षिणम् । विहितसमयः कृतशपथः, "वत्स काचिदबले"त्यादिवक्ष्यमाणप्रकारेण । प्रतीपभूपाः शत्रुरा (जानः ? जाः) । सुतीयन् आत्मनः सुतमिच्छन् । सुनन्दनीयया (सुष्ठुः) नन्दनेच्छा यस्याः तया ॥

एवमित्यादि । बहुतिथे बहूनां पूरके । दौहृदं गर्भम् । देधे धृतवती । 'दध धारणे' ॥ ११० ॥

महाभिषगित्यादि । विज्ञातगुणैकधामा विज्ञातानां प्रसिद्धानां गुणानामेकं मुख्यं धाम स्थानम् ॥ १११ ॥

तत इत्यादि । समयानुरूपं तत्तत्कालोचितम् ॥ ११२ ॥

एवमवाप्तमनोरथः प्रथमानपृथुमोदः स पृथिवीपतिः कमपि काल-मधिगताधिकरसं पुरमधिवसन् पुनः प्रोद्भिन्नयौवने विशदतरयशो-निलयने निजनन्दने प्राज्यतरानुभावसदने निधाय राज्यभारं वैजयिकी-भिराशीर्भिरभियोज्य 'ननु वत्स! काचिदबला त्वत्सकाशमायास्यति, सा त्वया निर्विचारमुररीकरणीये'ति निभृतमुपदिश्य विश्वविषयग्राम-विमुखः स्वगृहिणीसखः सुयमितेन्द्रियवाजी विपिनभुवमवाजीत् ॥

प्रशस्यया तया साकं प्रेयस्या प्रयताशयः ।
तपस्यां स चरन्नस्थात् तपस्विगहने वने ॥ ११३ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
अष्टमः स्तवकः ॥

---

एवमित्यादि । वैजयिकीभिः विजयप्रयोजनाभिः । निर्विचारं कुल-नामादिकमपृष्ट्वैवेत्यर्थः । विषयग्रामाः स्रक्चन्दनादयः । स्वगृहिणीसखः स्वगृहिण्याः सखा । 'राजाहः—' (पा० सू० ५-४-९१) इति टच् । सुयमितेन्द्रियवाजी सुयमिता इन्द्रियाण्येव वाजिनो येन सः । अवाजीद् गतवान् ॥

प्रशस्ययेत्यादि । प्रेयस्या प्रियतमया । अस्थात् स्थितवान् । 'गातिस्था-' (पा०सू० २-४-७७) इति सिचो लुक् । तपस्विगहने तपस्विभिः पूर्णे ॥ ११३ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये अष्टमः स्तवकः ।

तातें यातवति प्रतीतमहिमा सोऽयं प्रतीपात्मजो
नीतीनां निलयः प्रजाः प्रमदयन् संभावयन् सैनिकान् ।
विश्वानप्रमतो विजित्य समरे विश्वम्भराधीश्वरान्
संप्राप्तो लघु सार्वभौमपदवीं गोत्रां समत्रायत ॥ १ ॥

दधत्सरोजासनशासनं तत् संप्राप्य जन्मान्तरसंस्थितोऽपि ।
तत्याज सोऽयं न महाभिषक्त्वं विश्वोपतापोपशमं वितन्वन् ॥ २ ॥

मित्राणामप्यमित्राणां निलयान् निखिलानपि ।
कृपायुतोऽयमतनोद् भूरिभूतिविभूषितान् ॥ ३ ॥

विश्वाग्र्यैरश्वमेधैर्विधिविहितवितानैरहीनैरहीनै
राजासौ राजसूयैः क्रतुशतमहितैर्भूरिसत्रैश्च सत्रैः ।
इष्टैरन्यैश्च शिष्टैर्विधिवदिह यजन् देशकालानुरूपै-
स्तैस्तैर्दानैश्च शश्वन्निखिलतनुभृतां शन्तनुः शं ततान ॥ ४ ॥

---

तात इत्यादि । सार्वभौमः सर्वभूमेरीश्वरः । 'तस्येश्वरः' (पा० सू० ५-१-४२) इत्यण् । समत्रायत रक्षितवान् । 'त्रैङ् पालने' ॥ १ ॥

दधदित्यादि । महांश्चासौ भिषक् च, महाभिषगिति च । "भिषग्वैद्यौ चिकित्सके" इत्यमरः । विश्वोपतापानां, सर्वव्याधीनां च ॥ २ ॥

मित्राणामित्यादि । कृपया युतः, अयुतश्च । "भूतिर्भस्मनि सम्पदि" इत्यमरः ॥ ३ ॥

विश्वेत्यादि । अहीनैः उत्कृष्टैः । अह्नां समूहरूपः क्रतुरहीनः । "अह्नः खः क्रतौ—" (वा०) इति खः । अग्निष्टोमातिरात्रादय एकसुत्याः । द्विसुत्यादारभ्य एकादशसुत्यपर्यन्तोऽहीनः । द्वादशाहं त्वहीनस्सत्रं वा । अत ऊर्ध्वं सत्रमेव । राज्ञा सोतव्यः, राजा वा सूयते राजसूयः । 'राजसूयसूर्य—' (पा० सू० ३-१-११४) इति निपातः । क्रतुशतमहितैः अग्निष्टोमशतसहितो हि

एवमवाप्तमनोरथः प्रथमानपृथुमोदः स पृथिवीपतिः कमपि काल-मधिगताधिकरसं पुरमधिवसन् पुनः प्रोद्भिन्नयौवने विशदतरयशोनिलयने निजनन्दने प्राज्यतरानुभावसदने निधाय राज्यभारं वैजयिकीभिराशीर्भिरभियोज्य 'ननु वत्स! काचिदबला त्वत्सकाशमायास्यति, सा त्वया निर्विचारमुररीकरणीये'ति निभृतमुपदिश्य विश्वविषयग्राम-विमुखः स्वगृहिणीसखः सुयमितेन्द्रियवाजी विपिनभुवमवाजीत् ॥

प्रशस्यया तया साकं प्रेयस्या प्रयताशयः ।
तपस्यां स चरन्नस्थात् तपस्विगहने वने ॥ ११३ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
अष्टमः स्तवकः ॥

---

एवमित्यादि । वैजयिकीभिः विजयप्रयोजनाभिः । निर्विचारं कुल-नामादिकमपृष्ट्वेत्यर्थः । विषयग्रामाः स्रक्चन्दनादयः । स्वगृहिणीसखः स्वगृहिण्याः सखा । 'राजाहः—' (पा० सू० ५-४-९१) इति टच् । सुयमितेन्द्रियवाजी सुयमिता इन्द्रियाण्येव वाजिनो येन सः । अवाजीद् गतवान् ॥

प्रशस्ययेत्यादि । प्रेयस्या प्रियतमया । अस्थात् स्थितवान् । 'गातिस्था-' (पा०सू० २-४-७७) इति सिचो लुक् । तपस्विगहने तपस्विभिः पूर्णे ॥ ११३ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये अष्टमः स्तवकः ।

तातेयातवति प्रतीतमहिमा सोऽयं प्रतीपात्मजो
नीतीनां निलयः प्रजाः प्रमदयन् संभावयन् सैनिकान् ।
विश्वानश्रमतो विजित्य समरे विश्वम्भराधीश्वरान्
संप्राप्तो लघु सार्वभौमपदवीं गोलां समत्रायत ॥ १ ॥

दधत्सरोजासनशासनं तत् संप्राप्य जन्मान्तरसंस्थितोऽपि ।
तत्याज सोऽयं न महाभिषक्त्वं विश्वोपतापोपशमं वितन्वन् ॥ २ ॥

मित्राणामप्यमित्राणां निलयान् निखिलानपि ।
कृपायुतोऽयमतनोद् भूरिभूतिविभूषितान् ॥ ३ ॥

विश्वाग्र्यैरश्वमेधैर्विधिविहितवितानैरहीनैरहीनै
राजासौ राजसूयैः क्रतुशतमहितैर्भूरिसत्रैश्च सत्रैः ।
इष्टैरन्यैश्च शिष्टैर्विधिवदिह यजन् देशकालानुरूपै-
स्तैस्तैर्दानैश्च शश्वन्निखिलतनुभृतां शन्तनुः शं ततान ॥ ४ ॥

---

तात इत्यादि । सार्वभौमः सर्वभूमेरीश्वरः । 'तस्येश्वरः' (पा० सू० ५-१-४२) इत्यण् । समत्रायत रक्षितवान् । 'त्रैङ् पालने' ॥ १ ॥

दधदित्यादि । महांश्चासौ भिषक् च, महाभिषगिति च । "भिषग्वैद्यौ चिकित्सके" इत्यमरः । विश्वोपतापानां, सर्वव्याधीनां च ॥ २ ॥

मित्राणामित्यादि । कृपया, युतः, अयुतश्च । "भूतिर्भसनि सम्पदि" इत्यमरः ॥ ३ ॥

विश्वेत्यादि । अहीनैः उत्कृष्टैः । अह्नां समूहरूपः क्रतुरहीनः । "अह्नः खः क्रतौ—" (वा०) इति खः । अग्निष्टोमातिरात्रादय एकसुत्याः । द्विसुत्यादारभ्य एकादशसुत्यपर्यन्तोऽहीनः । द्वादशाहं त्वहीनस्सत्रं वा । अत ऊर्ध्वं सत्रमेव । राज्ञा सोतव्यः, राजा वा सूयते राजसूयः । 'राजसूयसूर्य—' (पा० सू० ३-१-११४) इति निपातः । क्रतुशतमहितैः अग्निष्टोमशतसहितो हि

इति जनितजनतामोदमुदधिमेखलामचलामखिलामपि परिपालयन् हस्तिनाख्यं पत्तनाग्र्यमधिवसन्नतिशयशैत्यदुःस्पर्शतरवारिधाराहतविमतवीरवेगालिङ्गितकुचकलशदेवाङ्गनाजनाभिनन्द्यमानमहितानुभावः स वसुधातलवलशासनः कदाचन आखेटखेलनाय अटवीतलमाटेकमानः प्रकटतरवेगं भयादितस्ततः परिपटन्तीं परिरटन्तीं विविधमृगघटां विपाठझाटेन विपाटयन्नेव पर्यटवि पर्यटन् परिश्रमादम्भस्यया पम्पस्यन्नमरतटिनीतटीमाटीक्य मृदुलतरतरङ्गरङ्गदतिशिशिरमन्दमारुतपरिकर्शितपरिश्रमतया सञ्चितरसमिह सञ्चचार ॥

तदा मन्दमन्दं निजोपान्तमायान्तीं वातपोतविधूतविविधविटपिविटपाग्रविकीर्यमाणकुसुमोत्करपरिस्खलनेऽपि परां म्लानिमाबिभ्रता रुद्रपुष्पदर्पच्छेदनच्छेकतररुचिभरपेशलेन बालपल्लवपेलवेन पदतल्लजयुगेन प्रतिविन्यासं प्रतीरेऽप्यरुणपङ्कजोदयशङ्कामङ्कुरयन्तीं प्रतिनवसुधासारसुभगसुषमाप्रवाहदूरनिर्मग्ननिर्मलाङ्गवल्लीं निखिलाङ्गनाजनाङ्गसङ्गिनीं लावण्यवेणीमिव एकत्र संभूय संभृतातिमहितमहिलारूपाम्

---

राजसूयः । भूरिसवैः भूरिदानैः । सत्रैः यजनविशेषैः । बहुयजमानकर्तृकं हि सत्रं न तु यज्ञमात्रम् । इष्टैरन्यैः उक्थ्यादिभिः क्रतुभिः । शं सुखम् ॥ ४ ॥

इतीत्यादि । शैत्यं शितत्वं, शीतत्वं च । दुःस्पर्शा दुःस्पर्शतरा च । तरवारिः असिः । "हरकस्तरवारिः स्त्री यष्टिश्च" इति वैजयन्ती । तस्य धारा, वारिधारा च । शैत्यातिशयात् कुचकलशालिङ्गनमित्यपि स्फुरति । आखेटः मृगया । आटेकमानः गच्छन् । टिक्ठ टीकृ गत्यर्थः । परिपटन्तीं गच्छन्तीम् । 'अट पट गतौ' । विपाठझाटेन शरनिकरेण । 'जट झट सङ्घाते' । घञ् । पर्यटवि अटव्याम् । अम्भस्यया आत्मन उदकेच्छया । 'सुप आत्मनः क्यच्' (पा०सू० ३-१-८)। पम्पस्यन् पीडितः। 'तन्तस् पम्पस् दुःखे' इति कण्ड्वादौ । आटीक्य गत्वा । रङ्गन् गच्छन् ॥

तदेत्यादि । रुद्रपुष्पं जपा । छेकतरः अतिशयेन विदग्धः । प्रतिविन्यासं विन्यासे विन्यासे । प्रतीरे तटे । अपाङ्गभूतम् अङ्गरहितमित्यर्थः । अपाङ्गाद् भूतं च ॥

अनल्पामात्मनश्शिल्पचातुरीं विश्वलोके प्रकाशयितुमिव विश्वशिल्पिना परिकल्पितामपाङ्गभूतं मदनं पुनरप्यपाङ्गभूतमापादयन्तीमखिलललना-कुलमौलिमालायमानां कामपि महेलां महनीयहेलाभरविलोभितनिखिल-लोकाम् अवलोकयामास । ततस्तदैव,

पयोधरभरोद्विग्ना यान्ती मन्थरमन्थरम् ।
ततः सा राजहंसीयमाविवेशाशु मानसम् ॥ ५ ॥

ततस्तत्क्षणोन्मिषितविषमेषुविक्षोभितमतिः क्षोणीपतिः 'अहो! का नामेयम् अतिक्रमनरूपकान्तिः अनुरहसमालोकपथमवतीर्णा वर-वर्णिनी । या पुनरनाकलितकुलनामाप्यनाकुलमेव त्वया भजनीयेति तातेन गदितासीद् अपिनाम मम सुचरितैरियमेव सा स्यात् । अपि-नामेयं मम जन्म सफलयेत् । अपिनाम पुनः कालोऽयं ममानुकूलः स्यात् । भवतु, नियतमस्या वचनादेव निखिलमवधारितं स्यादि'ति मनसिकृत्य मन्दारतरुमरन्दधोरणीसोदरीं वैखरीमुदीरयामास ॥

वामाङ्गीमौलिमाले! भुवि परमहमेवाग्रणीः पुण्यभाजां
यत् त्वं रूपाभिभूतत्रिदशपुरवधूरक्षिलक्षीकृतासि ।
का त्वं मुग्धाक्षि! तातः पुरुसुकृतनिधिः को नु वा तावकीनो
वंशो वा शोभतेऽद्य त्रिजगति कतमो जन्मना तावकेन ॥ ६ ॥

---

पयोधरेत्यादि । "स्त्रीस्तनाब्दौ पयोधरौ" इत्यमरः । राजहंसीयं राजहंससंबन्धि । तस्येदमित्यर्थे 'वृद्धाच्छः' (पा० सू० ४-२-१४४) । राज-हंसी इयमिति च । मानसं मनः, सरोविशेषं च । राजहंसी मानससरो विशे-दित्यपि स्फुरति ॥ ५ ॥

तत इत्यादि । अतिक्रमना अतिक्रान्ता । णिङभावे 'कृत्यल्युट' इति बहुलग्रहणात् कर्मणि ल्युट् । अनुरहसं रहसि । 'अन्ववतप्तात्–' (पा० सू० ५-४-८१)इति समासान्तः । अपिनाम दैवप्रार्थनायाम् । भवतु आन्तरनिर्णये । धोरणी प्रवाहः । वैखरीं वाचम् ॥

वामेत्यादि । अक्षिलक्षीकृता दृष्टा ॥ ६ ॥

क्षोणीपालानयन्ते जगति कतिपये स्वापतेयाभिलाषा-
दक्षामक्षेमकामात् कतिचिदिह जनाः केचिदैश्वर्यलोभात् ।
दिव्याकल्पातिवेलोज्ज्वलतनुलतिके! विश्वरम्याकृते! त्वं
कस्मादस्मत्समीपं तिलकयसि धृतानन्दमाभ्यां पदाभ्याम् ॥ ७॥

बाले! लोकातिशायिप्रसृमरसुषमाजूषनिष्यन्दमूर्ते!
दिष्ट्या दृष्टिर्मदीया पुरुसुकृतनिधिस्तूर्णमापूर्णकामा ।
अन्यान्यन्यूनमन्यून्ययि सुमुखि! हृषीकाण्यहो मे कदा वा
जायेरन् पूर्णकामान्यखिलजनमनोमोदनोदारशीले! ॥ ८ ॥

ननु मम भजनीया भाजनं त्वं गुणानां
वदति च तनुलक्ष्मीराभिजात्यं तवैषा ।
वरतनु! तव मुग्धस्निग्धहासावलोक-
प्रसभहृतधियो मे पूरयाकाङ्क्षितं तत् ॥ ९ ॥

मानोज्ञकायतनगात्रि! मनोज्ञशीले!
मानादिदं मम मनो मदनो दुनोति ।
मामा वर्तेधि विमुखीह सुखाकुरुष्व
मां भृङ्गपालिरुचिभङ्गकरैरपाङ्गैः ॥ १० ॥

---

अथ सर्वजनसाधारणकारणाक्षेपपूर्वकं निजाभिसरणहेतुं जिज्ञासते—**क्षोणी-त्यादि** । दिव्याकल्पैः अतिवेलोज्ज्वला तनुलतिका यस्याः सा । एतदुक्तशङ्कानवकाशे हेतुः । महता च कारणेन भवितव्यमित्याह—आभ्यां पदाभ्यामिति ॥ ७॥

जिज्ञासितं च कारणं स्वयमेवाभ्यूह्य स्वाभिलषितप्रकाशने तत् स्पष्टीभविष्यतीति मत्वाह—**बाले इत्यादि** । अन्यानि श्रोत्रादीनि । हृषीकाणि इन्द्रियाणि । मन्युः दुःखं, "मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः ॥ ८ ॥

**नन्वित्यादि** । आभिजात्यं अभिजातत्वम् । अभितः उभयतः शुद्धे कुले जातः अभिजातः कुलीनः । मुग्धः मनोहरः ॥ ९ ॥

**मानोज्ञकेत्यादि** । मानोज्ञकं मनोज्ञत्वं, 'द्वन्द्वमनोज्ञादिभ्यश्च—'(पा०सू० ५-१-१३३) इति वुञ् । मत्समो नास्तीति मननं मानम् । दुनोति

इत्थं पृथ्वीवलारेरतिमधुरगभीराकृतेराननेन्दो-
रानन्दाद्द्वैतसारां मृदुमृदु गलितामुक्तिपीयूषधाराम् ।
आमोदादापिबन्ती समुदितमदना संविदं भैमसेनेः
स्मृत्वा मन्दाकिनी सा मधुरमभिदधे विश्वसम्माननीया ॥ ११ ॥

अयि! कलय न दीनां काञ्चिदभ्यागतां मां
नरवर! वसुहेतोः शासति त्वय्यनापत् ।
क इव न धनिकः स्यादीशिता का वधूना-
महमिह गुणपाशैः केवलं ते विकृष्टा ॥ १२ ॥

अयि सुभग! जगत्यां का न दिव्यानुभावे
त्वयि भुवनमनोज्ञे रम्यशीले रमेत ।
अविरतमनुवर्तिन्येव तत् स्यां तव स्या-
दुचितमनुचितं वा तुष्टये चेष्टितं मे ॥ १३ ॥

---

परितपति। एधि भव। 'अस भुवी'त्यस्माल्लोट्। सुखाकुरुष्व आनुलोम्येन सुखय। 'सुखप्रियात्—' (पा० सू० ५-४-६३) इति डाच्। भृङ्गपालिः मधुकरश्रेणिः ॥ १० ॥

इत्थमित्यादि। द्वितयमेव द्वैतं प्रज्ञादि, तस्मादन्यदद्वैतम्। भैमसेनेः प्रतीपस्य। संविदं प्रतिज्ञां, स्मृत्वा ॥ ११ ॥

अयीत्यादि। अयि! मां वसुहेतोः अभ्यागतां दीनां काञ्चिद् न कलयेति बाह्यार्थः। मां नदीनां नदीश्रेष्ठां काञ्चिद्, गङ्गामिति यावत्। वसुहेतोः अष्टानां वसूनामर्थे अभ्यागतां कलयेत्याभ्यन्तरः। अनापद् यथा तथा दैवमानुषरूपापद्रहितमित्यर्थः। ईशिता ईशित्वं, घञन्तादिनिः, तदन्ताच्चल् ॥ १२ ॥

अयीत्यादि। अनुवर्तिनी अनुसरणशीला ॥ १३ ॥

किमिह परुषवाणीमन्तरेणान्विषह्यं
प्रियमुखगलिता सा किं पुनर्वल्लभानाम् ।
श्रवणकटु यदा वाङ् निस्सृता स्यात्तवास्याद्
द्रुततरमपगास्ये त्वद्गताशापयानात् ॥ १४ ॥

उदितसमयेन सर्वज्ञाङ्गजितानङ्ग मङ्गलावास ! ।
अङ्गीकुरु मां गङ्गां शम्भुरिवाशेषभूतमोदकर ! ॥ १५ ॥

अनन्तरमस्फुटितकुलनामधेयायास्तस्या वदननलिनोदरविगलितामतिललितां वचोमधुझरीमनास्वादितचरीमास्वाद्यान्तरध्यवसितमनोरथसिद्धिः अतिशयितमोदविवशतराशयोऽयम् 'अयि ! सकललोकलोभनीयशीले ! तव खलु चेष्टितानि न कस्य तुष्टिदानि । तद् 'भृशमहितशीलां न त्वाप्रियमभिधास्ये' इति सरसमभिधाय मोदमानमानसामेनामवलम्बितकराम्बुजमविलम्बितमेव रथवरमधिरोप्य पुरीं निरुपमरमाविलासरङ्गभूतां रङ्गति स ॥

---

किमित्यादि । अपगास्ये गमिष्यामि । 'गाङ् गतौ' लट् । त्वद्गताशायाः अपयानाद् अपगमात् । शापयानात् शापनिवृत्तेरित्यपि स्फुरति ॥ १४ ॥

उदितसमयेनेत्यादि । उक्तसमयेन । अत्र विशेषणानि विभक्तिविपरिणामेन शम्भावपि सम्बध्यन्ते । सर्वं जानातीति सः । "कृशानुरेतास्सर्वज्ञः" इति शम्भौ च । अङ्गेन शरीरेण जितोऽनङ्गो येन तस्य संबोधनं अङ्गजितानङ्ग दग्धकाम । मङ्गलस्य, मङ्गलायाः श्रीपार्वत्याश्च । त्वं माम् अङ्गीकुरु । गङ्गां शम्भुरिव त्वं गङ्गां माम् अङ्गीकुरु । शंभुरिवेति च । अशेषभूताः अशेषजनाः, भूतगणाश्च ॥ १५ ॥

अनन्तरमित्यादि । अस्फुटिते अस्पष्टीकृते । भृशमहितम् अत्यर्थमहितं पूजितं शीलं यस्याः ताम् । (त्वा) त्वाम् अप्रियं नाभिधास्ये । भृशमत्यर्थम् अहितशीलाम् अहितमनिष्टं शीलं यस्याः तां त्वां प्रियं नाभिधास्ये इति च स्फुरति । रङ्गति स प्राप्तवान् ॥

आनीय कमनीयाङ्गीं कमनीमवनीपतिः ।
अभिरामे पुरे रेमे रमया समयानया ॥ १६ ॥

अनङ्गलीलायितरङ्गभूतया
तरङ्गितात्मा बत! गङ्गया तया ।
अनन्यसामान्यगुणाभिरामया
गतान्यजानीत न वासराण्यसौ ॥ १७ ॥

प्रत्यब्दं तत्र पुत्रानजनयदथ सा सप्त सप्ताश्वदेश्यां-
स्ते मात्रा जातमात्रा निजपयसि निपात्यात्ययं यापिताश्च ।
दृष्ट्वा चेष्टां तदीयामयमखिलजगन्निन्दितां नन्दनीय-
न्नप्याशाभङ्गभीरुः परमचलमतिश्चक्षमे च क्षमेशः ॥ १८ ॥

अनन्तरमष्टममपि नन्दनं विष्टपत्रयादृष्टकान्तिकन्दलं सहसा गलोपपीडं हन्तुकामामिमां वामाकुलमौलिमालामवलोक्य कोपशोकविश्रन्थितधैर्यबन्धो वसुन्धराशासनधुरन्धरः स शन्तनुः अरुन्तुदां गिरमुदीरयामास ॥

---

आनीयेत्यादि । कमनी । ल्युडन्ताद् ङीप् ॥ १६ ॥

अनङ्गेत्यादि । लीलायितं विलासः । वासराणि गतानि न अजानीत न ज्ञातवान् ॥ १७ ॥

प्रत्यब्दमित्यादि । प्रतिवत्सरम् । निजपयसि गङ्गास्रोतसि । अत्ययं नाशम् । यापिताः प्रापिताः । नन्दनीयन् आत्मनः पुत्रमिच्छन्नपि । 'सुप आत्मनः–' (पा० सू० ३-१-८) इति क्यच् । चक्षमे सोढवान् । 'क्षमूष् सहने' ॥ १८ ॥

अनन्तरमित्यादि । गलोपपीडं गले उपपीड्य । विश्रन्थितः शिथिलितः । 'श्रथि शैथिल्ये' । अरुन्तुदां मर्मस्पृशम् ॥

मा मा वधीरयनमेनमये! गुणानां
मा मावधीरय वरं वरवर्णिनि! त्वम् ।
आशासु तान्तकरुणे! दशसु प्रसूना-
माशा सुतान्तकरणे प्रसरेन्नु कासाम् ॥ १९ ॥

राज्ञा सावज्ञमेवं तदनु निगदिता सा न्यगादीददीनां
वाचं राजन्! न चाहं तव तनयमिमं हन्मि तन्मा विषीद ।
एषा साक्षात् पयोजेक्षणचरणभवा नन्वहं जह्नुकन्या
कल्माषोन्माथशीला नरवर! शृणु मे चेष्टितस्यास्य हेतुम् ॥ २० ॥

पुरा कदाचन धराचलाशया धाराद्योऽष्टावपि वसवः इष्टाभिरतिहृष्टाभिः स्वपत्नीभिः सह विहरणपरास्तेषु तेषु वनसञ्चरेषु सञ्चरन्तो नन्यतरदिव्यतरुसच्छायं सुवर्णगिरिवराभ्यर्णोपशोभमानम् आततपोधनमापवतपोवनमवापुः ॥

ततस्तत्र फलानयनाय वनावनीगतस्य तस्य निखिलजननयनहारिणीं जरामरणहारिपयोधारिणीं स्वसञ्चारसंपावितविपिनपदवीं

---

मा मेत्यादि । मा मा वधीः निगृह्णीष्व गुणानामयनम् । वरं भर्तारं मा मा माम् अवधीरय निन्द । तान्तकरुणे निर्दये । दशसु आशासु कासां प्रसूनां मातृणाम् । सुतस्य अन्तकरणे निग्रहे आशा प्रसरेन्नु ॥ १९ ॥

राज्ञेत्यादि । न हन्मि न हनिष्यामि । साक्षात् प्रत्यक्षम्, अव्यवधानेन । उन्माथः उन्मथनम् ॥ २० ॥

पुरेत्यादि । धराचलाशयाः धरवद् अचलवद् आशयो येषां ते । अनेन तेषां वसिष्ठधेनुहरणचापल्यं भवितव्यताबलाज्जातमिति सूच्यते । (दिव्यतरुसच्छायं) दिव्यतरुभिः सच्छायं शोभया अनातपेन च सहितम् । (आततपोधनं) आततास्तपोधना यत्र । आपवस्य वसिष्ठस्य । "आपवस्तु वसिष्ठः स्याद्" इति निघण्टुः ॥

तत इत्यादि । संपाविता पवित्रीकृता । सौरभेयीं गाम् । आश्रमगृह्यायाः आश्रमबाह्यायाः ॥

होमगवीं निशाम्यौशीनरस्य शिवेः सुताया निजवयस्याया हितापादनोत्सवसमुत्सुकया प्रेयस्या चोद्यमानो द्यौरिति व्यपदिष्टोऽयमष्टमो वसुर्दिष्टबलाद्दषित्रयतपोवीर्यमप्रसह्यमगणयन् प्रसह्य भ्रातृभिस्सह सौरभेयीमिमामपहरन्नस्याः पुनरप्रतिमप्रभावात् कृतश्रमोऽप्याश्रमगृह्याया भुवोऽपनेतुमपारयन्नत्रैव परिबभ्राम ॥

तत्क्षणमेव कक्षान्तरादुपागतेन तेन वसिष्ठेन नेदिष्ठभुवि होमधेनुमनीक्षमाणेन दिव्येन चक्षुषा विदितसकलवृत्तान्तेन सरोषं 'मानुषीं योनिं याते'ति शप्ता दृप्ताशयास्ते सद्य एव तप्ताशया वसवस्तमासाद्य प्रसादयामासुः ॥

अनन्तरमनेन परमकारुणिकेन भगवता मैत्रावरुणिना 'हे धराद्यास्सप्त यूयं धरायामुत्पद्य सद्य एवापेतशापा द्यामापद्यध्वम् । अयं द्यौः पुनः उरुतरापराधाद् गुरुतरानेहसं मनुजतामुपगतो भवतां पार्श्वमेव भवताद्' इत्यनुगृहीता निवृत्तमानास्ततो निवर्तमानास्तेऽष्टावपि नष्टशोभा माहापनयमहापनयापतितं शापमपहातुमनसो यदृच्छया मम समीपं विच्छायिताः । मूर्च्छितानुशयम् 'अयि सकलनरलोकपावनि! वसिष्ठशापेन निकृष्टरूपां मनुष्ययोनिमनुपतिष्यतो नस्त्वमेव मानुषीभावमासेदुषी जनयित्वा निखिलशमलविनेजने निजे जले क्षिप्रमेव प्रक्षिपन्ती शापाग्नितापं निर्वापये'ति नाथिताहं तथैवेति तान् सद्यः प्रसाद्यावसरप्रतीक्षा स्थितवती ॥

---

तत्क्षणमित्यादि । कक्षान्तराद् वनान्तरात् । नेदिष्ठभुवि अन्तिकतमे प्रदेशे । यात प्राप्नुत ॥

अनन्तरमित्यादि । द्यां स्वर्गम् । आपद्यध्वं प्राप्नुत । पार्श्वमेव भवतात् प्राप्नोतु । माहापनयः गोहरणं तद्रूपेण (महापनयेन) महता अपनयेन । विच्छायिताः प्राप्ताः । अनुपतिष्यतः पतितुमारब्धान् । विनेजने शोधने । नाथिता याचिता ॥

ततस्त्वया भूप! पवित्रकीर्तिना विधेर्नियोगादहमङ्ग! सङ्गता ।
अकार्षमेषां ननु शापमोक्षणं जुगुप्सितेनापि च कर्मणामुना ॥२१॥

अयं पुनर्द्यौः अतिविद्योतमानगुणगणो गङ्गादत्त इति देवव्रत इति चाख्याद्वयविख्यातो मैत्रावरुणिवाणीबलादत्रैव गोत्रातले चिरराताय वर्तेत ॥

मया तु समयातिक्रमादधुनैवापक्रमणीयम् । अर्भकाणामिहाल्पकालमपि स्वप्रसूवियोगः पुनरनल्पतापाय कल्पते । ततोऽयं मया सहागत्यातिवाहितशैशवस्तव समीपमेवोपयास्यति ॥

अयि नृवर! यदा मां संस्मरेस्तावदेत्य
प्रियमनघ! पुरा ते शन्तनो! सन्तनोमि ।
इति गिरमभिधाय स्वं समादाय बालं
सपदि विधुतवेधःशापरोधा तिरोधात् ॥ २२ ॥

अह्नाय पुत्रेण तिरोहितायां जह्नोः सुतायां सुतरां हितायाम् ।
भूपः क्षणार्धं स वितायमानतापः पुरास्ते पुरि दीनदीनः ॥ २३ ॥

तस्यास्तस्यापि सूनोरहह! विरहतो व्याकुलात्मापि धर्मः
स्वीयो नोल्लङ्घनीयः क्वचिदिति वसुधामञ्जसैवैष भुञ्जन् ।
क्षामाङ्गः क्ष्माविनेता विषयविमुखधीरेव षट्त्रिंशदब्दान्
गङ्गादत्तागमाशाभरत इह निजप्राणभारं बभार ॥ २४ ॥

---

तत इत्यादि । विधेर्नियोगाद् ईश्वरप्रेरणयेत्यर्थः । ब्रह्मणो नियोगादिति च स्फुरति । अकार्षं कृतवत्यस्मि । जुगुप्सितेन निन्दितेन ॥ २१ ॥

अयमित्यादि । चिरराताय चिरकालं, "चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः" इत्यमरः ॥

मयेत्यादि । अपक्रमणीयं गन्तव्यम् । अतिवाहितः यापितः ॥

अयीत्यादि । सन्तनोमि पुरा करिष्यामि । तिरोधाद् अन्तर्दधे ॥ २२ ॥

अह्नायेत्यादि । झटिति । आस्ते पुरा आसितवान् ॥ २३ ॥

तस्या इत्यादि । भुञ्जन् पालयन् ॥ २४ ॥

तदनु कदाचन श्वापदत्रासिततापसत्राणाभावभव्रां पापर्द्धिं परिहर्तुकामोऽपि पापर्द्धिमेव कर्तुकामः स धात्रीपतिसत्तमो द्दप्ततरसत्त्वगणचित्तमदवर्धिनीमदूरवर्तिनीं वनवर्तिनीं वेगादगाहत ॥

वनाविष्टो दुष्टां सपदि परिमथ्नन् मृगघटां
चरन् भागीरथ्या नृपतिरयमाटीकत तटीम् ।
तदा गङ्गादत्तो विहरणपरो गाङ्गमुदकं
शरस्तम्बैश्शूरः पुनरयमतस्तम्भदपि च ॥ २५ ॥

अनन्तरमयं शन्तनुरनन्तजलाममन्दरयामपि मन्दाकिनीमतिक्षामतोयामध्यक्षयन् अहो किमिदमितीत्यक्षिणी दिक्षु विक्षिपन्नक्षोणानुभावमक्षामावधानं लक्षोत्तरैः पृषत्कोत्करैः पुष्कलौघं पुष्करौघं निरन्तरमारुन्धानमविहस्तं कममि कृतहस्तं कृतसमस्तशोकसंहननं सिंहसंहननं युवानमालोक्य विस्मयमानमानसः 'कोऽयं दिव्यानुभावो नव्यतरतारुण्यलक्ष्मीसमाश्लेषसुभगम्भावुकः, कस्य वा शस्यतरसुचरितस्य तनयः स्यात्, कस्मात् पुनरौरस इवास्मिन्नस्मदीयं चित्तमभिरमते' इति चिन्तयन्नदसीयास्येन्दुनिष्यन्दिनीं सुषमासुधामास्वादमास्वादमेष निमेषरहित एवावतिष्ठते स ॥

---

तदन्वित्यादि । श्वापदैः हिंस्रैः त्रासितानाम् । पापस्य ऋद्धिं महान्तं पापम् । पापर्द्धिं मृगयाम् । वनवर्तिनीं वनमार्गम् ॥

वनेत्यादि । आटीकत प्राप्तवान् । शरस्तम्बैः शरकाण्डैः । अतस्तम्भत् स्तम्भयति स्म । 'ष्टभि स्तभि प्रतिबन्धे' ॥ २५ ॥

अनन्तरमित्यादि । अध्यक्षयन् पश्यन् । लक्षोत्तरैः असंख्यैरित्यर्थः । पुष्कलौघं पूर्णरयम् । "ओघो वृन्देऽम्भसां रये" इत्यमरः । पुष्करौघं जलसमूहम् । अविहस्तम् अव्याकुलम् । कृतहस्तं लघुहस्तम् । "कृतहस्तः सुप्रयोगविशिखः" इत्यमरः । "कृतौ शिक्षितौ हस्तौ यस्यासौ कृतहस्तः" इति सुबोधिनी । शोकसंहननं शोकहन्तारम् । "वराङ्गरूपोपेतो यः सिंहसंहननो हि सः" इत्यमरः । आस्वादमास्वादम् आस्वाद्यास्वाद्य ॥

प्रेक्ष्य तत्र पितरं पुरःस्थितं प्रेमभारभरिताशयोऽपि सः ।
सर्वसामयिककृत्यभेदवित् सद्य एव सलिले तिरोदधे ॥ २६ ॥

तिरोहितेऽस्मिन्नमरापगायां नराधिपो भूरितराङ्गसुतोऽयम् ।
किं मे सुतोऽसाविति शङ्कमानः सस्मार गङ्गां कृतसंविदं ताम् ॥२७॥

तदनु निहतनिखिलाश्रितलोकशोकभारा महाभागा भगवती भागीरथी मर्त्यलोकादृष्टचरविशिष्टतरवेषभूषाम्बरतया परितः प्रसरीसृप्यमाणनिरुपमानरोचिष्कतया च पुष्कलदिव्यानुभावा परार्ध्यतराकल्पपरिकल्पितानल्परामणीयकं समस्तदिव्यास्त्रदेवतासन्निधानदेदीप्यमानं वज्रसंहननमुद्भिन्नयौवनं तनुजमपि निजं दक्षिणे पाणौ गृह्णती तनयावलोकनकुतुकितमतेरस्य मेदिनीपतेर्नयनपथमवतरन्ती मन्दमन्दं सविधमुवमुपगम्य, "हे महाभाग! महीपते! पुरा जातमात्र एव मया लोकोत्तरानुभावापादनाय नीतो मतिवलवर्धनकरैर्मनुजलोकदुर्लभतरैराहारैः परिपोषितो वसिष्ठोपदिष्टसकलविद्याकलापो गुरुभृगुभ्यामेवाभ्यासितनिजनिजनीतिशास्त्रसिद्धान्तसारो जामदग्न्यावगमिताग्नेयमुखनिखिलास्त्रविद्यासंप्रदायः सकलसुरासुरदुराधर्षवीर्यमहिमा बहुपुरन्दरोऽयं तव नन्दनः परिगृह्यता"मिति मुहुर्मुहुः परिरभ्य तद्वियोगविचिन्तननिरन्तरनिरीयमाणवाष्पझरीपरिप्लुतवक्त्रारविन्दा कथमप्यमुमर्पयित्वा प्रणयभारविवशतराशया पदेपदे तमेव प्रेक्षमाणा प्रवाहाभिमुखी प्रतिष्ठते स्म ॥

---

प्रेक्ष्येत्यादि । समयः प्राप्तो येषां ते सामयिकाः ते च कृत्यभेदाः कार्यविशेषाश्च तान् वेत्तीति तथा। 'समयस्तदस्य प्राप्तम्' (पा०सू० ५-१-१०४) इति ठञ् ॥ २६ ॥

तिरोहित इत्यादि । कृतसंविदं कृतप्रतिज्ञाम् ॥ २७ ॥

तदन्वित्यादि । वज्रसंहननं वज्रमिव स्थिरतरं संहननं शरीरं यस्य । अवगमितः ज्ञापितः । बहुपुरन्दरः पुरन्दरसदृशः । प्रतिष्ठते स्म गता ॥

आदाय स तदा मोदात् तनयं विनयान्वितम् ।
उदीतमोदपौरौघपरीतां नगरीमगात् ॥ २८ ॥

पुत्रेण गुणपात्रेण सत्रा स त्रासितारिणा ।
धात्रीवृत्रारिरत्रास्त सुखमत्रास्त च प्रजाः ॥ २९ ॥

काले तस्मिन् कदाचिद्वसुरुपरिचरो नाम विख्यातवीर्यो
राजा राज्ञा समानो महितनिजकरभ्राजिताशेषविश्वः ।
पादाधूताम्बुजाभः परिकलितकलासञ्चयः साधुवृत्तः
सद्भिः सेव्यस्तपस्यन् विपिनपदमगाहिष्ट वाचंयमेष्टम् ॥ ३० ॥

तदनु विजने विमलजलाशयोपशोभितसदेशे प्रदेशे उपविशन् विशांपतिर्वनस्थितात्माप्यवनस्थितात्मा, बलासक्तोऽप्यबलासक्तः चञ्चलतरमात्मपञ्चकमिन्द्रियपञ्चकं विषयप्रपञ्चात् प्रत्याहरन्नचञ्चलमना विरिञ्चादीनपि विस्मापयन् वास्तोष्पतिप्रसादाय परन्तपः स परं तपस्तप्यते स्म ॥

---

आदायेत्यादि । उदीतः उद्भूतः ॥ २८ ॥

पुत्रेणेत्यादि । सत्रा सह । अत्र आस्त आसितवान् । अत्रास्त च पालयामास च । 'त्रैङ् पालने' ॥ २९ ॥

काल इत्यादि । राज्ञा चन्द्रेण । निजकरैः आत्मीयरश्मिभिः । भ्राजितं शोभितम् । निजकरे स्वहस्ते च । पादैः रश्मिभिः, पादाभ्यां अङ्घ्रिभ्यां च । कलावृत्तसच्छब्दाः श्लिष्टाः । तपस्यन् तपश्चरन् । हेतौ शता । अगाहिष्ट प्राप्तवान् । वाचंयमाः मुनयः । "वाचि यमो व्रते" (पा० सू० ३-२-४०) इति खच् ॥ ३० ॥

तदन्वित्यादि । अबलासक्तः अबलासु असक्तः । चञ्चतेर्गत्यर्थे कविधानम् । चञ्चं लातीति चञ्चल इति सनातनः । प्रत्याहरन् समनसामिन्द्रियाणां विषयेभ्य आहरणं प्रत्याहारः । एतद्यमादीनामुपलक्षणम् । विस्मापयन्, अत्र हेतौ विस्मयः तेनात्वं पुगागमश्च । वास्तोष्पतिः इन्द्रः ॥

अनन्तरमुदीर्णमोदमभ्यर्णे तूर्णमवतीर्णेन सुरगणापूर्णपरिसरेण पुरन्दरेण वितीर्णं विजयधनधान्यादिवितरणनिपुणं वैणवं दण्डं शात्रवजनशस्त्रसार्थनिरर्थतोत्थापकम् इन्द्रमालाभिधं मालातल्लजं आकाशस्फाटिकाभिधानमाकूतगामिनं विमानमपि समोदं समादाय 'चेतसोऽतिरम्यं चेदिराज्यमेवाधिवस, अधिराज्यभागपि समेधी'ति समेधिताऽऽदरमनेनानुशिष्टोऽधितदमवतिष्ठमान उपतेष्ठीयमानबंहिष्ठबाहुजवरिष्ठनिरन्तराधिष्ठितनेदिष्ठभूमिः, कर्कशतरकर्कशतविक्षतविमतक्षोणिपगणशोणितधोरणीशोणीकृतनिखिलक्षोणीमण्डलः, गरुडध्वज इव अरिसमुद्धरणसमृद्धकान्तिः, महादेव इव महासेनोपशोभितोपकण्ठः, दाशरथिरिव दूषणोपहन्ता, शत्रुघ्न इव सदालोकश्रुतकीर्तिः, कुम्भकर्ण इव उदग्रविग्रहविजितपरधराभृद्गणः, विभीषण इव रामानुसरणनिपुणमतिः अनितरसाधारणगुणगणानुरञ्जितविविधविबुधजनो जनतां जनक इवायमवनिपालः पालयामास ॥

दृष्ट्वा शुक्तिमतीं पुरीपरिसरे यान्तीं स्रवन्तीवरां
रुन्धानं मदनान्धमेष कुपितः कोलाहलाख्यं गिरिम् ।
क्षोदीकृत्य पदाथ तद्विवरतो यान्त्या तया तुष्टया
तत्संयोगजमर्पितं नृमिथुनं जग्राह जातग्रहः ॥ २१ ॥

---

अनन्तरमित्यादि । आकूतमभिप्रायः । समेधि भव, 'अस भुवी'त्यस्य लोण्मध्यमपुरुषैकवचनम् । अधितदं तस्मिन् । उपतेष्ठीयमानाः पुनरुपस्थानं कुर्वन्तः । बंहिष्ठाः अतिशयेन बहुलाः । नेदिष्ठा अन्तिकतमा । इष्ठनि 'अन्तिकबाढयोः—' (पा०सू० ५-३-६३) इति नेदादेशः । कर्क आयुधविशेषः । अरिसमुद्धरणेन चक्रोद्धरणेन समृद्धा कान्तिः शोभा यस्य; अरिसमुद्धरणे शत्रुसमुन्मूलने कान्तिरिच्छा यस्य स च । महासेनो गुहः, महती सेना च । सदालोका श्रुतकीर्तिर्यस्य, सदा लोकेषु श्रुता कीर्तिर्यस्य स च । विग्रहः शरीरं, युद्धं च । धराभृतः पर्वता, राजानश्च । रामस्य रामाणां चानुसरणे ॥

दृष्ट्वेत्यादि । शुक्तिमती नाम काचिन्नदी । कोलाहल इति कश्चिद्गिरिः । तत्संयोगजं कोलाहलसंयोगजातम् ॥ २१ ॥

कृत्वा सेनाधिपत्ये पुरुषमिह पुनः पुण्यपूरैकलभ्यां
पाणौकृत्य स्त्रियं तां त्रिभुवनहृदयानन्दिनीं मेदिनीशः ।
आतन्वन्नादरेण स्वकुलसमुचितान्येतया रामयामा
रेमे चेतोभिरामे पुर इह गिरिकाभिख्यया ख्यातकीर्तिः ॥ ३२ ॥

भूपालो भूरिभूतिर्वसुरतिविलसच्चन्द्रभूषोत्तमाङ्गो
व्यामुक्ताहीनकाञ्चीलसितकटितटश्चेदिराज्ये विरेजे ।
शश्वन्निश्शेषभूतप्रणतचरणपङ्केरुहः कामदाता
कैलासाख्ये गिरीन्द्रे स्वयमिव गिरिजाप्राणनाथो गिरीशः ॥ ३३ ॥

एवमेव वृषण्वसुरसौ चेदिष्वधि वसुरधिवसन्नधरीकृतसुरपुरीचातुरीं पुरीं पुनरपत्यानवाप्तिपरितप्तचित्तो मध्यमलोकपालो महीमध्यमध्यासीनान् धार्मिकान् कार्मिकान् विनयभासुरान् अखिलभूसुरान् तत्तत्पदार्थजातप्रार्थनाय प्रार्थितान् अपरानप्यर्थिनः श्राद्धोऽलमुत्तमार्ध्यैर्बहुप्रकारैर्हन्तकारैरतिप्रीणनैरपिप्रीणत् ॥

---

कृत्वेत्यादि । पाणौकृत्य उपयम्य । गिरिकाभिख्यया गिरिकासंज्ञया ॥ ३२ ॥

भूपाल इत्यादि । "भूतिर्भस्मनि सम्पदि" इत्यमरः । चन्द्रः चन्द्रकला, सुवर्णं च । अहीनाः सर्पश्रेष्ठाः, अहीना उत्कृष्टा च । भूता भूतगणा, जनाश्च । कामदाता कामस्य खण्डयिता, अभीप्सितदाता च । गिरिजाया गौर्याः, गिरिकायाश्च प्राणनाथः ॥ ३३ ॥

एवमित्यादि । वृषण्वसुः, "वृषण्वसु धनाधैन्द्रं तादृग्वा यस्य तत्त्रिपु" इत्यमरः । चेदिष्वधि चेदीनामीश्वरः । 'यस्मादधिकं यस्य चेश्वरवचनं–' (पा० सू० २-३-९) इति सप्तमी । यस्येति स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी भवति । 'अधिरीश्वरे' (पा० सू० १-४-९७) इति कर्मप्रवचनीयसंज्ञा । कार्मिकान् कर्मभिस्संस्कृतान् । प्रार्थितान् अभ्यागतान् । "याच्ञायामभियाने च प्रार्थना कथ्यते बुधैः ।" अलं श्राद्धः श्रद्धावान् । 'प्रज्ञाश्रद्धा–' (पा० सू० (५-२-१०२) इति णः । उत्तमार्ध्यैः उत्कृष्टभागभवैः, श्रेष्ठैरित्यर्थः । हन्तकारैः देयद्रव्यैः । अपिप्रीणत् प्रीणयति स ॥

सुस्नाता सुदती तुरीयदिवसे कान्ता कदाचिन्नृपं
मन्दं मन्दमुपेत्य मञ्जुगमना मन्दस्मितार्द्रानना ।
साकूतैर्ललितैरपाङ्गलसितैः प्राप्तं जगादार्तवं
मेध्यानाहर भो! मृगानिति तदैवोचे पितॄणां गणः ॥ ३४ ॥

अथ वसुधापतिरसौ वसुः असुसमाविरहमसहमानोऽपि पितृगणाज्ञाकरणमेव मे वरमिति मनसिकृत्य महनीयमना महानीकिनीको मृगनिवहनिहननाय निजगृहान्निर्जिहानो वाहिनीमध्यमध्यासीनोऽपि भृशमूष्मणेन विरहशुष्मणा दह्यमानो रुचिरकमलाभिरामं मनसि गिरिकाननमेव कलयन् गिरिकाननमेव गुरुतरायासमयासीत् ॥

तदनु भसितावृतो विभावसुरिव विषादभरेण विभावसुरसौ अतिमात्रविवशधीरानुयात्रमखिलमपि पैतृकौपयिकमृगनिकायनिकारणाय नियुज्यामूलरूढविततविटपनिरन्तरोदितनिबिडतरपलाशमयपलाशवितानवरविनिवारितविभाकरकरप्रकरप्रसरस्य सर्वतः समाश्लिष्टविशिष्टवनवल्लरीकदम्बलम्बमाननवमञ्जरीनिकरनिरीयमाणमरन्दपान -

---

सुस्नातेत्यादि। तुरीयश्चतुर्थः। "चतुरश्छयतावाद्यक्षरलोपश्च" (वा०) इति छः आद्यक्षरस्य लोपश्च। साकूतैः साभिप्रायैः। मेध्यान् शुद्धान् ॥३४॥

अथेत्यादि। वरं मनाक् प्रियम्। महती अनीकिनी यस्य स महानीकिनीकः। 'शेषाद्विभाषा' (पा० सू० ५-४-१५४) इति कप्। निर्जिहानः निर्गच्छन्। वाहिनी नदी, सेना च। विरहशुष्मणा विरहाग्निना। ऊष्मणेन ऊष्मवता। 'लोमादिपामादि-' (पा० सू० ५-२-१००) इति पामादित्वान्नः। कमलाभिरामं कमलवद् अभिरामं, कमलैर्मृगैरभिरामं च। गिरिकाननं गिरिकायाः आननं, गिरेः काननं च। अयासीद् गतवान् ॥

तदन्वित्यादि। भसितं भस्म। विभावसुः अग्निः, विभाः विगतभाः। आनुयात्रं अनुचरान्। पैतृकं पितृसम्बन्धि कर्म तत्रौपयिकं युक्तम्। निकारणाय निग्रहाय। पलाशमयः पत्रमयः। पलाशो हरितवर्णः। मरन्दपानेन मधुपानेन। मन्दमानं माद्यत्। 'मदि स्तुतिमोदमदस्वप्नगतिषु'। अनुदात्तेत्।

मन्दमानमधुपमिथुनमधुरझङ्कारमुखरितदिशामुखस्य कस्यचन शस्ततराभोगभाजो वटविटपिनो मृदुलजातपोतापातपतितत्रिविधमणीचनिलयरमणीयमतिविमलं मूलदेशमाशिश्रिये ॥

मञ्जूदञ्चितमोहनाब्जवदनां मन्दारगौरस्मितां
वालां निर्मलबन्धुराङ्गलतिकां बन्धूकदन्तच्छदाम् ।
रम्यापाङ्गनिवेदिताङ्गजरुजां तामेव तन्वीं वने
स्मारंस्मारममुष्य चञ्चलधृतेश्चस्कन्द रेतस्तदा ॥ ३५ ॥

रेतस्तावदमोघमेतदुदितं मत्स्याद्भवेदार्तवं
तस्याश्चापि वृथा न देयमिदमद्यास्यै तदित्यामृशन् ।
जग्राहाथ जवाद् वटच्छदपुटीपात्रे पटीयानयं
पश्यन् पत्रिणमत्र कञ्चिदभितो दैवादवादीच्च तम् ॥ ३६ ॥

भोः पत्रिन्! नभसङ्गमेन सततं मत्सङ्गमेनोत्सुका
कान्ता मे गिरिकेति कापि वदते चेतोरमा पत्तने ।
सा सम्प्रत्युदितार्तवा कुलवधूः पुत्रार्थिनी वर्तते
तस्यै दातुममोघमेतदनघं रेतो गृहाणाशु मे ॥ ३७ ॥

---

मणीचं पुष्पः। "पुष्पोऽस्त्री कुसुमं सुमम्। मणीचकं प्रसूनं च सूनं सुमनसः स्त्रियः" इति वैजयन्ती ॥

मञ्जिवत्यादि। "बन्धूको बन्धुजीवकः" इत्यमरः। स्मारंस्मारं चञ्चलधृतेरित्यन्वयः। स्मृत्वा स्मृत्वा। चस्कन्द च्युतमभवत् ॥ ३५ ॥

रेत इत्यादि। मद् उदितं एतद्रेतः अमोघं स्यात्। तस्या आर्तवं चापि वृथा न भवेत्। तत् तस्मात् इदमस्यै देयं इत्यामृशन्। एतद्रेतः मत्स्याद् मत्स्यजातेः उदितममोघं न भवेत्, तस्या आर्तवं च वृथा भवेत् तदिदमस्यै न देयं इति भाव्यर्थोऽपि स्फुरति। वटच्छदः वटपत्रम्। पटीयान् तत्तदवस्थोचितकर्मावबोधनिपुणः। अभितः, "साकल्याभिमुखेऽभितः" इत्यमरः ॥ ३६ ॥

भो इत्यादि। नभसङ्गमेन पक्षिश्रेष्ठेन। "पत्री श्येन" इत्यमरः। मत्सङ्गमेन मत्सङ्गमे। 'प्रसितोत्सुकाभ्यां--' (पा० सू० २-३-४४) इति तृतीया।

पक्षपातो विधेयोऽद्य पक्षिराज! मयि त्वया।
काले दिष्टेन दुष्टेन निरालम्बे यथाम्बरे ॥ ३८ ॥

ततः पतङ्गकुलपुङ्गवोऽपि वसुमतीपतिसत्तमस्य वसोरुत्तमाशुक्तिमुत्तमाङ्गेन भरितमोदं परिगृह्य खरतरनखराङ्कुरेण तदिदं वटदलपुटं सहसा समादाय 'निर्धनस्य निधिलाभ इव नियतिबलान्नरपरिवृढनियोगनिरूढिपात्रता मम पत्रिणोऽपि सम्पन्ने'ति परमधन्यमात्मानं मन्यमानो रभसेन नभसाभिपतन्नन्तरा परेण पत्रिणा पत्रपुटमिदमिदमीयनखरनद्धं निध्याय तरसा तरसखण्डधियोपहिण्ड्य चण्डतरतुण्डदण्डाभिघातसमारब्धसमरेण समरोधि ॥

तुण्डातुण्डि प्रचण्डे प्रकटितपरमक्रोधयोः श्येनयूनो-
रद्धा युद्धे प्रवृद्धे चटचटरटितैर्भीषिताशेषभूते।
एतद्रेतः पपात द्युमणिदुहितरि स्वर्वधूराप्य तद्
दैवाद् द्रागद्रिकाख्या सरसिजवसतेर्मत्स्यतां याप शापात् ॥३९॥

---

वदते शोभते। "भासनोपसंभाषा--" (पा० सू० १-३-४७) इति भासने तङ् ॥ ३७ ॥

**पक्षपात** इत्यादि। पक्षपातः स्नेहः, पक्षाभ्यां पातश्च। दिष्टेन दैवात्। निरालम्बे निराश्रये इत्युभयविशेषणम् ॥ ३८ ॥

**तत** इत्यादि। निरूढिः निर्वहणम्। अन्तरा मध्येमार्गम्। इदमीयम् एतदीयम्। तरसं मांसम्। उपहिण्ड्य समीपं प्राप्य। चण्डतरतुण्डदण्डाभिघातं यथा तथा समारब्धः। समरोधि रुद्धम् ॥

**तुण्डातुण्डीत्यादि**। तुण्डेन तुण्डेन प्रवृत्तं युद्धं तुण्डातुण्डि। 'तत्र तेनेदं--' (पा० सू० २-२-२७) इति समासः। द्युमणिदुहितरि यमुनायाम्। अद्रिकाख्या अद्रिकाभिधा ॥ ३९ ॥

दाशास्तद्देशभाजस्तदनु च दशमे मासि मत्स्याङ्गनां ता-
मानीयानायजालैर्बिभिदुरुरुतनुं मैनिकाः पीनकायाः ।
दृष्ट्वा तुन्दे तदीये नृमिथुनमथ ते मोहनं मोदभारा-
दाद्यायेदं तु वेगादुपरिचरवसोर्वासभूमिं समीयुः ॥ ४० ॥

तस्मै विस्मेरचित्ता ददुरथ महितं युग्ममेतन्मनोज्ञं
प्रापिं प्रोचुश्च तस्य प्रविहितनतयः सादरं ते पदान्ते ।
स्त्रीपुंसौ वीक्ष्य चासौ सकुतुकमनयोः पूरुषं मत्स्यभूपं
तेने दाशाय कन्यामदिशदपि तदा बन्धुरां मीनगन्धाम् ॥ ४१ ॥

बालां पल्लवपेलवाङ्गलतिकां बालेन्दुफालामिमां
लोलेन्दीवरचारुलोचनयुगां लोकाभिरामाननाम् ।
सद्यः सत्यवतीति लोकविदितामादाय दाशाग्रणी-
र्गानीयायतनं समस्तवनिताभूषामथापूपुषत् ॥ ४२ ॥

तदनु तदनुलालनसततोद्यतो धन्याग्रगण्यः स धीवरवरेण्यः काळीति कृतनामधेयां केलीषु कलितकौतुकामारब्धयौवनामपि यौवनातिवर्तिनीमेनां तरुणीमणीं तरणितनयायां तरणितारणकर्मणि निजधर्मभूते नियुयुजे ॥

---

दाशा इत्यादि । कैवर्ताः । मीनान् हन्ति मैनिकाः, 'पक्षिमत्स्य–' (पा० सू० ४-४-३५) इति ठञ् । पीनकाया इत्यनेन उरुतनोरपि तस्या उद्धरणे शक्तिमत्तोक्ता ॥ ४० ॥

तस्मै इत्यादि । स्त्री च पुमांश्च स्त्रीपुंसौ । 'अचतुर–' (पा० सू० ५-४-७७) इत्यादिना निपातः । मीनस्य गन्धो यस्याः ताम् मीनगन्धाम्, तदुत्पन्नत्वात्तद्गन्धः ॥ ४१ ॥

बालामित्यादि । अपूपुषत् पोषितवान् ॥ ४२ ॥

तदन्वित्यादि । धीवरो दाशः । यौवनं युवतिसमूहम् अतिवर्तितुं शीलमस्याः । तरणितनयायां यमुनायाम् । तरणितारणकर्मणि नौवाहकर्मणि । नियुयुजे नियुक्तवान् ॥

तदनु कदाचन,

भास्वद्भस्मत्रिपुण्ड्रः कपिशतरजटाभारतुङ्गोत्तमाङ्गः
साक्षात्तीक्ष्णांशुकल्पो महितजपपटीधारयश्चीरधारी ।
भर्गे भक्तः प्रभाते प्रचुरतरतपाश्शक्तिसूनुस्तितीर्षुः
कालिन्दीं तीरभूमिं पथिकपरिवृतः प्रापतत् पारिकाङ्क्षी ॥ ४३ ॥

तदनु च निबिडतररुचिनिकररुचिरतरचिकुरभरपरिचलितनिखिलजनधैर्या, तरुणतरशिशिरकरसदृशलसदलिकधृततिलकवरललिततरलक्ष्मीः, शरदुदितसरसिरुहसदृशतरनयनयुगपरिशमितशफरवरशोभा, अतिलसिततिलकुसुमरुचिविसरपरिहसनभरितमदमहिततरनासा, अधररुचिपरिमिलितभृशललितरदनगणपरिदलितशिखरवरगर्वा, श्रुतियुगलपरिकलितमहिततरमणिखचितकमनतरकनकमयभूषा, परिहसितशिशिरकरमुखकमलपरिलसितशिशिरतरविशदमृदुहासा, अतिसुषमगलविहतविषमशरसुषमतरदरवृषभपरममदभारा, अकृशतरकनकमयकलशनिभकमनतरकुचकलशनमितकृशमध्या, पुलिनमदकदनपरमदनपदपरमघनजघनभरजनितजनरागा, सुभगतरकलभवरकरभमदपरिहरणभृशनिपुणपरिविलसदूरुः, निरतिशयमनसिशयशरधिवरदुरधिगमरुचिनिग्रहमहिततरजङ्घा, अतिमृदुललिततरपदयुगलपरिविधुतविमलतरकमलवरकान्तिः,विमलतररुचिनिकरविशदतरमहितमणिमुकुरवरविलसदखिलाङ्गा परमधन्या सा दाशकन्या तरणिं सनाथयन्ती सकलजनमनांसि तरलयन्ती तरसैव तदधिष्ठितां प्रतीरभुवं प्रति प्रातिष्ठत ॥

---

तदनु कदाचन कस्यचित् कालस्यापगमे ॥

भास्वदित्यादि । धारयः धर्ता । भर्गे शम्भौ । शक्तिर्नाम वसिष्ठपुत्रः कश्चिदृषिः, तस्य सूनुः पराशरः । प्रापतत् प्राप्तवान् । पारिकाङ्क्षी मुनिः ॥ ४३ ॥

तदन्वित्यादि । निबिडतरः घनतरः । शफरो मत्स्यः । "पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः ।" खचिता बद्धा । सुषमा परमा शोभा । सुषमतरः अतिसुन्दरः । दरवृषभः शङ्खश्रेष्ठः । प्रातिष्ठत प्रस्थिता ॥

ततश्च;

एवमखिलजनमनोहरैरवयवैरधिकमाभान्तीं सविधमायान्तीम् आकम्प्रनयनसरोरुहाम् आनम्रवदनपयोरुहाम् आकम्प्रविलसदुरोरुहाम् आकण्ठगलितशिरोरुहां मृदुलमृणालनालकोमलेन ललितकरयुगेन मन्दमन्दं नौवाहकर्म नर्मणा निर्मान्तीं निबिडसुषमाप्रवाहेण गगनसरोवरमभिपूरयन्तीं दिवश्च्युतामिव दिव्यकन्यकां करकौशलसीमामिव कमलासनस्य, सर्वजनमनस्संवननमन्त्रदेवतामिव मनसिजस्य, सौन्दर्यसागरसमुद्भूतामिव अपरामिन्दिराम्, आसादितमानुषजातिमप्यासादितानिमिषजातिं, नौगामिनीमपि हंसगामिनीं, निरतिशयरूपविवशीकृतसकलभूतां निखिलललनाललामभूतां सत्यवतीमवलोक्य सद्य एव परिहृतविषयपरिभोगोऽपि पराशरः प्रसवशरातुराशयतामयासीत् ॥

अम्भोधिगम्भीरमनास्तदानी-
मुल्लोलकल्लोलमना मुनीन्द्रः ।
आलोकमालोकमिमां स वामां
कामातुरो हन्त! ततान चिन्ताम् ॥ ४४ ॥

ताराभृङ्गाभिरामं मृदुनयनदलं नासिकाकर्णिकाढ्यं
बिभ्राणं भानुकन्याकुसुमचयवलद्वातनीतं परागम् ।
अस्याः स्वेदाम्बुमाध्वीयुतमधरपुटीविद्रुमान्तःपलाशं
वक्त्रं नालीकमेवेत्यखिलजनवचो हन्त! नालीकमेतत् ॥ ४५ ॥

---

ततश्च;

एवमित्यादि । आकम्प्रौ ईषत्कम्पनशीलौ । संवननं वशीक्रिया । "सुरमत्स्यावनिमिषौ" इत्यमरः ॥

अम्भोधीत्यादि । आलोकमालोकम् आलोक्यालोक्य ॥ ४४ ॥

तारेत्यादि । तारा कनीनिका । नालीकमेव पद्ममेव । नालीकमेतत सत्यमेतत् ॥ ४५ ॥

चलति हृदयमेवं धीरधीरं कुतो मे
स खलु हरिरमुष्यां नूनमात्रिर्बुभूषुः ।
जगति जनकयन्मां तन्मतं तत् परामि
द्रुतमिति स विनिश्चित्यैवमूचे महात्मा ॥ ४६ ॥

बाले! बालमृगाक्षि! यातुमनसो देशं दवीयस्तरं
पान्थान् प्रापय पारभूमिममुकान् पूर्वं पुनः सुन्दरि! ।
मां चैकं सुभगेऽरतं क्वचिदपि त्रासो महान् नौगतौ
तेनोक्तेति तथा विधाय तमृषिं चैषा जवादेयुषी ॥ ४७ ॥

अनन्तरम् अरुणकिरणनिकुरुम्बनिकुम्बितदिशाकदम्बे विहित-बन्धूककुसुमबिम्बोकविडम्बे कोकमिथुनावलम्बे तपनबिम्बे विलम्बमम्बु-राशेरम्बरतलमवलम्बमाने तरसा रिरंसारसाभिभूतमतिरसौ तापसवरः तरुणीरत्नोपनीततरणीमध्यमधिरुह्य तरणिवाहतरलबन्धगलितलुलित-धम्मिल्लमतल्लिकाकुलेन स्फुरितायतललितलोचनयुगलोभनीयेन विमल-वदनतल्लजप्रतिबिम्बेन भङ्गुरकलिन्दकन्यकातरङ्गनिकुरुम्बमुपरिलसित-शैवलशकलचिखादिषापतितशीभरशफरद्वयीविराजितविकचकमलकदम्ब-भासुरमिव भावयन्तीम् इदंप्रथमनिजावलोकनविसृत्वरव्रीलासाध्वस-विहस्तां रहस्तामनुसरणनिपुणः सरसतरां शारदामुदाजहार ॥

---

चलतीत्यादि । जनकयन् जनकं कुर्वन् । परामि पूरयामि । चुरादौ 'पॄ' इति विकल्पितणिच्कः पूरणार्थः ॥ ४६ ॥

बालेत्यादि । अमुकान् अमून् । पूर्वं पान्थान् पारभूमिं प्रापय । सुन्दरि! पुनः मां चैकं पारं प्रापय । क्वचिदपि अरतम् । अनेन तरणे त्वरा-भावः । अत्र क्वचिदपि मां रतं प्रापयेत्यपि स्फुरति ॥ ६७ ॥

अनन्तरमित्यादि । अरुणेन किरणनिकुरुम्बेन रश्मिसमूहेन निकुम्बितं छादितम् । रिरंसा रन्तुमिच्छा । "स्त्रियां नौस्तरणिस्तरिः" इत्यमरः । चिखा-दिषा खादितुमिच्छा । शीभरः मनोहरः । 'शीभृ कत्थने' । बाहुलकादरन् । इदं प्रथमं यस्य तत् ॥

भुवनमदनगात्रि! व्रीलया साध्वसेना-
प्यलमलमयि बाले! लोलनीलाम्बुजाक्षि! ।
वदननलिनमेतत् किञ्चिदुन्नाम्य रम्यं
सकृदपि जनमेतं स्निग्धमालोकय त्वम् ॥ ४८ ॥

मदनदहनतप्तं साम्प्रतं चित्तमेतत्
सकृदधरसुधां ते पातुमत्युत्सुकं मे ।
तदयि! निखिलयोषामौलिभूषायमाणे!
वरतनु! भज मा, मा वामतां कातराक्षि! ॥ ४९ ॥

तरुणि! तरणिवाहव्याकुलालोलवाहे!
तरलतरलगात्रे! त्रस्तसारङ्गनेत्रे! ।
निबिडतरनितम्बान्नीविबन्धं गलन्तं
द्रढयितुमयि बाले! बाहुरुद्यच्छते मे ॥ ५० ॥

स्थूलम्भविष्णुस्तनभारनम्रे! प्रियम्भविष्णो! जनलोचनानाम् ।
दूरीकृतोड्डामरमारपीडं कुचोपपीडं रचयोपगूढम् ॥ ५१ ॥

निर्व्याजरम्याङ्गि! मतिर्मदीया निर्वासितोदारधृतिः स्मरेण ।
निर्वेशनाशाविवशा बतेयं निर्वेदशाणोपलतेजितापि ॥ ५२ ॥

---

भुवनेत्यादि । मदयतीति मदनः । नन्द्यादित्वाल्ल्युः ॥ ४८ ॥

मदनेत्यादि । मा मां भज । वामतां प्रातिकूल्यं मा भज ॥ ४९ ॥

तरुणीत्यादि । द्रढयितुं दृढं कर्तुम् । उद्यच्छते उद्यमं करोति । 'समुदाङ्भ्य–' (पा० सू० १-३-७५) इति तङ् ॥ ५० ॥

स्थूलेत्यादि । स्थूलम्भविष्णुः स्थूलो भवन् । 'कर्तरि भुव–' (पा० सू० ३-२-५७) इति खिष्णुच् । उड्डामराः भयङ्कराः । कुचोपपीडं कुचाभ्यामुपपीड्य ॥ ५१ ॥

निर्व्याजेत्यादि । निर्व्याजरम्याङ्गि! स्वभावादेव रम्यं अङ्गं यस्याः । निर्वेशनाय उपभोगाय आशा । निर्वेद एव शाणोपलः । "दरिद्रव्याधिदुःखेष्ट-

निष्कामोऽप्ययि रम्याङ्गि! त्वत्काम्यामि स्मरातुरः ।
तत्परापि तरीवाहे तत् पराशु मनोरथम् ॥ ५३ ॥

श्रुत्वा तत्तादृशपुरुतपोभाजनेनामुनोक्तां
वाचं वाताधुतकदलिकेवाकुला बालिका सा ।
नत्वा चैनं विनतवदना लज्जया मञ्जुलाङ्गी
मन्दारोद्यन्मृदुलहसिता मन्दमन्दं न्यगादीत् ॥ ५४ ॥

निश्शेषवाचंयममौलिभूत! प्रसीद मे त्वं रचितोऽञ्जलिस्ते ।
कृपापयोधे! कृपणामिमां मां ब्रूषे किमेवं भगवन्! किशोरीम् ॥ ५५ ॥

मुनिपुङ्गव! मुक्तिवधूसक्तमते! पश्य पारगान् पथिकान् ।
कन्या कैवर्तपतेरनिमिषगन्धा च हन्त! किं करवै ॥ ५६ ॥

सत्योद्यं सत्यवत्याः सरसमधुझरीपूर्णमाकर्ण्य सोऽयं
तोये द्वीपं हिमानीमपि गुरुमहिमा द्रागतानीत्तदानीम् ।
दृष्ट्वा हृष्टा तदेतद्विकसितवदनाम्भोरुहैषा बभाषे
कन्यात्वे हीयमाने कथमिव गतभीर्हन्त! गन्तास्मि गेहम् ॥५७॥

---

वियोगपरवृद्धिभिः । ईर्ष्यातत्त्वाववोधाभ्यां निर्वेदो नाम जायते ॥" इति भावप्रकाशः ॥ ५२ ॥

निष्काम इत्यादि । त्वत्काम्यामि आत्मनस्त्वामिच्छामि । "काम्यच्च" (पा०सू० ३-१-९) इति काम्यच् । तत् पर पूरय । 'पृ पूरणे' चुरादिः ॥ ५३ ॥

श्रुत्वेत्यादि । वातेनाधुता । 'धुनु कम्पने' ॥ ५४ ॥

निश्शेषेत्यादि । वाचंयमानाम् ऋषीणाम् ॥ ५५ ॥

मुनीत्यादि । मुक्तिवधूसक्तमते! तवान्यत्र सक्तिरनुपपन्नेत्यर्थः । अनिमिषो मत्स्यः ॥ ५६ ॥

सत्योद्यमित्यादि । सत्यवचनम् । हिमानीं हिमसंहतिम् । 'इन्द्रवरुण—' (पा०सू० ४-१-४९) इति ङीषानुकौ । 'हिमारण्ययोर्महत्त्वे' (वा०) ॥ ५७ ॥

तदनु मुक्तावुत्तिष्ठमानोऽपि शक्तिनन्दनो जञ्जन्यमानमदनानल-दन्दह्यमानमानसोऽदसीयमुदितमादरादाकलय्य मुदितमनाः, 'कमनि! मम समागमेन तव कन्यकाभावो न विहीयते'ति तामनुगृह्य अनुकम्पार्द्रचित्तो योजनमात्रगात्रसौरभ्यमप्यभ्यवपद्य सद्यो नद्यास्समुद्गते सिकतिले भूतले विशिष्टतमाभीष्टवरावाप्तिसमुत्पनीपद्यमानानल्पसम्मदविचनीकस्यमानविमलास्यारविन्दया इदंप्रथमसम्भूतपरीरम्भजरीजृम्भ्यमाणेन मदनेन मन्दाक्षेण च पुनःपुनः प्रेर्यमाणवार्यमाणमनसिजोल्लासयानया रुचिरतमहेलया महेलया सह विहरमाणः परं प्रमदमासेदिवान् परापरवित् पराशरोऽपि निजमेव निलयमयासीत् ॥

बाला सा बिभरम्बभूव जगतां मोदावहं दौहृदं
द्वीपेऽस्मिन् सुषुवे सुतं च सपदि व्यासं मुनीनां वरम् ।
कारुण्यार्णवपार्वणेन्दुममलं विष्णोः कलां पुष्कलां
वेदस्य व्यसितारमम्बुदघटासच्छायमच्छाशयम् ॥ ५८ ॥

---

तदन्वित्यादि । उत्तिष्ठमानः ईहमानः । 'उदोऽनूर्ध्वकर्मणि' (पा० सू० १-३-२४) इति तङ् । 'उद ईहायामिति वक्तव्यम्' (वा०) । जञ्जन्यमानं नितरां जायमानम् । दन्दह्यमानमत्यर्थं दह्यमानम् । योजनमात्रं योजनप्रमाणम् । 'प्रमाणे द्वयसच्–' (पा० सू० ५-२-३७) इति मात्रच् । अभ्यवपद्य अनुगृह्य । समुत्पनीपद्यमानः अत्यर्थं समुत्पद्यमानः । विचनीकस्यमानम् अत्यर्थं विकसत् । परापरवित् परं भावि अपरमतीतं च वेत्तीति तथा ॥

बालेत्यादि । बिभराम्बभूव बभार । 'भीह्री–' (पा० सू० ३-१-३९) इत्याम् श्लुवद्भावश्च । दौहृदं गर्भम् । सपदि सुषुवे इति दिव्यगर्भस्य नवतिनाडीपरिमितः काल उपदिष्टः अत्र तु ईश्वरः स्वयमेव स्वेच्छयावतीर्ण इति तावानपि कालो नाभूदिति प्रकाश्यते । अत एव 'जातमात्र एव गोत्रातलादुत्थाये'ति वक्ष्यमाणत्वात् तत्क्षणादेव देहवृद्धिश्चोपपद्यते । किञ्च प्रसवस्यान्यजनित्रीसुतयोरिव क्लेशोऽपि नाभूदिति च प्रकाश्यते । तदुक्तं प्रपञ्चसारे– "प्रसूतिसमये सोऽथ जनित्रीं क्लेशयन् मुहुः । तस्याः कायाग्निना दग्धः क्लेदैः

अनन्तरं परिबृंहितमहिमबंहिमा जातमात्र एव गोत्रातलादुत्थाय अतिमात्रविनीतगात्रः सवित्र्याः पदारविन्दयोः प्रणिपतन्, इन्दिन्दिर-सन्दोह इव पद्मापत्युत्तरलचित्तः सदापरागयुक्तात्मा च, राजहंस इवामलाशयमानसावासी सदाचरणरक्तश्च, बुद्ध इव खण्डितवेदप्रपञ्चो वीतरागाभिख्यातश्च, हर इवाहीनधामगात्रो विधुकलासम्भूतश्च, मकरन्द इव विश्वभ्रमरहितः सुमनःप्रसक्तश्च, दाशरथिरिव पराशरप्रसादकृत्, महीभृदिव महितमेखलः, गोपाला इव शबलाभाजिनः, वर्यवैडूर्यमणिरिव ब्रह्मसूत्रपरित्रौक्किताभः, 'स्मृतमात्र एवायास्यामी'ति मात्रे स्वस्यै

---

क्लिन्नाङ्गबन्धनः ॥ पूत्युद्गारपरीतश्च तत्पायुद्गारगोचरः । तदा प्रक्षुभितैः स्वीयवायुभिर्दशधा गतैः ॥ स पिण्डितशरीरस्तु मोक्षमेव किलेच्छति ॥" इति । कला अंशः । व्यसितारं खण्डयितारम् ॥ ५८ ॥

अनन्तरमित्यादि । परिबृंहितो वर्धितः महिमा महत्त्वं तस्य बंहिमा बहुलत्वम् । इमनिचि 'प्रियस्थिर–' (पा० सू० ६-४-१५७) इति बहुलशब्दस्य बंह्यादेशः । इन्दिन्दिराः भ्रमराः । पद्मापत्तौ तामरसप्राप्तौ, पद्मापतौ श्रीभर्तरि च । सदापरागयुक्तः कुसुमरेणुयुक्तः आत्मा देहो यस्य, अपरागः अपगतरागश्च युक्तः योगसहितश्चात्मा मनो यस्य स च । मानसं सरः, मनश्च । चरणे पादे रक्तः । "राजहंसास्तु ते चञ्चुचरणैर्लोहितैस्सिताः" इत्यमरः । सदाचरणे सदाचारे च । खण्डितः युक्त्या खण्डितः, चतुर्धा व्यस्तश्च । वीतराग इत्यभिख्यातः वीतरागनामधेयः । "मारजिदद्वयवादी समन्तभद्रो जिनश्च सिद्धार्थः । जिनेन्द्रो वीतरागोऽर्हः केवली च त्रिकालवित् ॥" इति शब्दरत्नाकरः । वीतरागो वीतराग इत्यभिख्यातः प्रसिद्धश्च । अहीनानां सर्पश्रेष्ठानां धाम सद्म, अहीनं धाम यस्य । विधुकलां चन्द्रकलां सम्भूतः प्राप्तः, विधुकला विष्ण्वंशः अपान्तरतमाः तस्मात् सम्भूतश्च । विश्वेषां भ्रमराणां हितः, सकलभ्रान्तिज्ञानरहितश्च । सुमनस्सु पुष्पेषु, सत्सु च । पराशराणाम् उत्कृष्टानां रक्षसां प्रसादं प्रकर्षेण सादं करोतीति तथा, पराशरस्य प्रसादं च । मेखला मध्यप्रदेशः, मौञ्जी च । (शबलाभाजिनः) शबलाः गाः सेवितुं शीलमेषां, शबलाभमजिनं कृष्णाजिनं यस्य । (ब्रह्मसूत्रपरित्रौक्किताभः) ब्रह्मसूत्रं नाम

सप्रणयं प्रतिश्रुत्य करम्बितमोदयानयाम्बया सादरमनुमोदितो भास्वद्भासं बाभास्यमानो निरवद्यगोनिकरनोनुद्यमाननिखिललोकतमस्तोमः विष्णुपदावेशचतुराश्चतुराशा अपि चकासयन्नसौ चकास ॥

महानुभावात्मजसंभवेन कुमारिकात्वाविगमाच्च हृष्टा ।
पुरेव सा सादरमावहन्ती नौवाहकर्मान्वहमत्र तस्थौ ॥ ५९ ॥

शन्तनुस्तु सन्ततमपि निजनन्दनगुणवृन्दसन्दर्शननानन्द्यमानमानस एव पुरमधिवसन् वर्षेषु केषुचिद्गतेषु विजिहीर्षुः कदाचन स्यन्दनवरमधिरूढो नन्दनवनोपमानां कलिन्दजातीरविराजमानां विपिनावनीमवगाह्य लेलिह्यमानमधुरसमामह्यमानमदभरमोमुह्यमानमधुकरबाभास्यमानसुमनोजालसुमनोहारिबहुविधलतावलीसमालिङ्गितानि सङ्गतशाखाशतानि तानि तानि तरुजातानि पचेलिमफलावलीसमास्वादजनितानन्दानि गलोदरजागल्यमानमधुकररुतमधुस्यन्दानि तत इतः कृतपरिस्पन्दानि विविधविकिरवृन्दानि च सकुतुकमालोकमानः सञ्चरन्नश्चिततरं कश्चिदनाघ्रातचरमामोदभरमाघ्राय क्षिप्रमेव तत्प्रभवमन्विच्छ-

---

तदाकारं कान्तिरेखात्रयम् । विशिष्टे हि वैडूर्यमणौ ब्रह्मसूत्राकारं कान्तिरेखात्रयं प्रतीयते इति रत्नशास्त्रतत्त्वविदः । परिवौकितः परितः प्राप्तः । 'वौकृ' गत्यर्थः । ब्रह्मसूत्रेणोपवीतेन प्राप्तशोभश्च । करम्बितो युक्तः । भास्वद्भासं भास्वानिव । बाभास्यमानः अत्यर्थं दीप्यमानः । 'भासृ दीप्तौ' । गावो रश्मयः, वाचश्च । तमोऽन्धकारम्, अज्ञानं च । विष्णुपदावेशो व्योमवीथीप्राप्तौ, सर्वेषां विष्णुपदप्रापणे च । आवेशः आवेशनं, णिजन्ताद् घञ् । चकासयन् शोभयन् । 'चकासृ दीप्तौ' । चकास गतवान् । 'कस गतौ' ॥

महानुभावेत्यादि । कुमारिकात्वस्य कन्यात्वस्य अविगमाद् अनपगमात् । सा सत्यवती ॥ ५९ ॥

शन्तनुरित्यादि । विजिहीर्षुः विहर्तुमिच्छुः । लेलिह्यमानम् अत्यर्थमास्वाद्यमानम् । कर्मणि शानच् । मामह्यमानम् अत्यर्थं वर्धमानं, कर्तरि शानच् । मोमुह्यमानम् अत्यर्थं मुह्यत् । बाभास्यमानं कर्तरि । पचेलिमा स्वयमेव परिपाकं

न्नितस्ततो विच्छायन् कच्छभुवि स्वच्छतरतनुच्छायां कामपि कन्यका-मालोकयन् लोकवैधुर्यकररूपमाधुर्यमुखगुणगणविधुतधैर्यः समीपमुप-गच्छन्निमामभिजनाभिधाने पर्यपृच्छत् ॥

कैवर्तनाथतनयास्मि तदीयवाचा
वैकर्तनीतरणितारणमावहन्ती ।
वर्तेऽत्र मर्त्यवर! सत्यवती च नाम्ना
सैवं तयाथ जगदे जगदेकनाथः ॥ ६० ॥

तदनु मनोहारिणीं पिकवधूवाकहेवाकहारिणीं वाणीमिमां कर्णा-वतंसयन् वर्णाभिरक्षिता स पुण्योच्चयास्पदमुच्चैःश्रवसं नाम तत्पितरमुप-सर्पन्नल्पेतरादरमिदमभ्यभाषिष्ट ॥

कन्यां तवाभिजातां धन्यात्मन्! दाशवर्य! वरयेऽहम् ।
ग्लान्यावहनौवाहे मान्येयं नार्हतीति बत! मन्ये ॥ ६१ ॥

शारदां स निशम्यैवं दाशराजो विशांपतिम् ।
बहुशो विमृशन्नाख्यदाशाविवशिताशयः ॥ ६२ ॥

---

प्राप्ता । जागल्यमानम् अत्यर्थं गलत् । 'गल अदने' । परिस्पन्दः परिगमनम् । विकिराः पक्षिणः । विच्छायन् गच्छन् ॥

कैवर्तेत्यादि । कैवर्तनाथस्य दाशवरस्य । वैकर्तनी यमुना । सैवं सः एवम्, 'सोऽचि–' (पा० सू० ६-१-१३४) इति लोपः ॥ ६० ॥

तदन्वित्यादि । वाको वचनम् । हेवाको विलासः । कर्णावतंसयन् कर्णावतंसं कुर्वन्, आकर्णयन्नित्यर्थः । वर्णाभिरक्षिता राजा । उच्चयः समूहः । उच्चैःश्रवा नाम सत्यवत्याः पिता दाशः ॥

कन्यामित्यादि । अभिजातां दर्शनादेव संसूचिताभिजात्याम् । ग्लानिर्म्लानिः ॥ ६१ ॥

शारदामित्यादि । आख्यद् अवोचत् । 'अस्यतिवक्ति–' (पा० सू० ३-१-५२) इत्यङ् ॥ ६२ ॥

नरवर! वरयित्रे कन्यका हि स्वपित्रा
सपदि वितरणीया किं पुनस्त्वादृशाय।
शशधरकुलकेतो! किन्त्वमुष्याः सुताय
प्रवितरसि पुरा चेद्राज्यमेनां ददामि ॥ ६३ ॥

अशक्यारम्भं तं नृपतिरथ दाशेशगदितं
समाकर्ण्योदीर्णं मदनमपि संस्तम्भ्य धृतिमान्।
पथि स्मारंस्मारं कलितरुचितामेव कमनीं
पुरीमागत्योद्गत्वरपुरुपरीतापमवसत् ॥ ६४ ॥

विविधं विचिचिन्तासौ विधुरो वसुधाधिपः।
विधुतोरुधृतिस्तस्या मधुरावयवैः स्मृतैः ॥ ६५ ॥

तद्वक्त्रशीतकिरणे सितमन्दहास-
ज्योत्स्नावदातगगने विमले विभाति।
क्षोभं न याति यदि सिन्धुरिदं तु युक्तं
किन्नो भुवि प्रथम एष जलाशयेषु ॥ ६६ ॥

वक्त्रे नित्यप्रसन्ने कमलमिदमिति स्पर्धया जातमाग-
स्सद्यस्संमार्ष्टुमंशैरयमलिकमिषात् पञ्चभिश्शीर्षदेशम्।
अन्यैरन्यूनकान्तिर्नखरमणिमिषादूढगाढानुतापो
मन्ये तस्याः पदान्तं दशभिरपि कृती शिश्रिये शीतभानुः ॥६७॥

---

नरवरेत्यादि। प्रवितरसि पुरा चेद् दास्यसि चेत् ॥ ६३ ॥

अशक्येत्यादि। अशक्यारम्भं कर्तुमशक्यम्। उद्गत्वरम् उद्गमनशीलम् ॥ ६४ ॥

विविधमित्यादि। विचिचिन्त चिन्तितवान् ॥ ६५ ॥

तदित्यादि। वक्त्रमेव शीतकिरणः। क्षोभं न याति यदि तर्हि इदं तु युक्तं इदमेव युक्तम्। जलाशयेषु मूढेषु, जलाधारेषु च। प्रथमः प्रधानभूतः ॥ ६६॥

वक्त्र इत्यादि। नित्यप्रसन्ने रात्रिन्दिवविकस्वरे। अंशैः कलाभिः। अलिकमिषात् ललाटव्याजेन। शीर्षदेशम् उत्तमाङ्गम्। "शिरः शीर्षं

कालागरूज्ज्वलरुचिः परितो विराज-
द्धारावलिः पृथुलपुष्करभासमानः ।
अत्युन्नतो मृगदृशस्स पयोधरोऽद्य
सन्तापमेव तनुते बत! मे किमेतत् ॥ ६८ ॥

को वा लोके जिहासेदिह युवतिकृते पुत्रमूढानुभावं
चेतः कस्यापयायाद्विधुतसुरवधूविभ्रमायाः कमन्याः ।
शोकावर्तेऽत्र वर्तेमहि महिततरे नूनमाजीवनान्तं
नो विद्मः पोतमेतद्व्यसनजलनिधेस्तारकर्मप्रवीणम् ॥ ६९ ॥

औत्सुक्यभारेण ममेन्द्रियेषु सर्वेष्वहंपूर्विकया गतेषु ।
मनस्तु जग्राह परं निजं सा मनोहरत्वं नु यथार्थयन्ती ॥ ७० ॥

एकं तयैवापहृतं गृहीतमुत्कण्ठयैकं बत! दग्धमेकम् ।
मनोभुवा मे हृदयान्यहं तु हाहा! कियन्तीति न हन्त! जाने ॥७१॥

---

मूर्धा ना मस्तकोऽस्त्रियाम्" इत्यमरः । अन्यैः दशभिरित्यर्थः । कृती कुशलः ॥ ६७ ॥

कालागर्वित्यादि । कालागरुणा कालागरुवच्च । हारावलिः धारावलिश्च पुष्करवत् कमलवत्, पुष्करे व्योम्नि च । पयोधरः स्तनः, मेघश्च ॥ ६८ ॥

को वेत्यादि । जिहासेत् त्यक्तुमिच्छेत् । वर्तेमहि अवतिष्ठेमहि । पोतं यानपात्रम् । नो विद्मः न जाने । नः पोतमर्भकं तारकर्मप्रवीणं विद्म इत्यपि स्फुरति ॥ ६९ ॥

औत्सुक्येत्यादि । अहंपूर्विकया "अहं पूर्वमहं पूर्वमित्यहंपूर्विका स्त्रियाम्" इत्यमरः । मनो हरतीति मनोहरम् । 'हरतेरनुद्यमने–' (पा० सू० ३-२-९) इत्यच् । यथार्थयन्ती नु यथार्थं कुर्वन्ती नु ॥ ७० ॥

एकमित्यादि । दग्धं दग्धप्रायम् । कियन्ति किंपरिमाणानि कति-सङ्ख्यानीत्यर्थः ॥ ७१ ॥

एवमेव परिचिन्तयन् मुहुस्तापभारमपि दुर्वहं वहन्।
धैर्यसारमपि चावलम्बयन् वासराणि स निनाय कानिचित् ॥७२॥

तदनु देवव्रतेन तदीयतीव्रतरहृदयरुजां विजानता तन्निदानमनुयुक्तः स शन्तनुरतिविपण्णधीः अस्य व्यक्तीकरणमवतप्तेनकुलस्थितम्, असत्यवद्यं पुनरवद्यपदमेवेत्यवधारयन् 'वत्स! त्वमेक एवास्माकं गोत्रे महत्तरेऽपत्यम्। अपुत्रत्वमेकपुत्रत्वमप्यभिन्नमेवेत्यामनन्ति हि मन्वादयः। तस्मादद्याप्ययि! धीवरात्मजावाप्तिसमुत्सुकं मम मानसं सन्ततं सन्तप्यत एवे'त्यमुमभ्यभाणीत् ॥

अनन्तरमनन्तागतासु वनितासु कस्यामनन्तरागभागयमनन्ताधिपतिरनन्ताधिपतित इत्यनवधारयन्नयं विबुधापगासूनुः अदसीयसूतवचनावगतकैवर्तकन्यावृत्तान्तः प्रोद्वेजितनिखिललोकनिजजनकशोककाकोलकवलनकालदमनायमानो मनागिव विचार्य मनीषिणामपश्चिमो निश्चितनिखिलनिगमशास्त्रैः धात्रीसुरैर्धात्रीवरैरपि सता सद्य एव वैकर्तनीतीरवासिनं कैवर्तवरमुच्चैस्तराशयमुच्चैःश्रवसमासाद्यानवद्याखिलाङ्गीं तत्तनयां सत्यवतीं पितुरर्थे प्रार्थयामास ॥

---

एवमित्यादि। उक्तप्रकारेण तापभारस्य दुर्वहत्वेऽपि धैर्यसारावष्टम्भेन कथञ्चिन्निनायेत्यर्थः ॥ ७२ ॥

तदन्वित्यादि। अवतप्तेनकुलस्थितं चापलमित्यर्थः। 'क्षेपे–' (पा० सू० २-१-४७) इति समासः। 'तत्पुरुषे कृति–' (पा० सू० ६-३-१४) इत्यलुक्। असत्यवद्यं असत्योक्तिः। अपुत्रत्वमेकपुत्रत्वमिति। "अपुत्रत्वैकपुत्रत्वं सममाहुर्मनीषिणः। चक्षुरेकं च पुत्रश्च अस्ति नास्ति यथा तथा ॥" इति श्रीमहाभारते। आमनन्ति, 'म्ना अभ्यासे'। 'पाघ्राध्मा–' (पा० सू० ७-३-७८) इति मनादेशः। पुनःपुनः ब्रुवन्तीत्यर्थः। अद्यापि त्वयि विद्यमानेऽपि। धीवर! धिया वर सर्वातिशायिन्! आत्मजावाप्तौ पुत्रप्राप्तौ समुत्सुकम्। अत्र धीवरात्मजायाः सत्यवत्या अवाप्तौ समुत्सुकं मम मानसमित्यपि स्फुरति। अभ्यभाणीद् उक्तवान् ॥

अनन्तरमित्यादि। अनन्तागतासु भूमिष्ठासु। कैवर्तो दाशः। शोक एव काकोलः विषभेदः। वैकर्तनी यमुना। पितुरर्थे पितृहेतोः ॥

एवमभ्यर्थितोऽयमेनमभ्यर्चयन्, 'अयि गुरुपरायण! गुरुतराशय! भरतसत्तम! एषा चेदिविषयभूषायितस्य वसोरुपरिचरस्य दुहिता भवतामुचितैव। प्रागेव मया प्राज्यगुणेयं राज्यशुल्केति पिता तव निगदितः। विदितवेद्येन भवता पुनरद्य पितुः कृते राज्यपरित्यागः सुकर एव। तथापि ये तव तनुजा जायेरन् कुलजातेषु तेषु विशङ्कटाशङ्का मन्मनसि भृशमुन्मिषति। तद्यथा मम मनोरथः कुतोऽपि न विहन्येत तथैवास्मिन् सदसि प्रतिज्ञाय प्रतिगृह्यतामियं वरवर्णिनी'त्युदीर्णलोभमभाणीत्॥

अङ्गीकृत्यैवमस्योक्तिं गङ्गादत्तोऽपि धीरधीः।
प्रतिजज्ञे समज्यायां स ज्यायानूर्जितैर्गुणैः॥ ७३॥

वाणीं नाणीयसीं मे शृणुत ननु जना! यावदेवेदमङ्गं
गाङ्गोऽहं कर्मजातं स्वकृतमनुभवन् धीरधीर्धारयेयम्।
तावत् पूज्यं हि राज्यं तृणमिव कलयन्नाचरिष्यामि तुष्य-
न्नष्टाङ्गं ब्रह्मचर्यं पितृहितकरणादेव सिद्धा हि लोकाः॥ ७४॥

एवं देवव्रतेऽस्मिन्निह सदसि मुदा संविदं व्यादधाने
नासान्यस्ताङ्गुलीका दिवि गगनचरास्तत्क्षणं शक्रमुख्याः।
भीष्मोऽयं धैर्यशुष्माश्रितमतिरिति ते संस्तुवन्तस्समन्तात्
स्वर्लोकानोकहानां मुहुरिह ववृषुः पुष्कलां पुष्पपालीम्॥ ७५॥

---

एवमित्यादि। राज्यशुल्का राज्यमूल्या॥

अङ्गीकृत्येत्यादि। गङ्गादत्तो भीष्मः। समज्यायां संसदि। ज्यायान् प्रशस्यतमः॥ ७३॥

वाणीमित्यादि। नाणीयसीं उत्कृष्टतरां नसमासः। गाङ्गः गङ्गापुत्रः। 'शिवादिभ्योऽण्' (पा० सू० ४-१-११२) इत्यण्। अष्टाङ्गं ब्रह्मचर्यं, "स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः॥" इत्येतेषामभावः। सिद्धाः अपुत्रत्वेऽपीत्यर्थः॥ ७४॥

एवमित्यादि। शुष्म बलम्। "द्रविणं तरस्सहोबलशौर्याणि स्थाम शुष्मापि" इत्यमरः॥ ७५॥

त्यक्ताङ्गनारतिरपि प्रमदोपसङ्गी
मुग्धस्मितैर्मधुविराजिभिरात्मभूतैः ।
आमोदितोऽजनि बत! प्रसवैः स भीष्मो
धीरेतरस्य जगति व्यवसाय एषः ॥ ७६ ॥

तदनु सन्ततसन्तायमानपितृसन्तापान्धतमसान्तकरणोष्णकिरणायमानो भीष्मः स्वप्रतिश्रवसंश्रवणसंवृद्धसम्मदेन कैवर्तसत्तमेन समर्पितां समुत्पन्नानल्पमोदां सत्यवतीं सद्य एव रथवरमाप्यानमोदमारोप्य परिजगदनाचरितचरनिजाचरणानुस्मरणसमुदीयमानविस्मयरसविकस्वरवदनभास्वरैः सांश्लाघिनपरैरखिलनरवरैस्साधु साध्विति बद्धादरं वावदूकैर्यायजूकैर्भूसुरैरपि भासुरपरिसरभागः परिभूषितान्तरां परिश्रान्तपरिजनां निजपुरीं परीतकुतुकमवाप्य दुष्प्रापकार्यनिष्पादनानल्पलालसाय

---

त्यक्तेत्यादि । प्रमदोपसङ्गी प्रमदायाः, प्रमदस्य च । मुग्धस्मितैः मनोहरमन्दस्मितैः, नूतनविकासैश्च । आत्मभूतैः आत्मन उत्पन्नैः, आत्मानं प्राप्तैश्च । आमोदो हर्षः, सौरभ्यं च । प्रसवैः पुत्रैः, पुष्पैश्च ॥ ७६ ॥

तदन्वित्यादि । प्रतिश्रवः प्रतिज्ञा । आप्यानः प्रवृद्धः । 'स्फायी ओप्यायी वृद्धौ' । 'ओदितश्च' (पा० सू० ८-२-४५) इति निष्ठातकारस्य नकारः । 'प्यायः पी' (पा० सू० ६-१-२८) इति पीभावविकल्पस्य व्यवस्थितत्वादनुपसर्गस्य नित्यं भवति सोपसर्गस्य तु नैव भवति । "आप्यानश्चन्द्रमा" इति वृत्त्युक्तेः पीभावाभावः । परिजगत् जगति । सांश्लाघिनं सर्वव्यापिनीं श्लाघाम् । 'अभिविधौ भाव इनुण्' (पा० सू० ३-३-४४) इतीनुण् । 'अणिनुणः' (पा० सू० ५-४-१५) इति स्वार्थेऽण् । वावदूकैः साधु वदतीति वावदूकः । 'यजजपदशां यङः' (पा० सू० ३-२-१६६) इति सूत्रे वदेरनुप्रवेशः कार्य इति पदकारवाक्यादूकप्रत्यय इति क्षीरस्वामी । यायजूकैः यजनशीलैः । 'यजजप—' (पा० सू० ३-२-१६६) इत्यूकः । "लालसे प्रार्थनौत्सुक्य" *इत्यमरः । परिभूषितान्तराम् अन्तर्बहिरप्यलङ्कृताम् । "अन्तरमवकाशावधि-

---

* इदं मुद्रितामरकोशे न दृश्यते ।

तातप्यमानमानसाय ताताय चेदिकुलवतंसायमाना वासवीयं समानीतेति तां समर्प्यायमनल्पादरं तत्पादपाथोजयोः प्रणिपपात ॥

तदनु शन्तनुरिमां निजहृदयापवरकोपविष्टां सपदि पुरतो दृष्ट्वा दिष्ट्या महीयमानो मम मनोरथमहीरुहोऽयमशनैरनवकेशीति सम्मोदसागरतरङ्गतरलितान्तरङ्गोऽयमुभाभ्यां प्रणयभरचलिताभ्यां भुजलताभ्यां गाङ्गेयममुमालिङ्गन्नुत्तमाङ्गे सन्तानसुमनोगन्धसमाक्रान्ते समाघ्राय 'वत्स! मदीप्सितापादनपरमोत्सुक! धृतिमतां पुरस्सर! त्रैलोक्यदुष्करेऽपि कर्मणि प्रभवता भवता वयमद्य सत्पुत्रिणामग्रेसरा भवाम' इत्युदीर्य स्वच्छन्दमृत्युतामपि वितीर्य तामुपयच्छमानोऽनया सह यथेच्छमिह बहून्यहानि विजहार ॥

एवं सा समये गते बहुतिथे मोदादमित्राङ्गदं
पित्रैव प्रमितं प्रकृष्टसमये प्रासोष्ट चित्राङ्गदम् ।
भूयोऽप्याशु विचित्रवीर्यमनुजं वर्यं गुणैर्वासवी
भूयोभिः क्रमतो दिनेशशशिनौ दिग् वासवीया यथा ॥ ७७ ॥

---

परिधानान्तार्धिभेदतादर्थ्ये । छिद्रात्मीयविनाशे बहिरवसरमध्येऽन्तरात्मनि च ॥" इत्यमरः । वसोरपत्यं वासवी ॥

तदन्वित्यादि । हृदयमेवापवरकः गर्भगृहम् । "गर्भागारेऽपवरकः" इति वैजयन्ती । महीयमानः वर्धमानः । 'महीङ् पूजायाम्' इति कण्ड्वादौ । वृत्तौ चाह हरः । अनवकेशी सफलः । स्वच्छन्दमृत्युतां स्वाधीनमरणताम् । उपयच्छमानः उपयमनं कुर्वन् । 'उपाद्यमः–' (पा० सू० १-३-५६) इत्यात्मनेपदम् ॥

एवमित्यादि । बहुतिथे बहूनां पूरके । अमित्राङ्गदं शत्रुशरीरखण्डनम् । 'दो अवखण्डने' । 'आतोऽनुपसर्गे कः' (पा० सू० ३-२-३) । प्रमितं सदृशम् । प्रासोष्ट प्रसूतवती । वासवीया प्राची ॥ ७७ ॥

एताभ्यामर्भकाभ्यां सहजगुणगणैर्भासुराभ्यामुभाभ्यां
भीष्मेणामित्रपङ्कक्षपणविरचने ग्रीष्मकालोष्मभासा ।
अश्रान्तं शीलवत्या जगति महितया सत्यवत्यापि साकं
सुख्यन् विख्यातकीर्तिः पुर इह वसुधावासवोऽसाववात्सीत् ॥ ७८॥

निर्विष्टविषयस्सोऽयं वर्षिष्ठो वसुधापतिः ।
अदृष्टविजितं काले प्रविष्टोऽथ त्रिविष्टपम् ॥ ७९ ॥

अनन्तरमयं शन्तनुतनूजः सन्तायमानं सन्तापभारं मन्देतरेण धैर्यसारेण मन्दयन्निजनिगदितोपशमितशोकाभ्यां सहजाभ्यां सह निखिलं निवापविधिं विधिवदेव विततान ॥

तत्रायं रूढकीर्तेः प्रतिदिवससमारूढमूर्तेः पुरस्ता-
दालोक्याप्यग्रहस्तं जनयितुरखिलं वीक्षिता धर्मसूक्ष्मम् ।
पिण्डं भाण्डं स्वधायां प्रयततरमना दर्भ एवार्पयित्वा
पूतात्मानं तमन्तस्सपदि समतनोत् प्रीतिमन्तं नितान्तम् ॥८०॥

---

एताभ्यामित्यादि । क्षपणं विनाशनं, तस्य विरचने । 'क्षै क्षये' घटादिः, णिचि पुक् । सुख्यन् सुखमनुभवन् । "सुख दुःख तदनुभवे" इति कण्ड्वादित्वाद्यक् ॥ ७८ ॥

निर्विष्टेत्यादि । वर्षिष्ठः अतिशयेन वृद्धः । इष्ठनि 'प्रियस्थिर--' (पा० सू० ६-४-१५७) इति वर्ष्यादेशः । अदृष्टम् अपूर्वम् ॥ ७९ ॥

अनन्तरमित्यादि । सन्तायमानं वर्धमानम् । निजनिगदितोपशमितेति, "शोकाश्रु बान्धवैर्दत्तं मृतो भुङ्क्ते यतोऽवशः । अतो न रोदितव्यं हि क्रिया कार्या स्वशक्तितः ॥" इत्याद्युक्तप्रकारेण ॥

तत्रेत्यादि । प्रतिदिवसेति दिवसे दिवसे समारूढा उत्पन्ना मूर्तिर्यस्य । मूर्तिशब्देनात्रावयवा लक्ष्यन्ते । मृतदिनादारभ्य प्रतिदिवसं मूर्धाद्यङ्गानामुत्पत्तिरिति प्रसिद्धिः । जनयितुः प्रसारितम् अग्रहस्तं हस्ताग्रम् आलोक्यापि दर्भ एवार्पयित्वा प्रीतिमन्तं समतनोदित्यन्वयः । वीक्षितेति साधुकारिणि तृन् । स्वधा पितृभोज्यांशः । पूतात्मानं तदानीन्तनैर्दानैरिति शेषः ॥ ८० ॥

ततश्च,

स्वमयं समयं रक्षन् पित्र्ये चित्राङ्गदं पदे ।
राज्ञां मतं निजाज्ञायामधिष्ठितमतिष्ठिपत् ॥ ८१ ॥

पृथ्वीपतीनां प्रथमो मित्रामोदविवर्धनः ।
विबुधैरेष विबभौ मनुवन्मनुजाधिपः ॥ ८२ ॥

प्रभञ्जनाशान् विहितप्रपञ्चनाशानशेषान् स खलाभिधानान् ।
रसाश्रितानश्रमतो नरेन्द्रः संद्रावयामास निगूढमन्त्रः ॥ ८३ ॥

स्फायत्सत्त्वसमावृताश्रिरसहार्यख्यातिमासादिता
नित्योदित्वरवाहिनीशतयुता माहात्म्यसञ्चायिता ।
विश्वेऽपि क्षपितस्वपक्षविभवाः प्रत्यर्थिपृथ्वीभृतः
पृथ्वीन्द्रस्य पराक्रमाख्यभिदुरेणातेनिरेऽथ क्षणात् ॥ ८४ ॥

---

ततश्च,

स्वमित्यादि । अतिष्ठिपत् स्थापयामास ॥ ८१ ॥

पृथ्वीत्यादि । प्रथमः आदिभूतः । "मात्स्यन्यायाभिभूतास्ताः प्रजा वैवस्वतं मनुम् । राजानं चक्रुः" इत्युक्तत्वात् । प्रधानभूतश्च । मित्रस्य सूर्यस्य, मित्राणां च । विबुधान् अवतीति विबुधैः । क्विपि ऊठि, 'एत्येधत्यूठ्सु' (पा० सू० ६-१-८९) इति वृद्धिः । मनुर्वैवस्वतः ॥ ८२ ॥

प्रभञ्जनेत्यादि । खलाभिधानान् प्रभञ्जनाशान् सर्पान् । रसां भूमिं, रसं विषं च आश्रितान् । "नरेन्द्रो विषवैद्येऽपि" इति निघण्टुः ॥ ८३ ॥

स्फायदित्यादि । सत्त्वानि जन्तवः, सत्त्वं पराक्रमश्च । अहार्या इति ख्यातिम् । "अचलशिलोच्चयशैलक्षितिधरगिरिगोत्रपर्वताहार्याः । नगशिखरिसानुमन्तो धराद्रिकुध्राश्च तुल्यार्थाः ॥" इति शब्दरत्नाकरः । अहार्या चासौ ख्यातिश्च । वाहिन्यो नद्यः, सेनाश्च । माहात्म्यमौन्नत्यं, पूजितमनस्कत्वं च । पक्षा गरुतः, सहायाश्च । प्रत्यर्थिन एव पृथ्वीभृतः पर्वताः । भिदुरं वज्रम् ॥ ८४ ॥

स रञ्जितक्ष्मावलयो हि सद्गुणैररञ्जितक्ष्मावलयो महीपतिः ।
सदाप्यरीणामिह गुप्तिमावहन् सदाप्यरीणामभवद्विनाशनः ॥ ८५ ॥

स भूपालो भूयश्चतुरुदधिभूषां भुवमव-
न्नवात्सीदुत्सर्पत्पृथुभुजबलोष्मा पुरवरे ।
अनिन्दीदिन्द्रादीनपि मदभराद् यौवनमहो !
विशुद्धे चित्तेऽपि ध्रुवमिह विधत्ते कलुषताम् ॥ ८६ ॥

कुर्वाणं सर्वदेवं बत ! निखिलजगन्निन्दनं मन्दिरं तत्
प्रोत्सेकेनावसन्तं कुरुकुलककुदं प्राप्य गर्भेश्वरं तम् ।
आम्नातं स्वेन नाम्ना धृतरभसभरः कोऽपि चित्राङ्गदाख्यो
गन्धर्वः स्पर्धमानः श्रुतिकटु वचनं बद्धमानो बभाषे ॥ ८७ ॥

रे रे कौरव्य ! नव्योदयजनितमदाध्मात ! सन्नामधेयं
सन्दिग्धार्थं यदद्य त्रिजगति तनुषे मानुषैस्तन्न मृष्ये ।
मूढेदं नाम रूढं यदि न तु विदितं मत्कमेवेति तद् द्रा-
गन्यद् गृह्णीष्व नो चेदयमहमिह नामैव ते शेषयिष्ये ॥ ८८ ॥

---

स इत्यादि । रञ्जितः अरञ्जित इति विरोधः । अत्यर्थं जितेति परिहारः । अरीणाम् अक्षीणाम्, शत्रूणां च ॥ ८५ ॥

स इत्यादि । मदभरात् मदातिशयात् । अनिन्दीत् निन्दितवान् । कलुषतां रागादिकालुष्यम् ॥ ८६ ॥

कुर्वाणमित्यादि । गर्भश्चासावीश्वरश्च गर्भेश्वरः । गर्भः शिशुः । "कुक्षिभ्रूणार्भका गर्भाः" इत्यमरः । यौवनप्रारम्भ एव लब्धराज्य इत्यर्थः । अनेन – "यौवनं द्रव्यसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥" इति कामन्दकोक्तमनर्थापत्तियोग्यत्वमुक्तम् ॥ ८७ ॥

रे रे इत्यादि । अरे रे सावक्षेप आह्वाने । जनितः, 'जनी प्रादुर्भावे' णिच् । मदाध्मातः मदापूरितः । सन्दिग्धार्थं वाच्यद्वयसद्भावात् । मत्कं मदीयमिति यावत् । 'स एषां ग्रामणीः' (पा० सू० ५-२ ७८) इति कन् । ग्रामणीर्नाथः ।

एवं गर्वान्धगन्धर्वराजदुर्वादसन्धुक्षितदुर्वाररोषभारभाग् अनात्त-गन्धचरो वसुन्धरापतिसत्तमः स भरतसत्तमो युद्धाय बद्धकक्ष्यो झटिति पुटभेदनान्निर्गतः श्रवणपुटभेदनेन ज्यानिनादेन मुखरितहरिन्मुख-स्तदभ्याशमभ्येत्य निर्मितनिखिलजनहृदयकम्पां निर्जितपर्जन्यगर्जितां गिरमुत्ससर्ज ॥

भो भो! दुर्वारगर्वोद्धतसमुदितदुर्माननिर्मथ्यमान-
स्वान्तापायद्विवेकोदय! दृढमियमिच्छा तव छात! वन्ध्या।
दुस्साधे मा यतेथा नविदितशशिवंशानुभावोदयोऽसौ
खद्योतेनेह विद्योतितजगदभिभूयेत किं भानुमाली ॥ ८९ ॥

रे रे खेचरखेट! केचन जनास्तावत् प्रतिस्पर्धिना-
मौद्धत्योपहितानि भीषणतराण्यभाषितान्याहवे।
श्रुत्वैवाधिकसंभ्रमाकुलतरस्वान्ताः प्रधावन्त्यहो!
मा मां कद्वद! तद्वदद्य गणयन् जल्पैवमल्पाशय! ॥ ९० ॥

---

''प्रायेण तु तस्येदमित्यर्थमात्रे प्रयुञ्जत'' इति हरः, मत्का वाक्। शेषयिष्ये शेषं करिष्ये। शेष इत्यजन्तः। तस्मात् 'तत्करोती'ति णिच्। यद्वा—'शिष असर्वोपयोग' इत्यस्माद् 'आ धृषाद्वा' (ग० सू०) इति विभाषितणिच्कत्वात् चुरादिणिजभावे हेतुमण्णिचि रूपम्। निग्रहीष्यामीति यावत् ॥ ८८ ॥

एवमित्यादि। सन्धुक्षितः वर्धितः। 'धुक्ष सन्दीपने'। ''आत्त-गन्धोऽभिभूतः स्याद्'' इत्यमरः। पुटभेदनात् पुरात् ॥

भो भो इत्यादि। अपायन् अपगच्छन्। छात! कृश! दुर्बल!। ''अमांसो दुर्बलश्छात'' इत्यमरः। नविदितः अविदितः। खद्योतेन कीटमणिना ॥ ८९ ॥

रे इत्यादि। खेचरखेटो गर्ह्यः खेचरः। 'कुत्सितानि कुत्सनैः' (पा० सू० २-१-५३) इति समासः। कद्वदः ''गर्ह्यवादी तु कद्वदः'' इत्यमरः। 'रथवदयोश्च' (पा० सू० ६-३-१०२) इति कुशब्दस्य कदादेशः ॥ ९० ॥

रे रे कुशीलवनिहीन! विवेकहीन!
गन्धर्वगन्धलवबन्धमदान्वितस्य।
मत्पत्रिकृत्तगलनिर्गलितास्रपूरं
द्रागापिबन्तु तव हन्त! शकुन्तसङ्घाः ॥ ९१ ॥

वाचाल! वीतविनयोदय! वीरमानिन्!
वाचालमीषदिह दर्शय बाहुवीर्यम्।
अन्तर्वपाशविधये नितरां त्वरन्ते
गन्धर्वपाश! विशिखाः क्षुधिता ममैते ॥ ९२ ॥

इति निजनिर्भत्सनद्विगुणीकृतरभसभरेण तेन सह हिरण्वतीतीरधरण्यां विमर्दनक्षमं वृषक्षेत्रं कुरुक्षेत्रमागत्य परस्परजयोत्सुकौ तावुभावपि रभसोदित्वरसमरत्वरायत्तचित्तवृत्तिकौ भृशप्रकटमानौ झटिति घटमानौ हरिहराविव सदाविवरान्वेषिणौ, राघवपावकाविव रक्षोपनयतत्परौ, जिष्णुविष्णुरथाविवाहितापनयनाहितात्मानौ प्रतिभटमदसंहारिसिंहारव-

---

रे इत्यादि। कुशीलवनिहीन! गन्धर्वापशद!। गन्धर्वस्य गन्धलवबन्धेन गन्धस्य लेशस्य लवो गन्धलेशः। अत्यल्पोंऽश इत्यर्थः। तस्य बन्धेन। "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः" इति विश्वः ॥ ९१ ॥

वाचालेत्यादि। वीरमानिन्! वीरमात्मानं मन्यमान!। 'आत्ममाने--' (पा० सू० ३-२-८३) इति णिनिः। अन्तर्वपायाः अन्तःस्थाया वसायाः आशविधिः भोजनविधिः। कुत्सितो गन्धर्वो गन्धर्वपाशः। 'याप्ये पाशप्' (पा० सू० ५-३-४७)। याप्यः कुत्सितः ॥ ९२ ॥

इतीत्यादि। हिरण्वती नाम काचिन्नदी। वृषक्षेत्रं धर्मक्षेत्रम्। भृशप्रकटः अत्यर्थं प्रकटः। विवरः पक्षिश्रेष्ठः। अविवरः पर्वतश्रेष्ठः, विवरं छिद्रं च। रक्षोपनयने रक्षसां अपनयने, रक्षाया भसन उपनयने च। रक्षाया आत्मच्छिद्रविधानस्य उपनयने च। जिष्णुः शक्रः। विष्णुरथः गरुडः। अहेः वृत्रस्य, अहीनां सर्पाणां च तापनयने। अहितस्य शत्रोरपनयने च। सिंहारवः

मुखरितदिशामुखं निरन्तरविकीर्यमाणशरनिकरनीरन्ध्रितगगनान्तरालं मिथः प्रयुज्यमानाग्नेयपार्जन्यवायव्यपार्वतनागगारुडपाशुपतनारायणब्राह्मप्रभृतिपरमास्त्रजातसञ्जातचिरतरस्थायुकाचिरप्रभाजालजाज्वल्यमानजगदन्तरालम् अनिर्णीतजयापजयमुद्धततरं द्वन्द्वयुद्धमिद्धावधानमादधाताम् ॥

इत्थं संवत्सराणां त्रितयमुदितनानास्त्रशस्त्रप्रहारे
दुर्वारे संप्रहारे भुवनभयकरे निर्विशेषं प्रवृत्ते ।
राजन्यो नान्यथायं कथमपि विनिपात्यो ममेत्यात्तचिन्तो
गन्धर्वो माययामुं सपदि स विनिहत्याभ्ययान्नाकलोकम् ॥९३॥

स च पौरवेन्द्रः परेतोऽपि पराभवममुमसहमान इव सरभसं दिवमवाप्य विग्रहविजितगन्धर्वराजः परमिह रराज ॥

अथ भ्रातुरौर्ध्वदैहिकविधाने विधिवदवसिते देवव्रतेनाभिषिक्तो विशिष्टरूपशीलो विष्टपत्रयविचितवीर्यः स विचित्रवीर्यो धरित्रीं चतुरुदधिपरित्रौकितां परित्रायते स्म ॥

---

सिंहनादः । मिथः अन्योन्यम् । अग्निर्देवतास्य आग्नेयम्, 'अग्नेर्ढक्' (पा० सू० ४-२-३३)। वायुर्देवतास्य वायव्यं, 'वाय्वृतु–' (पा०सू० ४-२-३१) इत्यादिना यत् । पर्जन्यपर्वतादिषु सप्तसु अस्मिन्नर्थेऽण् । अचिरप्रभा विद्युत् । अपजयः पराजयः ॥

इत्थमित्यादि । संप्रहारे युद्धे । निपात्यः निपातयितुं शक्यः ॥ ९३ ॥

स इत्यादि । परेतः मृतः । विग्रहे युद्धे, विग्रहेण देहेन च । इह दिवि ॥

अथेत्यादि । और्ध्वदैहिके मृतमुद्दिश्य मृताहे यद्दानं तदौर्ध्वदैहिकमुच्यते । अध्यात्मादित्वात् ठक् । 'अनुशतिकादीनां च' (पा०सू० ७-३-२०) इत्युभयपदवृद्धिः । परित्रौकितां प्रासाम् ॥

यस्मिन् द्रागभ्यमित्र्ये तुरगखुरसरद्धूलिजालेन वार्धि-
ष्वद्धा जम्बालितेषु स्वरुमुरुकुतुकादाददे गोत्रभेदी ।
स्वेनैवेभाजिनेन त्वरितमपिदधत्तुङ्गकोटीरभारं
गङ्गाजारोऽपि लोके किमिदमिति पुरा संभ्रमी बंभ्रमीति ॥ ९४ ॥

यो वालो बलभागरिष्टदमनो गोवर्धनोद्धारको
गोपालालिसमावृतोऽधिकमुदाधीनोग्रसेनान्वितः ।
सद्वृन्दावननित्यबद्धहृदयस्तोष्टूयमानः सदा
मोदाविष्टधिया पुरा सुमनसां चक्रेण चक्रेणति ॥ ९५ ॥

अपनीतान्यभूपोद्यदपनीतिभवव्यथा ।
अविनीयेन नितरामवनी येन पालिता ॥ ९६ ॥

---

यस्मिन्नित्यादि । अभ्यमित्र्ये अमित्रं प्रत्यलं गच्छति सति । 'अभ्यमित्राच्छ च' (पा० सू० ५-२-१७) इति यत् । वार्धिषु जलधिषु । स्वरुं वज्रम् । गोत्रभेदीति हेतुगर्भम् । इभाजिनेन इभचर्मणा । अपिदधत् तिरोदधत् । अत्र गङ्गाजार इति हेतुगर्भम् । पुरा बंभ्रमीति बभ्राम । 'पुरि लुङ् च–' (पा० सू० ३-२-१२२) इति भूते लट् ॥ ९४ ॥

य इत्यादि । बलो बलभद्रः, बलं शक्तिश्च । अरिष्टस्य अरिष्टासुरस्य, अशुभस्य च । गोवर्धनस्य पर्वतस्य, गोवर्धनानां भूमिद्रुहां च । गोपालाः पशुपालाः, राजानश्च । उग्रसेनः उग्रा सेना च । सद्वृन्दावने सति वृन्दावने, सद्वृन्दस्य सज्जनसमूहस्य अवने च । सुमनसां चक्रेण देवसमूहेन, सज्जन-समूहेन च । तोष्टूयमानः अत्यर्थं स्तूयमानः । चक्रेणति पुरा चक्रीवाचरति स्म । 'सर्वप्रातिपदिकेभ्यः क्विब्वा–' (वा०) इति क्विप् । 'इन्हन्पूषार्यम्णां शौ' (पा० सू० ६-४-१२) इति दीर्घनियमस्य सर्वोपधाव्यापित्वात् तेषां कौ दीर्घो न गुणः ॥ ९५ ॥

अपनीतेत्यादि । अपनीता निरस्ता । अविनीयं पापम् ॥ ९६ ॥

रक्षाव्याप्तिपरिध्वंसशङ्क एव सदैव यः ।
द्विषज्जनपदं चापि रक्षान्वितमिहातनोत् ॥ ९७ ॥

अथ भागीरथीसूनुर्वीक्ष्य तं नवयौवनम् ।
उद्वाहयितुमुद्युक्तः सद्योऽयं समपद्यत ॥ ९८ ॥

तस्मिन्नवसरे विसृमरयशोराशिराजिताशः काशिराजः कदाचिदम्बेत्यम्बिकेत्यम्बालिकेति च विश्वजगति विश्रुतास्तिस्रोऽपि निजकन्यकाः प्रोद्भिन्नयौवना निध्याय समारिप्सितस्वयंवरोत्सवः सकलमेदिनीशनिवहानिनीषया प्रतिदिशं सन्देशहरसङ्घान् जङ्घाकरिकान् प्रजिघाय ॥

स्वस्वामिप्रेषणाख्यश्वसनपरिचलद्दूतजीमूतमुक्तैः
सन्देशासारपूरैर्लघुभरितरसाः संभृतोद्वेलवेलाः ।
सद्यः कृत्स्नाचलान्तादुदयदुरुरवा भूपवाहिन्य एतं
काशीशावाससिन्धुं भुवनसुमहितं प्रावहन् प्रावृताशाः ॥ ९९ ॥

---

रक्षेत्यादि । रक्षा पालनम् । व्याप्तिपरिध्वंसः अव्याप्तिः । रक्षा भस्म च ॥ ९७ ॥

अथेत्यादि । उद्वाहयितुं उद्वाहं कारयितुम् ॥ ९८ ॥

तस्मिन्नित्यादि । विसृमरः प्रसरणशीलः । निध्याय दृष्ट्वा । आरिप्सितः आरब्धुमिष्टः । सन्देशहराः दूताः । जङ्घाकरिकान् जाङ्घिकान् । जङ्घे एव करौ कर्मकरस्य कराविव कर्मप्रतिपादके यस्येति जङ्घाकरिकः । प्रजिघाय प्रेरयामास । 'हि गतौ' ॥

स्वस्वामीत्यादि । प्रेषणमेव श्वसनः । रसो रागः, जलं च । अचला भूमिः, अचलाः पर्वताश्च । भूपा एव वाहिन्यो नद्यः । भुवनं लोको, जलं च । प्रावहन् वेगेनागच्छन् । प्रावृताः आच्छादिताः ॥ ९९ ॥

वृत्तान्त एष लघु तस्य विवाहयोगं
भ्रातुर्विचिन्तयत एव नदीसुतस्य ।
कर्णातिथित्वमगमन्महतां हि काङ्क्षा
द्राक् पारिजातफलवत् परिपाकमेति ॥ १०० ॥

गङ्गासुतोऽथ मुदितो महितं शताङ्गं
साङ्ग्रामिकं समधिरुह्य स घोरधन्वा ।
आयासितामरपुरीं नगरीमयासी-
द्वाराणसीं जनरवैर्बधिरीकृताशाम् ॥ १०१ ॥

ततः प्रतिसरनृपसरसिजाक्षीवदनसरसीरुहविसरशिशिरावतारः स खलु काशिराजः सकलदिशासमागतान् साल्वमुखानखिलावनिपालान् अहितकुलभीषणं भरतकुलभूषणं भीष्ममपि स्वागतानुयोगादिभिरभिपूज्य निखिलपरिकराञ्चितेषु नितरामुदञ्चितेषु मञ्चेषु रुचिरसन्निवेशेषु सन्निवेशयामास ॥

भृशमहितस्तम्भकृता प्रह्लादासक्तमानसेन तदा ।
वृद्धतरेण विरेजे नृसिंहवद् वाहिनेयेन ॥ १०२ ॥

---

वृत्तान्त इत्यादि । लघु शीघ्रम् । द्राग् उत्पत्तिसमय एव ॥ १०० ॥

गङ्गेत्यादि । सङ्ग्रामाय प्रभवन् शक्तः साङ्ग्रामिकः । 'तस्मै प्रभवति–' (पा० सू० ५-१-१०१) इति ठक् । आयासिता क्लेशिता ॥ १०१ ॥

तत इत्यादि । प्रतिसरनृपाः शत्रुभूपाः । परिकराः उपकरणानि । उदञ्चितेषु उन्नतेषु ॥

भृशेत्यादि । भृशमहितं अत्यर्थं महान्तं स्तम्भं कृन्ततीति भृशमहितस्तम्भकृत् । 'कृती छेदने' क्विप् । अहितानां स्तम्भं करोतीति च । प्रह्लादोऽसुरः, प्रकृष्टो ह्लाद आह्लादश्च । वृद्धतरेण अधिकविपुलेन, स्थविरतरेण च । वाहिनेयो भीष्मः ॥ १०२ ॥

तदनु निजपितृनियोगादुपयमौपयिकवेषधारिकाः कुमारिकाः प्रौढकिङ्करनिकरसमुपोढं चतुरपरिवारजनविराजमानमेकमेव चतुरन्तयानमलंकुर्वाणाः विकुर्वाणाः करकमलपरिकलितवरणमाल्याः पतिंवराः स्वयंवरभुवमभिविषत ॥

एता दर्पेण लोकत्रयमपि युगपज्जेतुकामेन नूनं
कामेनैवात्र सृष्टा इति निखिलजनैः सादरं नन्द्यमानाः ।
तास्तिस्रः स्मेरतारैः सरसमनिमिषैरीक्षणैर्वीक्षमाणा
एव प्रापुर्महीपाः सपदि कुसुमबाणान्धतां ते नितान्तम् ॥ १०३ ॥

तदनु सखीभिः प्रसन्नमुखीभिः उदीर्णादरमनुवर्ण्यमानान् वर्णपालकाननलंभावुकाभीप्सितगुणानवलोकयन्त्य एव सञ्चरन्त्यः सकलसम्मतः परमधार्मिकः पराक्रमोष्मणो भीष्मोऽयमित्यभिभाष्यमाणास्तिस्रोऽपि तास्त्रिस्रोतस्विनीसुतममुं वृद्धोऽयमिति सत्वरोदितजुगुप्सातिरेकावनतमुखा विमुखास्तत्क्षणमेवातिचक्रमुः ॥

तदानीमवनीपाला अविनीताशया मिथः ।
प्राहुस्ते सुभगम्मन्याः परिहासपुरस्सरम् ॥ १०४ ॥

---

तदन्वित्यादि । औपयिकं युक्तम् । चतुरन्तयानं शिबिकाम् । विकुर्वाणाः हृष्टमनसः । अभिविषत प्राप्तवत्यः ॥

एता इत्यादि । कामेनैव ब्रह्मणा सारूप्यातिशयात् ॥ १०३ ॥

तदन्वित्यादि । अनलंभावुकाः अपर्याप्ताः । भावुका भवनशीलाः । 'लषपत' (पा० सू० ३-२-१५४) इत्युकञ् । ऊष्मणः ऊष्मवान् । जुगुप्सा निन्दा । अवनतमुखा विमुखा इत्युभयत्रापि 'स्वाङ्गाच्च–' (पा० सू० ६-३-४१) इति ङीषभावे रूपम् ॥

तदानीमित्यादि । सुभगम्मन्याः आत्मानं सुभगं मन्यमानाः ॥ १०४ ॥

डिण्डीरापाण्डुरोमा कुत इह गतवान् जीर्णवर्ष्मैष भीष्मः
कन्यार्थी नोर्ध्वरेता नियतमभिगमादेव विस्पष्टमेतत् ।
भूपं संभावयिष्यन्निममिदमधुना पश्य वक्त्रं विलक्षं
धीरम्मन्यस्य कामः कथमपि विधृतो वार्धके वर्धते हि ॥ १०५ ॥

साक्षीकृत्य त्रिलोकीं शिवशिव! विहिता दाशकन्यानिमित्तं
साध्वी सा हि प्रतिज्ञा विहितहतिकरी धीरता सा च साध्वी ।
साध्वी सा हि प्रसिद्धा त्रिजगति महिता ब्रह्मचर्यैकनिष्ठा
धूर्तेनानेन कृत्स्ना चिरमियमवनी हा! वनीवच्यते स्म ॥ १०६ ॥

एवमपहसत्सु मिषत्सु निषीदत्सु निखिलमहीभृत्सु सरित्सुनुरसौ वरीवृध्यमानरभसभरोद्धतः शिखरिशिखरात् पञ्चास्य इव मञ्चादवपत्य प्रसह्य ताः कन्यकाः प्रगृह्य रथमधिरूढः प्ररूढगर्वं प्रतस्थे ॥

पश्यन् काशीश्वरस्तत् प्रसृमररभसोद्रेकसंरक्तनेत्र-
प्रान्तोऽयं फालपट्टप्रकटितचटुलभ्रूकुटीदुर्निरीक्षः ।
साटोपं कङ्कटाच्छादितविकटतरोरःस्थलः स्यन्दनस्थः
क्वासावित्यात्तधन्वा द्रुतममुमनुदुद्राव विद्रावितारिम् ॥ १०७ ॥

---

डिण्डीरेत्यादि । फेनः । जीर्णं जरत् । कुतः इह गतवान् कस्मादत्रागतः । विलक्षं सलज्जमित्यर्थः । वार्धके वृद्धत्वे । 'द्वन्द्वमनोज्ञादिभ्यश्च' (पा० सू० ५-१-१३३) इति मनोज्ञादित्वाद् भावे वुञ् ॥ १०५ ॥

साक्षीत्यादि । "ब्रह्मचर्यं बुधाः प्राहुः समस्तेन्द्रियसंयमम्" इति शब्दरत्नाकरः । वनीवच्यते स्म अत्यर्थं वञ्चिता । 'वञ्चू प्रलम्भने' ॥१०६॥

एवमित्यादि । मिषत्सु पश्यत्सु । अवपत्य अवप्लुत्य ॥

पश्यन्नित्यादि । कङ्कटः कवचः ॥ १०७ ॥

वेगादभ्येत्य भीष्मं श्रवणकटु नदन् घोरघोरैः शरौघै-
राकर्णाकृष्टमुक्तैर्ज्वलदनलशिखैरौर्णविष्टैष धृष्टः ।
पश्यन्तो विश्वलोकास्तदिति निजगदुर्हन्त! पश्वास्यमेष
न्यङ्कुः शङ्काविहीनं सपदि परिबुभूषत्यहो! भीमरूपम् ॥१०८॥

अनन्तरमखिलवसुन्धरापतयोऽपि दुर्मदनिकारजनितामर्षपोष-कलुषीकृतशेमुषीकाः सद्यः सम्पद्यमानसंभ्रमविहस्ताः सम्मर्द्यमानाग्रहस्ता दन्दश्यमानदन्तच्छदाः पदुपहताहिवदभीक्ष्णमुच्छ्वसन्तः 'समस्तानप्य-स्त्रिणो नः स्त्रियः कृत्वा स्त्रैणतयैव द्रुततरमकामा इमा नयन्तमविनयं तमिममविचक्षणाः किमुपेक्षध्वे षण्डाः! किमिदानीं कुण्ठाशया बत सन्तिष्ठध्वे। गृह्णीत, निगृह्णीत, बध्नीत, मथ्नीत, दण्डयत, खड्गयत, मुद्ग-रयत, परशयत, परिघयत, मुण्डयत, पिण्डयते'ति दर्पादनल्पं जल्पन्तः गर्धितयुद्धकर्माणः सपदि बद्धवर्माणः कार्मुकानि नखमुचानि समुद्धरन्तः

---

वेगादित्यादि। और्णविष्ट छादितवान्। 'ऊर्णुञ् छादने'। 'विभा-षोर्णोः' (पा० सू० १-२-३) इति कुत्वाभावे रूपम्। धृष्टः प्रगल्भः। "निस्साध्वसत्वं प्रागल्भ्यं प्रयोगेषु च सर्वतः" इति भावप्रकाशः। न्यङ्कुः हरिणः। परिबुभूषति परिभवितुमिच्छति ॥ १०८ ॥

अनन्तरमित्यादि। निकारः परिभवः। पदुपहतः पादेनोपहतः। 'हिमकाषिहतिषु च' (पा० सू० ६-३-५४) इति पादशब्दस्य पद्भावः। स्त्रैणतया, भक्तिरित्यर्थे 'स्त्रीपुंसाभ्यां–' (पा० सू० ४-१-८७) इति नञ्। भज्यत इति भक्तिः कर्मणि क्तिन्। स्त्री अस्य सेव्या स्त्रैणः। स्त्रीसक्त इति यावत्। खड्गयतेत्यादिषु चतुर्षु ('करणेभ्यस्ता? कर्तृकरणा) द्धात्वर्थे' (ग० सू०) इति णिच्। खड्गेन छिन्तेत्याद्यर्थः। मुण्डयत मुण्डं कुरुत। पिण्डयत पिण्डं कुरुत। गर्धितं काङ्क्षितम्। 'गृधु अभिकाङ्क्षायाम्'। नखमुचानि स्थौल्येन मुष्टेर्बहिर्भूतत्वान्नखविश्लेषकाणि। 'मूलविभुजादिभ्यः–' (वा०) इति कः। कम्बलेन परिवृताः छादिताः काम्बलाः।

काम्बलान् वास्त्रान् वैयाघ्रानास्कन्दनसमुचितान् स्यन्दनवरानखिल-परिकरबन्धबन्धुरतरान् सिन्धुरवरान् सिन्धुजवरानप्युदूढजयाभिलाष-मधिरूढाः सत्वरमनुद्रुत्य 'रे वृद्ध! वनितालुब्ध! राक्षसदेश्य! कन्यकानां पश्यतोहर! क प्रयासि मानसबद्धकूट! मानवदुर्दुरूट! पण्डितमानिन्! उदपानमण्डूक! आसु लोलतां विहाय असुलोलतामा-वहे'ति परिवादशरैः प्रहरमाणा निर्भयमभ्यधावन्त ॥

स्पर्धानिबद्धमनसामवनीश्वराणा-
मित्थं दुरुक्तिनिवहान् स निशम्य भीष्मः ।
अक्षामवीर्यविभवो न चचाल किञ्चिद्
बुक्कारवैः किमु शुनां विचलेन्मृगेन्द्रः ॥ १०९ ॥

समं ततस्तेन च काशिपेन समन्ततः प्रेक्ष्य निरुन्धतस्तान् ।
सवाहिनीकानवनीशसङ्घान् स वाहिनीसूनुरुवाच वाचम् ॥ ११० ॥

---

वस्त्रेण परिवृताः वास्त्राः । उभयत्र 'परिवृतो रथः' (पा० सू० ४-२-१०) इत्यण् । व्याघ्रचर्म वैयाघ्रं तेन परिवृताः वैयाघ्राः । 'द्वैपवैयाघ्रादञ्' (पा० सू० ४-२-१२) इत्यञ् । आस्कन्दनं जन्यम् । सिन्धुराः गजाः । सैन्धवाः सिन्धु-जाश्वाः । अनुद्रुत्य अनुगम्य । राक्षसदेश्यः प्रायेण राक्षसतुल्यः । 'ईषद-समाप्तौ--' (पा० सू० ५-३-६७) इति देश्यः । "पश्यतो यो हरत्यर्थं स चोरः पश्यतोहरः ।" 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासङ्ख्यमलुग्व-क्तव्यः ।' (वा०) कूटः व्याजः । मानवदुर्दुरूटः नास्तिको मानवः । 'कुत्सितानि कुत्सनैः' (पा० सू० २-१-५३) इति समासः । उदपानमण्डूकः अल्पदर्शी-त्यर्थः । 'पात्रेसंमितादयश्च' (पा० सू० २-१-४८) इति क्षेपे समासः । आसु कुमारिकासु लोलतां सतृष्णताम् । असुलोलताम् असवः प्राणाः ॥

स्पर्धेत्यादि । बुक्कारवैः । 'बुक्क भषणे' भषणमिह श्वरवः । "बुक्कनं श्ववृकध्वाने भषणं भषिते शुनः ।" इति वैजयन्ती ॥ १०९ ॥

सममित्यादि । काशिपेन समं समन्ततः निरुन्धतः ॥ ११० ॥

यूयं शास्त्रविशारदाः! शृणुत मे वाणीमिमां क्षोणिपाः!
प्रोन्मथ्याहरणं स्वयंवरमहे श्लाघ्यं हि पृथ्वीभुजाम् ।
मानाध्मातमनोभिरेतदधुना जुष्यं हि मृष्यं न चे-
द्युष्माभिः समरे शराः शिततरा मे मर्षयेयुः क्षणात् ॥ १११ ॥

ततस्तदानीमेव;

भूपाः सर्वेऽपि भूरिप्रतिघपरमदीप्रेक्षणास्तत्क्षणात् तं
धाराभिर्वारिवाहा गिरिमिव युगपज्ज्वालकल्पैरनल्पैः ।
प्रावर्षंस्ते पृषत्कैरविचलमनसामेनमेकं प्रवेकं
वीरेणानेन बाणैः सपदि पुनरिमे वर्धिताश्चाध्वमध्ये ॥ ११२ ॥

भूयो भूरिमहद्विगर्हणरतिं दुर्वारगर्वान्धतां
भूपानां स तु कन्यकापरिजिघृक्षां चापनेष्यन् समम् ।
एतेषां हृदये त्रिभिस्त्रिभिरपि प्राविध्यदद्धा शरै-
रेकैकेन हयध्वजं च दलितं चक्रं च चक्रे रुषा ॥ ११३ ॥

धात्रीशास्तेन मत्तद्विरदवृषभदस्रेन देवव्रतेन
प्रत्यग्रोत्तेजिताग्रज्वलदनलवलज्ज्वालमालाजटालैः ।
आकर्णाकृष्टमुक्तैः सपदि शरवरैरिद्धरोषेण विद्धा
नूनं व्यामोहवार्धौ शरपतननिरोधाय मङ्क्षु न्यमाङ्क्षुः ॥ ११४ ॥

---

यूयमित्यादि । प्रोन्मथ्याहरणं श्लाघ्यमिति । "स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च । संप्रमथ्याहृतामाहुर्ज्यायसीम्" इति श्रीमहाभारते । मानाध्मातं मानापूरितम् । जुष्यं सेव्यम् । मृष्यं, 'मृष तितिक्षायाम् ।' अस्मादेव णिचि मर्षयेयुः ॥ १११ ॥

ततस्तदानीमेव;

भूपा इत्यादि । अविचलमनसां प्रवेकं श्रेष्ठम् । वर्धिताः छिन्नाः ॥ ११२ ॥

भूय इत्यादि । भूपानामन्तःस्थितानामेतासां तिसृणां युगपदपनयेच्छयेव हृदये त्रिभिस्त्रिभिरविध्यदित्यर्थः । अपनेष्यन्निति द्योतकशून्योत्प्रेक्षा ॥ ११३ ॥

धात्रीशा इत्यादि । व्यामोहवार्धिः समुद्रः । शरपतननिरोधाय नूनं मङ्क्षु शीघ्रम् । न्यमाङ्क्षुः निमग्नाः ॥ ११४ ॥

घोरेऽस्मिन् संप्रहारे कतिचिदवनिपा भिन्नधन्वासिचर्म-
प्रासारिप्रायशस्त्राः कतिचन दलितप्रोज्ज्वलास्त्राग्रहस्ताः ।
प्रच्छातोरश्छदाः केचन कतिचन निर्भिन्नकृत्स्नप्रतीका-
स्त्रस्ताः केऽप्युज्झितास्त्रा द्रुतमखिलदिशा दुद्रुवुर्विद्रुताशाः ॥११५॥

अनेन मथ्यमानाङ्गाः सर्वे पृथ्वीभुजस्तदा ।
निस्पृहाः सस्पृहाश्चासन् विग्रहे ते तदद्भुतम् ॥ ११६ ॥

उर्वीपतीनिति विजित्य निरूढगर्वान्
सर्वानपि द्रुतमयं स्वयमक्षतात्मा ।
तिस्रोऽपि ताः स परिगृह्य ततः प्रतस्थे
त्रैस्रोतसाम्बुसमितामितकीर्तिपूरः ॥ ११७ ॥

इत्थं पृथ्वीपतीनां पृथुलबलयुतं सार्थमुन्मथ्य सार्धं
कन्याभिस्ताभिरस्मिन् भरतकुलवरिष्ठे प्रतिष्ठासमाने ।
सद्यः साल्वोऽयमुद्यत्प्रतिघकपिलितोद्वृत्तनेत्रान्तराल-
भ्राम्यत्ताराकरालः स्वयमनुपदमेत्याभ्यभाणीच्च वाणीम् ॥११८॥

---

**घोर** इत्यादि । धन्व चापं, धन्यते अर्प्यते इति धन्व । "कनिन्-प्रत्ययान्तत्वान्नकारान्तत्व"मिति **सुबोधिनी** । प्रच्छातः छिन्नः उरश्छदः कवचः । निर्भिन्नाः नितरां भिन्नाः । निर्भिण्णस्तु चिन्त्यः । विद्रुताः गताः ॥ ११५ ॥

**अनेने**त्यादि । विग्रहे युद्धे, देहे च ॥ ११६ ॥

**उर्वी**त्यादि । त्रिस्रोता गङ्गा । तत्सम्बन्धि त्रैस्रोतसं, 'तस्येदम्' (पा० सू० ४-३-१२०) इत्यण् ॥ ११७ ॥

**इत्थ**मित्यादि । सार्थं सङ्घम् । अत्र जन्तुसमूहवाचकेन सार्थशब्देन भूपतीनां निस्सारत्वं द्योत्यते । प्रतिष्ठासमाने गन्तुमिच्छति । अभ्यभाणीद् अवोचत् ॥ ११८ ॥

रे रे गाङ्गेय! राज्ञां गणमिह तृणवत् कल्पयन्नेव दर्पा-
दन्यायेनैव कन्यात्रितयमपहरन् भोक्ष्यसे किन्तु मन्ये ।
स्वन्ता नैषा तवाशा रिपुमदजलधिप्लोषणापूर्वरामः
कन्यार्थी पार्थिवेन्द्रः स्वयमिह यदसावभ्ययात् साल्वराजः ॥११९॥

कन्यालौल्येन साल्वं सकलबहुमतं गर्हयन्नेव मोहा-
दन्यायं चेष्टसे चेज्जरठ! शठमते! धृष्ट! तिष्ठ क्षणार्धम् ।
बाणा वेगोद्भणा मे निशिततरफला नाकलोके भवन्तं
नव्याङ्गनातिभान्तं सह ननु रमयिष्यन्ति दिव्याङ्गनाभिः॥१२०॥

परुषमिति वदन्तं रोषताम्रेक्षणं तं
त्वरितमनुसरन्तं वीक्ष्य साल्वं श्वसन्तम् ।
सरभसमथ भीष्मः स्वं रथं सन्निवर्त्य
स्थिरमतिरवतस्थे प्रेक्षकाश्चान्यभूपाः ॥ १२१ ॥

दुर्मर्षामर्षविस्फूर्जथुविवशमतिः सोऽथ विष्फार्य चापं
साल्वोऽभ्येत्याशु भीष्मं शरवरमसुनिर्मोचनं निर्मुमोच ।
मुक्तोऽसौ सत्त्वसीमां विविदिषुरिव तस्यान्यबाणाक्षतस्य
प्राविक्षत् क्षिप्रमन्तः शरजशर इव क्रौञ्चनाम्नोऽचलस्य ॥१२२॥

---

रे इत्यादि । भोक्ष्यसे भोक्ष्ये । मन्यसे मन्ये । 'प्रहासे च–' (पा०सू० १-४-१०६) पुरुषव्यत्ययः। स्वन्ता नैषेत्यनेन प्रहासः सूच्यते । अपूर्वः नवः। साल्वराज इति अस्मदर्थगतं कर्तृत्वमन्यत्रारोप्यते । स चारोपः वीर्योत्कर्षं द्योतयति । 'कर्तृव्यत्यासो गुण' इति महिमोक्तेः ॥ ११९ ॥

कन्येत्यादि । लौल्यं श्रद्धा । नव्यं नूतनम् ॥ १२० ॥

परुषमित्यादि । स्थिरा स्थैर्ययुक्ता । "स्थैर्यं सर्वैरभेद्यत्वम्" इति भावप्रकाशः। अवतस्थे 'समव–' (पा० सू० १-३-२२) इत्यात्मनेपदम् ॥ १२१ ॥

दुर्मर्षेत्यादि । अमर्षस्य विस्फूर्जथुः वृद्ध्यतिशयः। विष्फार्य "विष्फारो धनुषां स्वान" इत्यमरः। असून् निर्मोचयतीति असुनिर्मोचनम् । सत्त्वस्य सीमाम्

गाङ्गं शोणितशोणाङ्गं वीक्ष्य तं भिन्नवक्षसम् ।
तत्क्षणं प्रेक्षकाः साल्वं प्रशशंसुः प्रहर्षिताः ॥ १२३ ॥

एवमवनीभृतां गणैरहिताभिनन्दनैकधुरीणैररीणमत्सरैरवरीणोऽयममरतरङ्गिणीनन्दनः तत्क्षणदोधुक्ष्यमाणरभसभरसमाक्रान्ततया विधूमो धूमकेतन इव जाज्वल्यमानः संवर्तसमयसंक्षुब्धभीषणतरार्णोधिवदधिकतरमाघूर्णमानो रक्तकणरक्ततरेणोद्भ्रान्ततारेण रूक्षतरेणेक्षणेन दिधक्षुरिव वीक्षमाणः स्फारतरसारं शरासनं मुहुर्मुहुर्विष्फारयन् श्रवणपुटपट्टूपटघनाघनघटारटितकटुतरेण विहितरिपुजनहाखेण सिंहारवेण हरिदन्तराणि विदारयन् नृसिंहो दनुजराजमिव राजसिंहमेनमभिपत्य 'रे मूढ! वीरजनप्रौढमानिन्! उर्वीशापशद! भृशतरं मा गर्वीः। त्वमधुना पवनाशन इति वैनतेयपक्षपवनाय स्पृहयसि। तत् क्षणादेव वृद्धस्य मम जिह्मगसन्निभैरजिह्मगैः शकलीकृतसकलावयवो मांसगृध्नुभिर्गृध्रकाकसङ्घैः सङ्कटायां समरभुवि सकलनृपसमक्षं शयिष्यसे' इति वदन् अविदितसन्धानमोक्षैर्मयूरपक्षैः निरन्तरनिर्गतैर्मार्गणगणैः अन्तरिक्षा-

---

अवधिम् । "सत्त्वं जवबलप्राणकायबुद्धिषु वर्तते" इति भावप्रकाशः । विविदिषुः ज्ञातुमिच्छुः । प्राविक्षत् प्रविष्टवान् । शरजः शरजन्मा ॥ १२२ ॥

गाङ्गमित्यादि । भीष्मं, 'शिवादिभ्योऽण्' (पा० सू० ४-१-११२) ॥ १२३ ॥

एवमित्यादि । अरीणः अक्षीणः । अवरीणः धिक्कृतः । "अवरीणो धिक्कृतश्चापि" इत्यमरः । दोधुक्ष्यमाणः अत्यर्थं वर्धमानः । धूमकेतनः अग्निः । संक्षुब्धः संचलित इति यावत् ।

"मन्थो मथनदण्डः स्यात् सक्तवो वा द्रवीकृताः ।
तद्वाची क्षुब्धशब्दोऽयं तयोश्च चलितत्वतः ॥
चलितेष्वपि सर्वेषु प्रयोगोऽस्योपचारतः ।"

इति सर्वस्वे । स्फारतरः भूरितरः । पट्टूपटं छेदकम् । पवनायेति,

न्तरालमन्धकारितमातन्वानः प्रतिप्रयुक्तपत्त्रिचयचरीकृत्यमाननिज-कलम्बवरकदम्बं साल्वं प्रति समुत्थितेनामर्षवेगेन युगपत् प्रयुक्तैश्चतुर्भि-रपि रोपैश्चतुरोऽपि तुरङ्गानतिमूर्च्छितरयान् मूर्च्छयामास ॥

ततः सूतसमाश्वासिताश्वसंयोजितेन सः ।
रथेनातिरथो योद्धुं प्रत्यगात् स्वर्धुनीसुतम् ॥ १२४ ॥

अतित्वरमथो रथोद्धतगतिः प्रसृत्वररुषा कषायितमतिः ।
उपेत्य स नदीसुतं शरवरैरुदित्वररयैरवाकिरदरम् ॥ १२५ ॥

आग्नेयादीन्यथास्त्राणि प्राहैषीदेष रोषवान् ।
भीष्मः प्रत्यकरोदाशु प्रत्यस्त्रैर्वारुणादिभिः ॥ १२६ ॥

मिथो जिगीषतोरेवं सङ्ख्ये सङ्गतयोस्तयोः ।
कृतप्रतिकृतैर्भूपा विस्मयन्ते स्म विस्मयाः ॥ १२७ ॥

---

"स्पृहेरीप्सितः" (पा० सू० १-४-३६) इति संप्रदानसंज्ञा । चरीकृत्यमानाः पुनः पुनः खण्ड्यमानाः । कलम्बाः शराः । मूर्च्छितः वर्धितः । मूर्च्छयामास मूढचेतनान् अकरोत् । मूर्च्छा मोहसमुच्छ्राययोः ॥

तत इत्यादि । अतिरथः .... । स्वर्धुनीसुतं भीष्मम् ॥ १२४ ॥

अतित्वरमित्यादि । अतिशयिता त्वरा यस्मिन्निति क्रियाविशेषणम् । 'प्रादिभ्यः–' (वा०) इति बहुव्रीहिः । रथोद्धतगतिः रथेन उद्धता गतिर्यस्य सः । वृत्तनामाङ्कितोऽयं श्लोकः । "रसैर्जसजसा रथोद्धतगतिः" ॥ १२५ ॥

आग्नेयेत्यादि । प्राहैषीत् प्रहितवान् । 'हि गतौ' । प्रत्यकरोत् प्रतिकृतवान् ॥ १२६ ॥

मिथ इत्यादि । विस्मयन्ते स्म विस्मिताः । विस्मयाः विगतस्मयाः, स्मयो गर्वः ॥ १२७ ॥

साल्वोऽथ भल्लं विजयैककल्यं जिघांसयास्य प्रजिघाय मूढः ।
भीष्मोऽपि लक्षीकृतकण्ठदेशं लक्षीचकाराशु तमाशुगौघैः ॥ १२८ ॥

भूयोऽसौ भूरितेजाश्चतुर इह हयान् सारथिं चास्य नीत्वा
पञ्चैतान् पञ्चतां द्रागिषुभिरतिशितैः पञ्चभिः पिञ्छपत्रैः ।
घोरं नाराचमास्थत् प्रतिहृदयममुष्यामुना क्षिप्त एष
क्षिप्रं शाम्याद्य जन्यादिति हितमुपदेक्ष्यन्निवाविक्षदन्तः ॥१२९॥

आभग्नवक्षसमथ क्षतजोक्षिताङ्ग-
मात्रिम्नचेतसममुं विगताभिमानम् ।
दृष्ट्वा कराद् गलितचापमसावहासी-
ल्लोके रिपोरिह वधः किमतः परोऽस्ति ॥ १३० ॥

यदिहाकलितप्राणनाशो वीतमदोऽप्यभूत् ।
रणोद्योगे रणोद्वेगेऽप्येष साल्वस्तदद्भुतम् ॥ १३१ ॥

अथायमानम्रमुखस्त्रपाभराद् व्यथापरीतोऽपससार सङ्गरात् ।
परे धरेशा अपि तत्पराजयात् परेतकल्पा निलयानयासिषुः ॥१३२॥

---

साल्व इत्यादि । प्रजिघाय प्राहिणोत् । भल्लं, स्नुहीदलफलो भल्लः । 'भल भल्ल परिभाषणहिंसादानेषु' । लक्षीचकार तिलशश्चकर्तेत्यर्थः ॥ १२८ ॥

भूय इत्यादि । भूरितेजाः, "अवमानासहत्वं यत् तत् तेजः परिकीर्तितम्" इति भावप्रकाशः । आस्थत् क्षिप्तवान् । 'असु क्षेपणे' । अङि 'अस्यतेस्थुक्' (पा० सू० ७-४-१७) इति थुगागमः । शाम्य शान्तो भव । उपदेक्ष्यन्निव उपदेशं कर्तुमिव । अविक्षत् प्रविवेश । 'शल इगुपधात्–' (पा० सू० ३-१-४५) इति च्लेः क्सः ॥ १२९ ॥

आभग्नेत्यादि । अहासीत त्यक्तवान् । 'ओ हाक् त्यागे' ॥ १३० ॥

यदित्यादि । अकलितः, आकलितश्च । प्राणानां नाशः, प्राणने आशा च । वीतः प्राप्तः 'वी गतिप्रजनकान्त्यसनखादनेषु' । विगतश्च । विपूर्वादिणः क्तः ॥ १३१ ॥

अथेत्यादि । अपससार अपसृतवान् । परेतकल्पाः प्रायेण मृततुल्याः ॥ १३२ ॥

इत्थं समिद्धमदभारसमुद्धतं तं
निर्जित्य निर्जरवरप्रतिमप्रभावः ।
वीरश्रियं समनुभूय बतोर्ध्वरेता
वीरः पुरीं प्रति ययौ वनिताभिरामिः ॥ १३३ ॥

तदनु वाहिनीसूनुरहितनिवहमहोदधिकबलनकलाकलशजायमानो जवादाक्षिकीस्ता राजपुत्रीरास्थया स्नुषा इवाभिनन्दन् निजविजयनिशमनमोदमानपौरजनराजमानराजमार्गं गगनतलपतापतपताकावलिवितानविततविहायसं विविधविभववृन्दविजितवृन्दारकनिगमं निगमवृन्दारकमुपगम्य सादरं मातरं मन्देतरानन्दमभिवन्दमानस्तत्सदेशे सन्निवेशयामास ॥

ततोऽयमुपयामाय विनेयस्य कनीयसः ।
समारब्ध समग्रेषु ग्रहेषु शुभशंसिषु ॥ १३४ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
नवमः स्तबकः ॥

---

इत्थमित्यादि । वीरश्रियं समनुभूय प्राप्य । बतेति विस्मये । ऊर्ध्वरेताः समनुभूय सङ्गम्येत्यपि स्फुरति । बतेति खेदे ॥ १३३ ॥

तदन्वित्यादि । कलशजोऽगस्त्यः । आक्षिकीः अक्षेण जिताः । 'तेन दीव्यति–' (पा०सू० ४-४-२) इति ठक् । पतापता चलन्ती । वृन्दारकनिगमाः त्रिदशालयाः । निगमवृन्दारकं पुरश्रेष्ठम् ॥

तत इत्यादि । उपयामाय विवाहाय । 'यमः समुपनिविषु च' (पा०सू० ३-३-६३) इति घञ् । विनेयस्य विनीतस्य । समारब्ध आरब्धवान् ॥ १३४ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये नवमः स्तबकः ।

अम्बा तदा तासु निजाभिलाषभङ्गाकुला साल्वगतान्तरङ्गा ।
गङ्गातनूजं विदुषां पुरोगं तुङ्गानुभावं सदसीदमूचे ॥ १ ॥

वृतो मया साल्वपतिः पुरैव वृतापि तेनाहमुदूढरागम् ।
कृताशयो मां वितरीतुमस्मै पितापि तच्चिन्तय धर्म्यमेव ॥ २ ॥

एवं तया निगदिते नतदैवतेन
देवव्रतेन निखिलागमवेदयेन ।
विज्ञैर्द्विजैः सह विचार्य सहानुजेन
प्राज्ञेन यातु भवतीति च सानुजज्ञे ॥ ३ ॥

साथ साल्वपतेरेव प्रतस्थे नगरीं प्रति ।
अम्बिकाम्बालिके भीष्मो भ्राता चात्रोदवीवहत् ॥ ४ ॥

अनन्तरमम्बा प्रसन्नवदनबिम्बा साल्वनृपसमीपमुपगम्य "सौम्य! रम्याकृते! यद् भवता खलु प्रणयपरिवृतेन पुरैव वृताहं तत् त्वदेकसङ्गतान्तरङ्गतया गङ्गातनुजमनुजेन सह विहायाश्रितां मामाश्रवामयि! भजे"त्यमुमभाणीत् ॥

नायमन्यगृहीतां त्वां जनः परिजिघृक्षति ।
इति तेन निराकारि निराधारापि सा ततः ॥ ५ ॥

---

अम्बेत्यादि । तासु तिसृषु मध्ये, अम्बा ॥ १ ॥

वृत इत्यादि । धर्म्यं धर्मादनपेतम् ॥ २ ॥

एवमित्यादि । निखिलागमानां वेदयो ज्ञाता । विज्ञैः अभिज्ञैः ॥ ३ ॥

सेत्यादि । उदवीवहद् उद्वाहयामास ॥ ४ ॥

अनन्तरमित्यादि । आश्रवाम्, "वचने स्थित आश्रवः" इत्यमरः ॥

नायमित्यादि । परिजिघृक्षति परिग्रहीतुमिच्छति । निराकारि निराकृता ॥ ५ ॥

एवमेतेन निराकृता निरतिशयशोकेयमह्नाय जाह्नवेयोपशल्यमेत्रोपगम्य "ननु देवव्रत! पूर्वमुर्वीपतिशतसंवृते स्वयंवरे यथामनोरथं वरं वरीतुं परीतकुतुका हठादेव भवता कठोरहृदयेनैषा यदानायिषि, तद्भवानेव परं मम वरः" इति भाषमाणा, तेनापि "कथं भवतीमवधूतवधूसङ्गोऽहमङ्गीकरोमि" इति कृतनिरासा दुराशाविवशमानसा पुनरपि साल्वसदेशमाविश्य साभ्यर्थनमित्थमभ्यभाषत ॥

वक्ष्यामि किञ्चित् कृपणाशयाहमक्षामकारुण्यनिधे! भवन्तम् ।
त्याज्या वधूवागिति मे न वाणी किं गोमयं हेयमवस्करत्वात् ॥ ६ ॥

अन्याहृतेति नृप! नाहमसौ निरस्या
धन्याकृते! स वपुरेव बताहरन्मे ।
चित्तं तु हन्त! भवतैव पुरा गृहीतं
स त्वं गृहाण कृपणां करुणापयोधे! ॥ ७ ॥

इत्थमभ्यर्थितेनापि पृथ्वीपालेन तेन सा ।
अपास्ता जाह्नवीसूनुमहास्ताथ विहस्तधीः ॥ ८ ॥

प्रत्यापगेयं प्रतिसाल्वराजं गतागतैर्जामि वितन्यमानैः ।
अवाप सा राघवलक्ष्मणोद्यत्प्रेमाकुला शूर्पणखेव खेदम् ॥ ९ ॥

---

एवमित्यादि । आनायिषि आनीतास्मि ॥

वक्ष्यामीत्यादि । गोमयं, 'गोश्च पुरीषे' (पा० सू० ४-३-१४५) इति मयट् । अवस्करो मलम् । 'वर्चस्केऽवस्करः' (पा० सू० ६-१-१४८) इति निपातः ॥ ६ ॥

अन्येत्यादि । निरस्या त्याज्या ॥ ७ ॥

इत्थमित्यादि । अहास्त गतवती ॥ ८ ॥

प्रतीत्यादि । प्रत्यापगेयं भीष्ममभिमुखीकृत्य । प्रतिसाल्वराजं साल्वराजमभिमुखीकृत्य । 'लक्षणेनाभिप्रती—' (पा० सू० २-१-१४) इत्यभावः । जामीत्यव्ययं पुनःपुनरित्यर्थे । 'जामि भूयश्चावृत्तौ' (प्र० स०) ॥ ९ ॥

इत्थमियमतितरामार्ता प्रसभापहर्ता भीष्म एव मम भर्ता भवितुमर्हः इति सत्वरं गत्वामुम् "अखिलधर्मसूक्ष्मवेदिन्नयि! पौरव! पुरा ययातिना देवयानीनिमित्ता शर्मिष्ठार्थ इव दाशकन्यामन्तरेण कृता संविदियमस्या मम कृते भवता किमु न हातव्या । संश्रवपालनात् संश्रितजनानुपालनमेव हि जगति वरीयः । तदेनामनन्यनाथां स्वयं-गृहीतां गृहाण माम्" इत्यनवरतमतिदीनमुदीरयन्ती बाष्पकणानुत्सृ-जन्ती षट् समास्तमेव निकषा निषसाद ॥

तदनु "केनाप्युपायेनावगेयोऽयमपगेयो मम न चलनीय इति मनसिकृत्य सत्वरोदित्वरक्रोधघोटीमुखदहननिपीयमानगहनतराधि-सिन्धुर्झटिति तद्गतां दुराशामपहायोत्तराशामुपेत्य हिमवदुपत्यकायां परिबाहुदातीरं पादाङ्गुष्ठेन तिष्ठन्ती निखिलकरणानि नियमयन्ती शन्तनुसुतान्तकरणमेव सन्ततमन्तरनुचिन्तयन्ती सिद्धसेनमद्धा प्रसाद-यितुं द्वादश समाः सुरासुरत्राससम्पादकं तपस्तप्यते स्म ॥

ततश्च;

वर्धितपङ्कजकाण्डप्रसरं तं वाहिनेयहेमन्तम् ।
परमहिमावृतमन्तं गमयन् ववृधे तपःप्रभावोऽत्र ॥ १० ॥

---

इत्थमित्यादि । हातव्या त्याज्या । संश्रवः प्रतिज्ञा । स्वयंगृहीतां, 'स्वयं क्तेन' (पा० सू० २-१-२५) इति समासः । तमेव निकषा तस्य समीप एव ॥

तदन्वित्यादि । अवगेयो निन्द्यः । घोटीमुखदहनः बडवामुखाग्निः । परिबाहुदातीरं बाहुदातीरे । सिद्धसेनं गुहम् । "वैजयन्तः सिद्धसेनः सेनानीः शिखिवाहनः । षाण्मातुरः कार्तिकेयो ब्रह्मगर्भः षडाननः ॥" इति वैजयन्ती ॥

ततश्च;

वर्धितेत्यादि । वर्धितः छिन्नः, एधितश्च । पङ्कजकाण्डस्य कामस्य, तामरसषण्डस्य च प्रसरः । वाहिनेय एव हेमन्तः तम् । महिमावृतं, हिमावृतं च । तपसः तपश्शक्तेः, शिशिरप्रथममासस्य च । "तपा इति मासे सकारान्तः ।

प्रसन्नस्तपसा तस्याः प्रपन्नार्तिहरस्ततः ।
विश्वगर्भः स भगवानाविर्भूयैवमभ्यधात् ॥ ११ ॥

बाले! मालेयमार्या वरकमलकृता तावकातङ्कपङ्क-
ध्वंसे हंसायमाना त्वरितमयि! समादीयतामादरेण ।
धत्ते यस्तावदेनां नियतमनिमिषो मानुषो वा निमेषात्
सोऽयं देवव्रतस्य प्रमथनविधये कल्पते मत्प्रभावात् ॥ १२ ॥

एवं तामुक्तवानेनां मालामपि च दत्तवान् ।
जवादेव ततो देवस्तिरोभूदग्निभूरयम् ॥ १३ ॥

तदनु महितानुभावशालां मालामिमामादरादुपादाय किञ्चिदिव सञ्चिन्त्य "अद्य पुनरापगेयापराधं मालासमागतिमपि मया निवेदितेषु मेदिनीदयितेषु यः पुनरिमामादाय मनस्वी तं हनिष्यति तेन सह रंस्ये" इत्युरसिकृत्य प्रमदाकुला प्रमदाकुलावतंसायमाना सा मानिनी "भीष्मदावशुष्मघनाघनायमानां मालामिमां मामपि परिगृहाणे"ति प्रतिपार्थिवमर्थयमाना भीष्मभयात् सद्य एव सकलैरपि ततस्ततः प्रत्याख्यायमाना हायनान् पञ्च हरितां चक्रे इहह! चङ्क्रमाञ्चक्रे ॥

---

ऋतुवाची तप इति अकारान्त एव" इति टीकासर्वस्वे । अत्र अस्यामम्बायां, लोके च ॥ १० ॥

प्रसन्न इत्यादि । विश्वगर्भः षण्मुखः ॥ ११ ॥

बाले इत्यादि । आर्या श्रेष्ठा । हंसायमाना हंसः सूर्य इवाचरन्ती ॥ १२ ॥

एवमित्यादि । तिरोभूत् तिरोहितः ॥ १३ ॥

तदन्वित्यादि । महितानुभावेन शालां श्लाघ्यमानाम् । प्रमदेन हर्षेण । दावशुष्मा दवाग्निः । घनाघनो वर्षुकाब्दः । प्रतिपार्थिवं पार्थिवं पार्थिवम् । अर्थयमाना याचमाना । 'अर्थ याच्ञायाम्' आत्मनेपदी । चङ्क्रमाञ्चक्रे गता-

तदनु वन्ध्यगमनेयमिन्धानशोका सन्तायमानकीर्तिसन्तानधवलितदिगन्तरालं परमधार्मिकं पराक्रमधनं पाञ्चालपतिमुपगम्योदञ्चितभुजाद्वन्द्वमाक्रन्दन्ती निखिलजनमाकुलयन्ती करुणतरां गिरमुदैरयत् ॥

नरवरकुलमौले! हन्त! देवव्रतेन
प्रसभमुभयलोकभ्रंशितामीदृशीं माम्।
निखिलनृपनिरस्तां तद्भयादेव वीर!
द्रुततरमयि! पारं प्रापयापत्पयोधेः ॥ १४ ॥

महिततरतपस्यानन्दितस्कन्ददत्तं
रिपुभयहरमेतद्दाम चोद्दामवीर्यम्।
दधतमभिभवेन्नो तत्प्रभावाद् यमोऽपि
स्फिरभुजबल! राजन्! किं पुनर्भीष्म एषः ॥ १५ ॥

तरुणाब्जकृतां मालां चरणाब्जगतां च माम्।
शरणागताधिविध्वंसिन्! करुणाब्धे! गृहाण तत् ॥ १६ ॥

आकर्ण्य भणितां वाणीमम्बयालम्बहीनया।
यज्ञसेनो नयज्ञोऽसौ प्रत्यवादीदिदं ततः ॥ १७ ॥

---

गतानि चक्रे। 'नित्यं कौटिल्ये—' (पा० सू० ३-१-२३) इति कौटिल्ये यङ्। गतागतकरणमपि कौटिल्यमेव ॥

तदन्वित्यादि। इन्धानः वर्धमानः। उदैरयत् उदीरितवती ॥

नरवरेत्यादि। आपदेव दुस्तरत्वात् पयोधिः ॥ १४ ॥

महितेत्यादि। स्फिरः प्रवृद्धः। 'अजिर—' (उ० सू० ५६) इत्यौणादिको निपातः ॥ १५ ॥

तरुणेत्यादि। तरुणाब्जेन अम्लानपङ्कजेनेत्यर्थः ॥ १६ ॥

आकर्ण्येत्यादि। यज्ञसेनो द्रुपदः ॥ १७ ॥

अयि काशिराजतनये! चतुरुदधिपरित्रौकितधरित्रीतलमध्यवर्तिषु समस्तेष्वपि मूर्धाभिषिक्तेषु बद्धवैरेष्वयमहमेक एव तवाभिमतं पूरयितुं प्रभुः। स्वायत्तान्तं भार्गवान्तेवसन्तं शन्तनुसुतं तं भीष्ममभिभवितुं करकलितकुलिशराजिष्णुर्जिष्णुरपि न धृष्णोति। को वा कुण्ठेतरविक्रमस्य कण्ठीरवस्य दंष्ट्रामाक्रष्टुमीष्टे, तद्भवती यथेच्छमेव विच्छायतु ॥

इत्युक्त्वा गाढशोकार्ता मुक्तकण्ठं रुरोद सा।
भग्नाशा द्वारदेशे तां स्रजमासज्य चाद्रवत्। १८।

तत्क्षणमेव यज्ञसेनेन भीष्मभयविक्षोभितहृदयेन बलवद्विरोधविधायिनी मालेयं त्वया ननु नीयतामिति कृतानुनयं वावद्यमानेनानुगम्यमाना काशिपतिकन्यकेयम् "अयि पाञ्चालराज! अञ्चितानुभाव! भवतैव दामेदं सामोदमादेयमिति ममाभिलाषः। तव पुनः महीयस्तरमदीयदौर्भाग्यप्रभावात् तत्परिग्रहणं प्रतीहा न चेत् प्रतीहार एव तद् ध्रियताम्। किमर्थं व्यर्थमेव मया ध्रियेत। दैवचोदनाद् येन दामेदमादीयेत तेन वाहिनीतनयः समयाहितात्मा समरभुवि पुरा निपात्यते" इति निगद्य खर्वेतरनिर्वेदरभसपरिभोभूयमानमानसा जवादवाजीत् ॥

---

अयीत्यादि। परित्रौकितं प्राप्तम्। स्वायत्तान्तं स्वाधीनमरणम्। जिष्णुरिन्द्रः। धृष्णोति प्रगल्भो भवति। अभिभवितुमिति 'शकधृष–' (पा० सू० ३-४-६५) इति तुमुन्। कण्ठीरवः सिंहः। ईष्टे ईशो भवति। विच्छायतु गच्छतु ॥

इतीत्यादि। कण्ठः स्वरः। "कण्ठः शब्दे स्वरेऽन्तिके" इति निघण्टुः ॥ १८ ॥

तत्क्षणमित्यादि। वावद्यमानेन पुनःपुनः ब्रुवता। ईहा इच्छा। प्रतीहारे द्वारे। ध्रियताम् अवतिष्ठताम्। 'धृञ् अवस्थाने'। वाहिनीतनयः भीष्मः। समये प्रतिज्ञायाम् आहितात्मा। पुरा निपात्यते निहनिष्यते।

तदनु जह्नुसुतासुतासुहरणनिपुणतरां नीतिमेव निरन्तरमन्तरनु-चिन्तयन्ती दन्दशूकीव मुहुर्निःश्वसन्ती, "नेह तपसा किमप्यलभ्य-मि"ति मनसा व्यवसाययन्ती सा शैखावत्यमुख्यवैखानसोरसोपशोभित-माश्रमपदमाविश्य तत्र विदितवृत्तान्तैरेभिर्ऋषिवृषभैः दयावशंवदाशयै-राश्वेवाश्वास्यमानमानसेह निवसन्ती यदृच्छया समृच्छितेन मुनिजन-मुखावगततदवस्थेन जनितकदवस्थेन होत्रवाहनाभिधेनाहीयमानयशसा महीयमानतपसा महीपतिना महितानुनयमेवमभिहिताभूत् ॥

---

'यावत्पुरा—' (पा० सू० ३-३-४) इति भविष्यति लट्। मया इदं दाम आदीयेत येन यत्, जन्मान्तर इत्यर्थः; तेन तत्, वाहिनीतनयः निपात्यते पुरा निहनिष्यते इत्यपि स्फुरति। खर्वेतरः अनल्पः। परिबोभूयमानम् अत्यर्थं परिभूयमानम्। अवाजीद् गता, 'वज व्रज गतौ' ॥

तदन्वित्यादि। जह्नुसुतासुतस्य भीष्मस्य असुहरणे निग्रहे। दन्तशूकी व्याली। निःश्वसन्ती, "अत्र गणकार्यस्यानित्यत्वज्ञापनाच्छपो लुङ्न भवति। अनित्यत्वं च क्षमूषो घटादिपाठाद् 'घटादयः षित' (ग० सू०) इत्येव षित्त्वे सिद्धे पुनः षित्करणाद् ज्ञायते। एवं च "न विश्वसेदविश्वस्त' इत्यादि सिद्धिः" इति माधवः। व्यवसाययन्ती निश्चिन्वाना 'षो अन्तकर्मणि' 'श्याद्व्यधास्नु—' (पा० सू० ३-१-१४१) इति णे युक्, व्यवसायः। तस्मात् 'तत्करोति—' (ग० सू०) इति णिच्। शैखावत्यो नाम कश्चिदृषिः। वैखानसोरसैः मुख्यै-र्ऋषिभिः। 'अग्राख्यायामुरसः' (पा० सू० ५-४-९३) इति टच् समासान्तः। अग्राख्यायां मुख्यायाम्। समृच्छितेन सङ्गतेन। जनिता उत्पन्ना, 'जनी प्रादु-र्भावे'। प्रादुर्भाव उत्पत्तिरभिव्यक्तिर्वा। "अन्तर्भावितण्यर्थत्वात् सकर्मकत्वं च" इति माधवः। कुत्सिता अवस्था कदवस्था, पीडेति यावत्। 'कोः कद्—' (पा० सू० ६-३-१०१) इति कुशब्दस्य कदादेशः। हीयमानं त्यजमानम्। 'ओहाक् त्यागे'। महीयमानं वर्धमानम्। 'कण्ड्वादिभ्यो यक्' (पा० सू० ३-१-१५)। "महीङ् वृद्धौ चे"ति हरः ॥

मामा विषीद तनये! विवशाशयैवं
मातामहं जनमिमं तु विदाङ्कुरु त्वम् ।
गाङ्गेयभङ्गविधये कथयामि नीति-
मङ्गेयमङ्गलतिका न तपोनुरूपा ॥ १९ ॥

आस्ते महेन्द्रमुखदेवनुतो मुनीन्द्रै-
र्व्यासे महेन्द्रशिखरे स हि जामदग्न्यः ।
लक्ष्मीपतेरविकलैत्र कला किलायं
षष्ठी महिष्ठमहिभारनिरासनिष्ठा ॥ २० ॥

तं तावदेहि शरणं कृपणैकबन्धुं
सन्तापसिन्धुपतितामयमुद्धरेत् त्वाम् ।
तत्तादृशानि चरितानि न कानि कानि
भक्ताभिरक्षणपराणि कृतानि तेन ॥ २१ ॥

यो वा किल निखिलशमलनिकरापहकलशमकराकरपरिशोभमाने न्व्यतरदिव्यलतिकालिङ्गितविविधविबुधविटपिवितत विटपविहितातपापिधाने पर्यन्तरङ्गदमलतरङ्गपोतसङ्घसङ्गतपतङ्गकुलमङ्गलारावरमणीये भुवनमहनीये चिरतराचरितसुचरितपरीपाकभाजनतापसजनोपसेविते विपुलभुजान्तरालकेलिपर्यङ्कसंक्रीडमानकमलालयामुग्धकुचकुम्भदिग्ध-

---

मामेत्यादि । विदाङ्कुरु जानीहि । 'विदाङ्कुर्वन्तु—' (पा० सू० ३-१-४१) इति निपातः । नीतिम् उपायमित्यर्थः ॥ १९ ॥

आस्त इत्यादि । जामदग्न्य इति 'गर्गादिभ्यो यञ्' (पा० सू० ४-१-१०५) । ऋष्यणि जामदग्न्य इत्येव वक्तव्ये यञन्तत्वेनोक्तिश्चिरजीवित्वेन पौत्रादिकार्यकृत्त्वादारोपाद् द्रौणायनवत् । षष्ठी षट्सङ्ख्यापूरणी । महिष्ठः अतिशयेन महान् ॥ २० ॥

तमित्यादि । तं तावत् तमेव । कानि कानि सर्वाणि, बहूनीत्यर्थः ॥२१॥

यो वेत्यादि । कलशमकराकरः क्षीराब्धिः । अपिधानं तिरोधानम् । पर्यन्तरङ्गन् पर्यन्ते रङ्गन् गच्छन् । दिग्धो लिप्तः । सुखस्य निरतिशयत्वं

कुङ्कुमपङ्कसंक्रान्ततुलसीमाल्यतल्लजोद्घाटपरिमलोद्गारपावनतरमृदुलवल-मानपवमानपोतसुरभीकृते अतिलसितविमलसितसिकतैकमये निरतिशयसुखैकमये श्वेतनाम्नि महत्तमे द्वीपोत्तमे कुत्रचिदधिकरम्ये प्रदेशे सम्यगास्तीर्णे नितान्तविस्तीर्णे म्रदिमैकभवने सितिमैकसदने शेषशयने शयानः, फणगणपरिभासमानमणिघृणिनिकरव्यतिकराम्रेडितेन निरर्गलमुद्गत्वरेण अनास्वादितचरगगनापगारसास्वादनोत्सवसमुत्सुकवडवाग्निशङ्कामङ्कूरयता सर्वतः समामुक्तनूत्नरत्नप्रभापटलेन विभाकरायुतमपि निराकुर्वता मकुटोत्तमेन परिलसितोत्तमांगः, उद्धृत्य वृषध्वजायार्पितेनाप्यल्पेतरपरिचयपारवश्यात् पुनःप्रत्यापन्नेन तृतीयनयनेनेव दीप्रतरेणोर्ध्वपुण्ड्रप्रकाण्डेन परिशोभमानरहितोपमानविशालफालदेशः, मङ्गलदेवतापाङ्गभृङ्गपरम्पराचुम्ब्यमाननानाम्बुजविभ्रमरकान्तिविसरसरोवरविहारिविसारानुकारिहारिनयनयुगलविगलदनुकम्पामृतरससंस्नापितकृत्स्नभक्तलोकः, तिलकुसुमसोदरनासोदराध्वपथिकनिःश्वासोच्छ्वासपरिकल्पितनिखिलभुवनभवाप्ययः, प्रतिमानिभादतिलोभनीयमभलतरं कपोलतलमुदितरुचि परिचुम्बन्त्या करकलितरत्नवलयया रचितकण्ठाश्लेषया कान्तयेव दिव्यकान्तिभरया कर्णभूषया देदीव्यमानः, विद्रुमच्छेदकदनप्रदरदनच्छदरुचिच्छुरणशिखरायमाणरदन-

---

दुःखमिश्रत्वादिदोषाभावात् । म्रदिमा मृदुत्वम् । सितिमा सितत्वम् । शेषोऽनन्तः । आम्रेडितेन द्विगुणितेन । समामुक्तानां प्रत्युप्तानाम् । पुनःप्रत्यापन्नेन पुनरावृत्तेन । विसारौ मत्स्यौ । भवाप्ययौ सर्गप्रलयौ । प्रतिमानिभात् प्रतिबिम्बव्याजेन । निभो व्याजः । रुचिः शोभा, अभिलाषश्च । करैः रश्मिभिः करे च कलितानि रत्नवलयानि रत्नसमूहाः, रत्नमयानि वलयानि च । आश्लेष आभीक्ष्ण्येन श्लेषश्च । देदीव्यमानः विहरमाण इत्यपि । कान्तया प्रियया च । अत्र परिचुम्बन्त्येत्यादीनां विशेषणानां श्लिष्टत्वात् कर्णभूषायाः कान्तासादृश्यं प्रतीयते । कदनप्रदः पीडाप्रदः । शिखरायमाणा शिखरवदाचरन्ती ।

पङ्क्तिकान्तिप्रसरापास्तसमस्तमुमुक्षुलोकहृदयापवरकान्धतमसः, अधिकतरकम्रपरिहसितकुन्दमृदुहसितकन्दलप्रसृतरुचिवृन्दसान्द्रचन्द्रिकारसापसारितातिमहितसंसारतापः, मनोभवदरोरससहोदरमनोहरगलोल्लसदस्तोकशोभकौस्तुभगभस्तिविहस्तीकृतगभस्तिमाली, महिततरमणिमरीचिवीचीवलयितविविधवलयावलीकेन वरमणिमयाङ्गुलीयकेन विहसितयुगेन अनुकृतमहितभुजगेन भुजयुगेन देदीयमाननिखिलभुवनाभयः, वनदामराजिवरहारराजिविराजितेन महितमणिमयोपलतापदेनाश्रितजनसकलतापदेन अकृत्रिमश्रीवत्सलतापदेन श्रीवत्सलतापदेन श्रीवत्सभागेन बाभास्यमानः, तनुतरेणाप्यसंबाधावस्थितत्रिभुवनेन अभिजातयापि नाभिजातया रोमराजिलतया विराजितेनान्तरुपविष्टविष्टपत्रयविभागरेखायितत्रिवलीविभासितेन विलसितोदरबन्धेनोदरेण बन्धुरतरकान्तिकन्दलः, महितहरितमणिशिलानिहितमहनीयतरतपनीयपत्रकमनीयेन निबिडतरनितम्बबिम्बपरिवीतेन पीताम्बरेण पिशङ्गीकृताम्बरतलः,

---

"पक्वडाडिमबीजाभं माणिक्यं शिखरं विदुः ।" हृदयमेवापवरकः अन्तर्गृहम् । अन्धयतीत्यन्धम् अन्धं च तत्तमश्चेत्यन्धतमसम् । 'अवसमन्धेभ्यः—' (पा० सू० ५-४-७९) इत्यच् समासान्तः । दरोरसं शङ्खश्रेष्ठम् । 'अग्राख्यायामुरसः' (पा० सू० ५-४-९३) इति टच् । उरश्शब्दस्य क्लीबत्वात् क्लीबत्वम् । गभस्तिमाली सूर्यः । वलयावलीकेन अङ्गुलीयकेनेत्यत्र च 'नद्यृतश्च' (पा० सू० ५-४-१५३) इति कप् । 'न कपि' (पा० सू० ७-४-१४) इति ह्रस्वाभावः । देदीयमानम् अत्यर्थं दीप्यमानम् । वनदामराजिः वनदाम्ना राजितुं शीलमस्याः । हारराजिः हारसमूहः । तापं ददाति द्यतीति च तापदः । श्रियाः वत्सलतायाः वात्सल्यस्य पदं स्थानम् । प्रशस्तः श्रीवत्सः श्रीवत्सलता सैव पदं लक्ष्म यस्य । "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः । वत्सभागः वक्षोभागः बाभास्यमानः अत्यर्थं भासमानः । असंबाधं असंकटं यथा तथा अवस्थितं त्रिभुवनं यत्र । अभिजातया कुलीनयापि नाभिजातयेति विरोधः । अत्र नसमासः । सुमनोहरया नाभेर्जातया चेति तत्परिहारः । तपनीयपत्रं

मरतकमसारमुखात्रासमणिसहस्रमहःप्रसरघस्रदीपीकृतसहस्रकरेण भुवनसारतरेण सारसनविसरेण विद्युदावलिविद्योतमानं वारिवाहवरमनुहरमाणः, जलधिकन्यकानन्तार्जितसुचरितपरीपाकसर्वस्वभूताभ्यां परस्परोपमिताभ्यामुरुतराभ्यामूरुभ्यामुपहतमहितजम्भरिपुमणिस्तम्भदम्भः, आश्रितजनाभिप्रेतवितितीर्षयार्पितसमग्रार्थमणिसमुद्गायमानेन हारिणा हस्तिमस्तकोरुगर्वहारिणोरुपर्वणाखर्वकान्तिविसरः, क्रमपृथुलाभ्यामतिमृदुलाभ्यां प्रचलाकिवरगलरुचिप्रतारणप्रसृमरपदाभ्यां प्रसृताभ्यां प्रसृताभ्यधिकशोभः, मदकलमरालमहिलाकलकलमनोहरमणिनूपुरारवसिद्धमन्त्रदूरोत्सारितदुरितोत्करः,धरणिवलयधारणाधिकृतेनापि तत्सेव्यमानचरणयुगलसेवनौत्सुक्यभारप्रणुन्नेन द्विधाभूय सान्द्रतरकान्तिवापीतले निपत्य निभृतमवस्थितेनादिकमठेनेवातिकमनेन प्रपदद्वयेन विद्योतमानः, पेशलतरपलाशदळद्राघीयसीभिरलघीयसीभिः पञ्चतावहाभिरपि पञ्चतापहाभिः विमलतरनखरमणिरजनिकररुचिरतरकरनिकरदिवानिशोपशोभितदिशामुखाभिः अधिकभङ्गिसङ्गिनीभिरङ्गुलीभिः अभङ्गुराभेन प्रभाचयललितप्रवालकन्दलमहःप्रवाहप्रसभापहारमहाप्रभावेन सुजातपारिजातपल्लवोदरपाटलिमसर्वस्वपाटच्चरपाटवभरोद्भटेन उत्ताल-

---

पत्रीकृतसुवर्णम् । मसारः नीलरत्नम् । अत्रासं दोषरहितम् । "त्रासः स्यान्मणिदोषेऽपि" इति निघण्टुः । घस्रदीपः दिनदीपः । सारसनानि काञ्च्यः । वारिवाहवरम् अनुहरमाणः । अत्र तुल्यार्थयोगेऽपि कर्मविवक्षया द्वितीया । जलधिकन्यकया अनन्तं यथा तथा आर्जितस्य, यद्वा जलधिकन्यकया अनन्तया भुवा च, "भूर्भूमिरचलानन्ता" इत्यमरः, अनन्तेन वा, परस्परोपमिताभ्यामिति अत्रानन्वयो व्यज्यते । वितितीर्षया वितरणेच्छया अर्पितः समग्रोऽर्थो यत्र । अखर्वः अनल्पः । प्रचलाकिवरो मयूरश्रेष्ठः । प्रसृताभ्यां जङ्घाभ्याम् । तत्सेव्यमानं तया धरण्या सेव्यमानम् । द्राघीयसीभिः दीर्घतराभिः । पञ्चतावहाभिः पञ्चताया आवहाभिः । पचाद्यच् । पञ्चसंख्यैरित्यर्थः । पञ्चधा विस्तृतं तापं संसारतापः । यद्वा पञ्च तापान् अविद्यास्मितादीन् ।

भक्तिसुलभमुक्तियुवतिलब्धिसततसक्तनिखिलभक्तनिवहचित्तकमलोत्फु-ल्लनाभ्युदिततरुणारुणायमानेन ध्वजशकुलिशरासशतपत्रातपत्ररथाङ्ग-शङ्खाङ्कुशकुलिशमुखविशदरेखादरावरणकरापाटलपरागपटलोच्चाटनचूर्ण-वरोत्सादितोद्दामतराविद्यापिशाचिकेन ऊरीकृतद्वैतेनापि दूरीकृतद्वैतेन वर्णहारिणाप्यवर्णहारिणा विबोधमयविभाकरोदयप्रभातसमयेन श्रुतिवर-वर्णिनीमहितकर्णपूरायितेन परमहंसोपासितेन पदाब्जयुगलेन ध्यायज्जन-मनोमलानि नेनिज्यमानः, मञ्जुतररुचिपुञ्जपञ्जरायमाणकलायमञ्जरीमद-विभञ्जनकरकान्तिकासारसारोदरदूरदृश्यमानविश्वैकरम्यमूर्तिः निन्दित-हिमकरमङ्गलनिलयनसुन्दरतरमुखकन्दलदतिमृदुमञ्जुहसितचन्द्रिका-प्रसरसन्तर्पितसकललोकचकोरनिकरया, पयोधरेणेव सदाविलसदाभोग-हारिणा रोमावलितल्लजेन, कण्ठकाण्डेनेव कम्बुवरकम्रतरेण भुजयुगेन, वदनेनेव पुष्करभासुरेणोदरेण, रदनेनेव विशदांशुकाञ्चिना जघनेन, अधरेणेवाधिकरुचिकरभातिरुचिरेणोरुयुगलेन, घ्राणेनेव निरुपमकान्ति-निषङ्गसुभगेन जङ्घायुगेन, नयनेनेव कमनद्युतिकमठसारसमितेन प्रपद-युग्मेन, चिकुरभारेणेव वृजिनहारिणा घनरुचिधारिणा महितामोदसुमनो-

---

चित्तकमलस्य उत्फुल्लना विकासनं तस्यै। शकुलिः मत्स्यः। दरावरणम् ईषदा-वरणम्। परागपटलमेवोच्चाटनचूर्णनरः। द्वैता द्विता, द्वैतप्रपञ्चश्च। वर्णेन हारिणा। अवर्णो दोषः। नेनिज्यमानः अत्यर्थं शोधयन्। पयोधरेणेव–अविः पर्वतः। "अवयश्शैलमेषार्का" इत्यमरः। विलसन् सर्पः। कण्ठकाण्डेनेव– "कम्बुर्ना वलये शङ्खे" इत्यमरः। रदनेनेव–पुष्करं कमलमाकाशं च। रदनेनेव विशदांशुभिः सितांशुभिः काञ्चितुं शोभितुं शीलमस्य। विशदं निर्मलम् अंशुकं प्राप्तुं शीलमस्य विशदांशुः काञ्ची यस्येति वा। अधरेणेव–अधिकरुचि-करयाभया। "मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः। निषङ्गो नितरां सङ्गः, इषुधिश्च। नयनेनेव–कमनद्युति च कमठं च सारसं च कमनद्युतिकमठसारसं तेन मितेन। कं जलं मठो निवासस्थानं यस्य। सारसं कमलं, कमठसारेण कमठ-श्रेष्ठेन च। चिकुरभारेणेव–वृजिनः कुटिलः। वृजिनं दुष्कृतं च। घनस्य मेघस्य।

निकरोपाश्रितेन, पदद्वयेनापि विरचितविविधश्लोकतयाधिकश्लाघनीयया अनन्यतुलनीयकमनीयनिखिलावयवया निखिलजनभूतिजनन्या सकलभूतजनन्या प्रसारितासितापसव्यभुजपरिघपरिकलितवलयावलिद्युतिगणद्विगुणीकृतरुचिभरया मनोरमया रमया श्यामलतरकोमलाङ्गलतया, धम्मिल्लमतल्लिकयेव सविशेषकालिकोपलसितया, चिल्लीलतयेव मञ्जुलास्यया, लोचनयुगल्येव कुवलयविलोभनाभाधरया, रदनावल्येव उपमानायुतशिरोधिरूढया, कुचकलशिकयेव पुरुजघनरुचिहारिण्या, ऊरुयुगलिकयेव निरुपमप्रसृताभाविलोभितभुवनया, प्रपदद्वय्येव अतिकामनीयकपदाभोगभाजा, श्रीसहितयापि दरिद्रोपमानताङ्गलतया चरणपरिचरणधुरन्धरया वसुन्धरया च सानुरागार्पितप्रतिनवापाङ्गकुवलयमालालङ्कृताङ्गः, उद्यदादरम् उत्तंसितकरकमलकोरकेण स्ववर्णविजितसुवर्णेन सुपर्णेन प्रसृतदीप्तिभरैर्मूर्तिधरैर्निजैरायुधवरैः "जय जय कृपणबन्धो! कृपासिन्धो! मुरहर! वासुदेव! देवाधिदेव! निराकृतनरकपारायण! नारायण!" इति विरणमानया स्वरसमधुरस्वरमहत्या महत्या संशोभि-

---

"पद्ये यशसि च श्लोकः" इत्यमरः। उभाभ्यां पदाभ्यां श्लोकरचनमित्यपि स्फुरति। अन्यतुलनीया न भवतीत्यनन्यतुलनीया तथा। असितः अपसव्यभुजः भगवद्दक्षिणभुजः। रमया भगवत्या श्रिया। "धम्मिल्लास्संयताः कचाः" इत्यमरः। सविशेषा सातिशया कालिका मेघजालं तद्वदुपलसितया। विशेषकेण अलिकेन। विशेषकं तिलकम्। मञ्जु सुन्दरं लास्यं यस्याः, मञ्जुलं आस्यं च। कुवलयं नीलोत्पलं, भूमण्डलं च। उपमानायुतशिरोधिरूढया उपमानसहस्रशिरसि स्थितया, अधःकृतोपमानसहस्रयेत्यर्थः। उपमानरहितशिरोधिना प्रसिद्धया। पुरुजा भूयिष्ठा। घना निबिडा च। निरुपमं यथा तथा प्रसृता आभा प्रसृता जङ्घा च। अतिकामनीयकस्य अधिकमनोहरत्वस्य पदं स्थानम् आभोगं भजतीति तथा। अतिकामनीयकं पदयोराभोगं च। दरिद्राणामुपमानभावः, उपमानद्रव्यरहितता च। निराकृतनरकपारायण! निरस्तसकलनरक!। विरणमानया शब्दनशीलया। चानश्। स्वरसमधुरा स्वतो मधुरा। महती नारदस्य वीणा। "महती नारदस्य स्यात् तुम्बुरोस्तु कलावती।"

तांसभागेन महाभागेन भक्तजनचूडामणिना मुनिना नारदेन आजानजायमाननिरतिशयभक्तिभरेण पुरतः पर्याशयमपि पर्यायतः कलितलालसमात्मवपुरालोकमालोकम् आनन्दामृतपयोधिमामज्जमानया निखिलभुवनमामह्यमानया सनकसनन्दनादिमुनिवरपरिषदा च परिषेव्यमाणः, पुमर्थसन्दोहसन्दोहननिजकथासुधानिष्यन्दानन्दितनिखिलजीवलोकः, निगमान्तजालजेगीयमानमहितानुभावः, विषयवियुतविशदविबोधैकमूर्तिः, अवर्णनीयमहिमा निखिलजगदवनकलाजागरूकोऽपि स्वस्वरूपरसास्वादनरूपिणीं योगनिद्रां स्वैरमवलम्बते ॥

यो वा षष्ठान्तरान्तोल्लसदसमयसंवर्तसंवृद्धतोये
सप्तर्षीन् मत्स्यरूपी द्रमिळमपि धरण्यात्मिकायां तरण्याम् ।
आवेश्यावेद्य वेद्यं निखिलमपि चरन् कृष्टनौकोऽथ दुष्टं
वाजिग्रीवं च पिष्ट्वा युधि तदपहृतान् वेधसेऽदत्त वेदान् ॥ २२ ॥

यो वा दुग्धाम्बुराशिद्रुतमथनविधौ क्षुब्धभूते महीध्रे
निर्मग्ने शर्मदायी महितमिह वहन् नर्मणा कूर्मवेषम् ।
सिन्धोरन्तः प्रविष्टः सपदि पृथुलतामन्दिरं मन्दरं तं
स्थेष्ठेनाथ स्वपृष्ठेन च विपुलकृपानुन्नधीरुन्निनाय ॥ २३ ॥

---

आजानजायमानः स्वतो जायमानः । "सहजं निजमाजानं धर्मसर्गो निसर्गवत्" इति वैजयन्ती । पर्याशयम् आशये । आलोकमालोकम् आलोक्यालोक्य । मामज्जमानया अत्यर्थमग्नया । मामह्यमानया अत्यर्थं पूज्यमानया । पुमर्थाः पुरुषार्थाः । निगमान्तजाले उपनिषत्सु । विषयवियुतविशदविबोधैकमूर्तिः निर्विषयनिर्मलज्ञानमूर्तिः । स्वस्वरूपरसास्वादनरूपिणीम् आत्मानन्दानुभवस्वरूपाम् । योगनिद्रां, स्वात्मानुसन्धानाय मनसो बाह्यविषयेभ्य उपरमो योगः । स एव लोकदृष्ट्या निद्रा ॥

य इत्यादि । षष्ठान्तरान्ते षष्ठमन्वन्तरावसाने । उल्लसता असमयसंवर्तेन अवान्तरप्रलयेन । तरण्यां नावि । वाजिग्रीवं हयग्रीवम् ॥ २२ ॥

यो वा दुग्धेत्यादि । क्षुब्धो मन्थः । 'क्षुब्धस्वान्त–' (पा० सू० ७-२-१८) इति निपातः । पृथुलतायाः पृथुत्वस्य, पृथ्वीनां लतानां वा ।

यो वा भूमेरपाये स्वकलितमनसो वेधसो नासिकाया
भूतो भूदारपोतो द्रुतमतिमहिताङ्गोऽम्बुगर्भादिमां गाम् ।
दंष्ट्राग्रेणोद्धरन्नापतितमथ हिरण्याक्षमक्षामरोषं
पादाङ्गुष्ठेन भाण्डं नवमिव धरणित्राणकाङ्क्षी व्यभाङ्क्षीत् ॥ २४ ॥

यो वा स्तम्भं विनिघ्नत्यहितहितसुतोक्तिप्रभूतप्रभूत-
क्रोधे दैत्ये हिरण्योपपदकशिपुनाम्न्यूढघोराट्टहासम् ।
सद्योऽस्मान्नारसिंहं वपुरतिभयदं बिभ्रदुद्भूय निर्भि-
द्यैतद्वक्षो नखाग्रैः प्रसभमथ पपौ प्रस्रुतास्रप्रवाहम् ॥ २५ ॥

यो वा जातो ह्यदित्यां बलिमथ वटुभूयं प्रपद्य प्रपन्नो
यज्ञे त्रिज्ञेऽत्र पादत्रितयपरिमितां याचितां गां ददाने ।
सद्यो ब्रह्माण्डभाण्डप्रमितनिजतनुर्ब्रह्मकुण्डीजलार्द्र-
श्रीमत्पादक्रमेण त्रिभुवनमखिलं मायया मायते स्म ॥ २६ ॥

रामो जातो हि योंऽशैस्त्रिभिररुणकुले नाथनाद्राथिसूनोः
पित्रोक्तोऽन्वीय धन्वी मुनिमनुजयुतो वीतखेदो मनुभ्याम् ।
हत्वा पुत्रीं सुकेतोर्वटुगृहपठितास्त्रोऽध्वरं साधु रक्षन्
कृत्वा कल्यामहल्यां मृदितमृडधनुर्भूमिजां प्राप्य सीताम् ॥ २७॥

---

स्थेष्ठेन स्थिरतरेण । इष्ठनि 'प्रियस्थिर–' (पा० सू० ६-४-१५७) इति स्थिरशब्दस्य स्थादेशः । उन्निनाय उद्धृतवान् ॥ २३ ॥

**यो वा भूमेरित्यादि** । स्वकलितमनसः आत्मानं ध्यायतः । भूदारः क्रोडः । नवं भाण्डमिव अपक्वघटमिव । व्यभाङ्क्षीद् विभिन्नवान् ॥ २४ ॥

**यो वा स्तम्भमित्यादि** । अहितस्य विष्णोः । प्रभूतः उद्भूतः । प्रभूतः प्रचुरः । अस्मात् स्तम्भात् ॥ २५ ॥

**यो वा जात इत्यादि** । वटुभूयं वटुत्वम् । मायते स्म माति स्म । "मिमीते मायते माने माति तत्रैव शब्लुकि" ॥ २६ ॥

**राम इत्यादि** । नाथनाद् याचनात् । मनुभ्यां मन्त्राभ्याम् । वटुगृहं वामनाश्रमः ॥ २७ ॥

राजद्वारानुजो वैष्णवधनुरुपलभ्याप्तगेहोऽत्र सुख्यन्
मात्रा रुद्धाभिषेको गुहनिलयगतो मैथिलीलक्ष्मणाभ्याम् ।
धृत्वा चीरं जटां च द्युसरितमतिलङ्घ्यास्तवांश्चित्रकूटं
भारद्वाजोपदेशादथ भरतगिराज्ञाय तातं परेतम् ॥ २८ ॥

मानातीताधिरस्मै तिलजलमुपहृत्यानुजे पादुके स्वे
विन्यस्यात्रिं च नत्वा पथि मथितविराधो गतिं शारभङ्गीम् ।
दृष्ट्वागस्त्यं च नत्वाश्रुतविधुरवधो लब्धवान् दिव्यचापं
ब्रह्मास्त्रं वा जटायुं परिपदवि निशाम्यावसत् पञ्चवट्याम् ॥ २९ ॥

यत्ताया नैर्ऋतेन्द्रस्वसुरभिक्रवृतौ नासिकाच्छेदरुष्टान्
प्राप्तान् पिष्ट्वा खरादीन् स्वसुरथ वचसा रावणेनात्तदारः ।
तूर्णं सौवर्णमायामृगदलनविधौ दीनदीनोऽपि चिन्व-
न्नेनां दूनं जटायुं निजपदमुपनीयाथ हत्वा कबन्धम् ॥ ३० ॥

नम्रां पश्यन् पुलिन्दीं पवनसुतसहायोऽथ पम्पातटान्ते
सुग्रीवं मित्रयित्वा वपुरुपरि नयन् दुन्दुभेः सप्तसालीम् ।
भित्त्वा बाणेन हत्वा हरिवरमथ वर्षा मतङ्गाश्रमान्ते
नीत्वानीयार्कसूनुं सबलमनिलपुत्रेऽर्पयन्नङ्गुलीयम् ॥ ३१ ॥

---

राजदित्यादि । उपलभ्य, भार्गवादिति शेषः । परेतं मृतम् ॥ २८ ॥

मानेत्यादि । शरभङ्गस्येयं शारभङ्गी । आश्रुतविधुरवधः प्रतिज्ञातसर्वराक्षसवधः । परिपदवि पदव्याम् ॥ २९ ॥

यत्तेत्यादि । अभिक्रवृतौ भर्तृवरणे यत्तायाः ॥ ३० ॥

नम्रामित्यादि । पुलिन्दीं श्रमणाम् । मित्रयित्वा मित्रं कृत्वा । वर्षाः प्रावृषः ॥ ३१ ॥

मस्तन्यस्ताङ्गुलीयं सपदि विचलतः प्राप्य सम्पातिवाचा
लङ्कां मुद्रां समर्प्य क्षितिदुहितरि सन्देशवाचाथ लब्ध्वा ।
चूडारत्नं च दग्ध्वा पुरमभिपततोऽस्मात्तदादाय रत्नं
हृष्यन्नृक्षैः पयोधिं गत इह सरमावल्लभाश्रीयमाणः ॥ ३२ ॥

श्रीमत्कोदण्डसंयोजितशरदहनप्लुष्टपाशिप्रदिष्टे
वर्त्मन्याधाप्य सेतुं कपिभटसहितः प्राप्य लङ्कां विमृद्गन् ।
विक्राम्यन् सानुजन्मा युधि गरुडगरुद्वातधूताहिपाशो
भ्रात्रा निर्यातशक्तिप्रहृतिभवशुचा घातयन्मेघनादम् ॥ ३३ ॥

राशिं नैशाचरं पोपुथदथ विलयं लम्भयन् कुम्भकर्णं
बाणेनादाय शक्रेरितरथकवचात्युद्धरन् रावणस्य ।
कायेनास्त्रेण कायाद् गलततिमबलामाददानोऽग्निशुद्धां
भ्रात्रा यात्वृक्षभर्त्रा वरमुदितहरिः सप्रियः पुष्पकस्थः ॥ ३४ ॥

मर्यादातीतमोदं नगरमुपगतः क्ष्मामिमां चाभिषिक्तो
भुञ्जानस्त्यक्तसीतो लवणमपि च कृत्वाथ शत्रुघ्नकृत्तम् ।
शूद्रं हत्वाप्तपुत्रः क्षितिहृतदयितो लक्ष्मणं कालनुन्नो
धुन्वन्नामज्य सर्वैरधिसरयु निजं प्राप धामोरुधामा ॥ ३५ ॥

---

मस्तेत्यादि । मस्तो मस्तकः । मुद्राम् अङ्गुलीयकम् । सरमावल्लभः विभीषणः ॥ ३२ ॥

श्रीमदित्यादि । पाशी वरुणः । आधाप्य कारयित्वा ॥ ३३ ॥

राशिमित्यादि । पोपुथद् निगृह्णन् । कः ब्रह्मा देवतास्य कायम् । 'कस्येत्' (पा० सू० ४-२-२५) इतीकारोऽन्तादेशः अण् च । यातूनां रक्षसां ऋक्षाणां वानराणां च भर्त्रा । वरेण देवैर्दत्तेनेत्यर्थः ॥ ३४ ॥

मर्यादेत्यादि । धुन्वन् त्यजन् । अधिसरयु सरय्वाम् । अत्र 'रामो जात' इत्यादीनां नवानां पद्यानामाद्यक्षरैः श्रीरामदेवताकस्य मनोर्दैवतायाश्च उद्धारः कृतः इत्यवसेयम् ॥ ३५ ॥

कृष्णो जातो हि यो वा स्वयमिव वसुदेवात्मजो बालभावं
गृह्णन्नेतेन नीत्या व्रजमथ शिशुमादाय ताते प्रयाते ।
प्रेम्णा पोपुष्यमाणो व्रजपदयितया पूतनां स्तन्यदात्रीं
निघ्नन् मथ्नन् पदाभ्यां शकटदनुजमापात्य वात्यासुरं च ॥ ३६ ॥

गर्गोद्गीतोरुनामा प्रथमजनिजुषा रौहिणेयेन साकं
व्यारिङ्खन्नङ्गणान्ते कलतरविरणत्किङ्किणीकङ्कणौघम् ।
नृत्य त्यन्तरम्यं युवतिजनपुरो मञ्जु गायन्नमूभि-
र्दत्तं कुत्रापि मुष्टं हृतमपि रसयन् दुग्धहैयङ्गवीनम् ॥ ३७ ॥

केलीपालीभिरेवं निखिलजनमनो मोहयन् मृत्तिकादी-
त्याक्षिप्तो व्यात्तवक्त्रो निखिलमपि जनन्यै जगद् दर्शयित्वा ।
भित्त्वाथो दध्यमत्रं कलित इह तयोलूखले मध्ययायी
मथ्नन्नत्रार्जुनौ द्वौ सपशुपमुपनन्दस्य वाचा गतोऽस्मात् ॥ ३८ ॥

वृन्दारण्ये वयस्यैः सममिह समवन् वात्सकं वत्सरूपं
हत्वा दैत्यं बकं वा शयुवपुषमघं वा स्तुतो वेधसा च ।
रामेणाघातयन् धेनुकमथ दमयन् कालियं पीतवह्निः
कृत्वा दैत्यं प्रलम्बं बलहतमनलात् पालयन् गोपवृन्दम् ॥ ३९ ॥

---

कृष्ण इत्यादि । व्रजपदयितया यशोदया ॥ ३६ ॥

गर्गेत्यादि । जनिः उद्भवः । व्यारिङ्खन् गच्छन् ॥ ३७ ॥

केलीत्यादि । मृत्तिकादी मृद्भक्षः । 'मृदस्तिकन्' (पा० सू० ५-४-३९) इति स्वार्थे तिकन् । सपशुपमिति क्रियाविशेषणम् । पशुपैस्सहित-मित्यर्थः ॥ ३८ ॥

वृन्देत्यादि । वात्सकं वत्ससमूहः । 'गोत्रोक्ष—' (पा० सू० ४-२-३९) इति वुञ् । शयुः अजगरः ॥ ३९ ॥

वासोहृद्वल्लवीनां प्रमदमुपनयन् विप्रपत्नीर्विमृद्न-
न्निन्द्रोत्सेकं धृताद्रिः सुरभिसहितशक्राभिषिक्तोऽथ तातम् ।
त्राता सिन्धोः स्वकेभ्यो विवृतनिजपदो रासलीला वितन्वन्
गोपीवृन्देन वंशीरवचलधृतिना नन्दमामुच्य नागात् ॥ ४० ॥

स्त्रीहर्तुः शङ्खचूडादपहृतमणिवर्योऽर्दितारिष्टकेशि-
व्योमोऽक्रूरेण गच्छन्निजवपुरधिकालिन्दि तस्मै विवृण्वन् ।
कंसाधिष्ठानमाप्तो हतरजकवरो वायकं मालिकं वा
मोदं प्रापय्य कुब्जां मदनविवशितात्मानमृज्वीं वितन्वन् ॥ ४१ ॥

चापं भित्त्वाथ हत्वा कुपितकुवलयापीडमुल्लङ्घ्य मल्लान्
कंसं चापात्य मञ्चात् स्वपदमुपनयन्नग्रजेनार्दयित्वा ।
तद्भ्रातॄनष्ट तुष्टः पितरमुपनयन् सादरं मातरं वा
राज्ये कृत्वोग्रसेनं मुदितयदुकुलो मित्रयन्नुद्धवं च ॥ ४२ ॥

विद्या रामेण सान्दीपनिसविधभुवः प्राप्य तत्पुत्रदाता
गोपीरार्ताः स्ववाचा मुदमलमुपनीयागतेनोद्धवेन ।
सैरन्ध्रीमेत्य दत्त्वा सुतमनघमुपश्लोकमक्रूरमोदं
कृत्वा रामोद्धवाभ्यां सह तमथ विसृज्यात्तकौन्तेयवृत्तः ॥ ४३ ॥

भूयो जित्वागतं मागधमथ मुचुकुन्देन तं म्लेच्छराजं
सन्दाह्य द्वारकायां ससुखमुषितवान् योगनीतैः स्ववृन्दैः ।
रेवत्याख्यां बलेन स्त्रियमुपयमयन् रुक्मिणीमिन्दिरांशां
क्षित्यंशां सत्यभामामपि च परिणयन् जाम्बवन्नन्दनां च ॥ ४४ ॥

---

वास इत्यादि । विवृतनिजपदः प्रकाशितात्मलोकः ॥ ४० ॥

स्त्रीत्यादि । अधिकालिन्दि कालिन्द्याम् । अधिष्ठानं पुरम् ॥ ४१ ॥

चापमित्यादि । उल्लङ्घ्य निगृह्य । मित्रयन् मित्रं कुर्वन् ॥ ४२ ॥

विद्या इत्यादि । उपश्लोकम् उपश्लोकनामानम् । आत्तं ज्ञातम् ॥ ४३ ॥

भूय इत्यादि । पुनः पुनः । म्लेच्छराजं यवनम् । उपयमयन् उपयमं कारयन् ॥ ४४ ॥

कालिन्दीं मित्रविन्दां दमितवृषवरो हन्त सत्यां तु भद्रां
लक्षच्छिल्लक्षणाख्यां स्त्रियमपि विवहन्नष्टभार्याभितुष्टः ।
सुत्रामोक्त्याथ पिष्ट्वा मुरमपि नरकं त्र्यष्टसाहस्रयोषा
हस्तेकृत्यादितेः कुण्डलमपि च दिशन् पारिजातापहर्ता ॥ ४५ ॥

रुक्मिण्याद्यासु तन्वन् दश दश तनयान् सीरिणा रुक्मिघाती
जित्वा भूतेशबाणान् नृगनृपगतिकृत् पौण्ड्रकघ्नोऽथ साम्बम् ।
रामेणानाय्य भीमेन च मगधनृपं घातयन् राजसूये
स्वस्मिन्नायोज्य चैद्यं ससिति निहतसाल्वोऽर्दयन् दन्तवक्त्रम् ॥४६॥

क्षोणीभारापनेता कुरुभिरलमवन्नौत्तरेयं कुचेले
लक्ष्मीं कुर्वन् जनन्यै षडपि च तनयान् दर्शयन् मैथिलं च ।
धिन्वन् देव श्रुताद्यं द्विजमृतसुतदाता वृकारिर्विबोधं
वातव्याधेर्विधाय स्वकुलहृदुपगन्तापदन्तं पदं तत् ॥ ४७ ॥

यो वा कालेयकालव्यपगमसमये शम्भलग्रामजाते-
र्जातो जातु द्विजातेः सुमहति यशसो विष्णुपूर्वस्य गेहे ।
कल्किः कल्कापनेता करतलविलसद्धर्मपालोऽधिरूढः
प्रौढाश्वं धर्मपालः परिषदमसतां मङ्क्षु वा भङ्क्ष्यतीह ॥ ४८ ॥

---

कालिन्दीमित्यादि । हस्तेकृत्य उपयम्य ॥ ४५ ॥

रुक्मिणीत्यादि । स्वस्मिन्नायोज्य आत्मनि संयोज्य ॥ ४६ ॥

क्षोणीत्यादि । औत्तरेयं परीक्षितम् । वातव्याधेः उद्धवस्य । उपगन्तेति तृन् । आपदन्तं सर्वापदां अन्तम् । पदं स्थानम् ॥ ४७ ॥

यो वा कालेयेत्यादि । कलिसम्बन्धि वतिप्रत्ययात् "पूर्वं सर्वत्र अग्निकलिभ्यां ढग्वक्तव्यः" (वा०) इति तस्येदमर्थे ढक् । शम्भलग्रामसंज्ञाद् ग्रामाज्जातिर्जन्म यस्येति व्यधिकरणबहुव्रीहिः । विष्णुपूर्वस्य यशसः विष्णुयशोनामधेयस्य । द्विजातेः ब्राह्मणस्य । कल्कं पापम् । "कल्कोऽस्त्री शमलैनसोः" इत्यमरः । धर्मपालोऽसिः । "श्रीगर्भो विजयः शास्ता धर्मपालः कृपाणवत्"

सोऽयं साक्षात् पुराणः पुरुष इह भृगोरन्वयं धन्यधन्यं
तन्वानस्तातहेतोः पतिमथ वितुपन् हेलया हेहयानाम् ।
कृत्वा त्रिस्सप्तकृत्वो वधमवनिभृतामद्य शान्तस्तपस्या-
सन्दीप्तात्मा महेन्द्राभिधमचलमलं चर्करीत्यर्करीतिः ॥ ४९ ॥

तमेव तत्तादृशवीर्यमार्ये! प्रजाधिशान्त्यै शरणं शरण्यम् ।
विना दिनेशादिह कस्य वा स्यात् तमःपटीपाटनपाटवं तत् ॥ ५० ॥

एवमेतस्मिन् वदत्येव निखिलजगदभयदोहनैकदोहलोरीकृतमुनिवराकृतिः विहितसकलजनतमोनिराकृतिः स खलु भृगुकुलालङ्कृतिर्भगवान् जामदग्न्यो दुरवबोधविविधनिगमशिरोविसरविचारविशदीभवत्तदाकूतरसास्वादजनिताह्लादविकचवदनवारिजैः अपारभक्तिभारप्रवणतरगात्रैरधिरसं ख्यातैरतिसंख्यातैः प्राज्यगुणैर्याज्यगणैः प्रियसखेनाकृतव्रणेन च परिभासमानपरिसरभागः संवर्तसमयसमानोदितसहस्रकिरण-

---

इति वैजयन्ती । धर्मपालः धर्मं पालयितुम्, 'अण् कर्मणि च' (पा० सू० ३-३-१२) इति तुमुन्विषयोऽण् । परिषदं समूहम् । मङ्क्षु शीघ्रम् । भङ्क्ष्यति भग्नां करिष्यति ॥ ४८ ॥

सोऽयमित्यादि । वितुपन् निघ्नन् । 'तुप तुम्प हिंसायाम्' । हेहयानां पतिं कार्तवीयम् । त्रिस्सप्तकृत्वः अधिकविंशान् वारान् । 'सङ्ख्यायाः—' (पा० सू० ५-४-१७) इति कृत्वसुच् । तपस्यया तपश्चर्यया, तपसि तपस्यमासे च आदीप्तः । अलंचर्करीति अत्यर्थमलङ्करोति । यङ्लुक् । अर्करीतिः अर्कसदृश इत्यर्थः ॥ ४९ ॥

तमित्यादि । शरण्यं शरणे रक्षणे साधुम् । 'तत्र साधुः' (पा० सू० ४-४-९८) इति यक् । दिनेशाद् विना, 'पृथग्विना—' (पा० सू० २-३-३२) इति पञ्चमी । पटीपटः पाटवं पटुत्वं, 'इगन्तात्—' (पा० सू० ५-१-१३१) इत्यण् । तत् सर्वलोकप्रसिद्धिम् ॥ ५० ॥

एवमित्यादि । अभयदोहन एकस्मिन् दोहलेन इच्छया । निगमशिरोविसराः उपनिषदः । अधिरसं रसायां भूम्याम् । याज्यगणैः शिष्यगणैः ।

सहस्रखद्योतीकरणनिपुणप्रभापटलदुर्निरीक्षः अन्तरसंभूततयोद्भिन्नमस्त-कमुज्जिहानेन तीव्रतरतपोवीतिहोत्रकीलवलयेनेव कपिलतरजटाकलापेन कपिशीकृतगगनान्तरालः व्यज्यमानवीरशान्तविलोचनान्तवान्तकरुणा-लहरीशिशिरीकृतसकलभक्तलोकः विविधशस्त्रजाताभिघातव्रणकिणकर्कश-तरपृथुलवक्षस्स्थलविलसदैणेयाजिनविराजमानः अतिसमुन्नतयोरधिक-बन्धुरयोः स्कन्धदेशयोः संभाव्यमानेन प्रसृतदीधितिकाण्डेन स्वधिति-प्रकाण्डेन महिततरभुजगभोगमदनिरासकरेण शरासवरेण च कण्ठोक्त-कुण्ठेतरभुजाविक्रमः विश्वविश्वम्भराधीश्वरविजयपरम्पराजैत्रप्रशस्ति-लेखायितगुणाघातां प्रकोष्ठाधिष्ठितरौद्राक्षवलयाक्षताभः स्वरुसारस-विसारमुखाकाररेखाञ्चितकरयुगाञ्चलोदञ्चितेन वैरिवरवेरवारनिस्सृता-स्रमध्वासवरसास्वादसमिद्धमदेन करालकरवालेन निशातशरजातेन च चाकम्प्यमानखलजनान्तरङ्गः कपिलतरचीरवरविराजमानविपुलतर-जघनाभोगः प्रोन्नतप्रपदतल्लजप्रसभापनीयमानादिकमठकामनीयकाभ्यां प्रोल्लसन्नखमयूखनिचयनिचोलिततया विमलजलोदरविलसदमलकनक-कमलहेलामावहद्भ्यां कमलासनवलशासनप्रमुखबर्हिर्मुखवरवरिवस्यिता-भ्यामुद्धतं विन्यस्यमानाभ्यां पदपङ्कजाभ्यामवनितलमाकम्पयन्निव होतृवाहनदर्शनाशामाबिभ्रदत्राविर्बभूव ॥

---

दुर्निरीक्षः दुर्दर्शनः । असंभूततया अतिरिक्तप्रमाणत्वेन । उद्भिन्नमस्तकं मस्तकमुद्भिद्य । उज्जिहानेन उद्गच्छता । कीलवलयः ज्वालावलयः । ऐणेयं एणीसम्बन्धि । 'एण्या ढञ्' (पा० सू० ४-३-१५९) । स्वधितिप्रकाण्डेन प्रशस्तेन परशुना । कण्ठोक्तः स्पष्टोक्तः । जैत्रप्रशस्तिलेखा जयश्लाघावर्णरेखा । रौद्राक्षः रुद्राक्षसम्बन्धी । स्वरुर्वज्रम् । सारसं कमलम् । विसारो मत्स्यः । एतत्प्रमुखाकाराः एतत्सदृशाः । वेरवारः शरीरसमूहः । मधुमिश्रम् आसवः मध्वासवः । चाकम्प्यमानम् अत्यर्थं कम्प्यमानम् । वरिवस्यिताभ्यां उपासिताभ्यां, 'नमो वारिवः–' (पा० सू० ३-१-१९) इति क्यच् । 'वरिवः सपरिचर्यायाम्' उत्तरत्र नमस्यत इत्यत्रापि 'नमः सम्पूजायाम्' ॥

अनन्तरमुत्तालसंभ्रमोत्तरलचित्तैः शैखावत्यमुखैरखिलैस्तपस्विभिर्नमस्यितोऽसौ सादरमापादितपादाभिवादनेनानेन होतृवाहनेन सह सदसि समुपविष्टो यथेष्टं व्यतीतास्तास्ताः कथाः कथयन्नश्चितरसं कश्चिदनेहसमतिवाहयामास ॥

उचिते समये सोऽयमथ तां व्यथितां सुताम् ।
दर्शयन् दर्शनीयाङ्गीं सृञ्जयः सञ्जगौ मुनिम् ॥ ५१ ॥

नप्त्री भृगूद्वह! ममेयममेयवीर्य!
पुत्री च काशिविषयेशितुरार्तबन्धो! ।
अल्पेतराधिमयवारिधिदूरमग्ना
त्वत्पादमूलमधुना शरणं प्रपन्ना ॥ ५२ ॥

अथ भृगुपतिरेनामेवमूचे वचोऽस्मा-
न्न खलु हि तव यस्मात् सृञ्जयादसि भिन्नः ।
तदयि! गतविशङ्कं कथ्यतां त्वद्व्यथाया
निखिलमपि निदानं वीत एवैष शोकः ॥ ५३ ॥

अथ पृथुलादरमङ्घ्रियुगे विभुमभिवन्द्य मुनीन्द्रममुम् ।
लघु निजगाद च सा सकलं निजमिह वृत्तमिदं सुमुखी ॥ ५४ ॥

---

अनन्तरमित्यादि । उत्ताल उन्नतः ॥

उचित इत्यादि । दर्शनीयाङ्गीं, सर्वलक्षणपूर्णत्वात् शोकानर्हामिति प्रकाश्यते । सृञ्जयः होतृवाहनः ॥ ५१ ॥

नप्त्रीत्यादि । सुतापत्यम् ॥ ५२ ॥

अथेत्यादि । वीत एव विगत एव । विशेषेण इत इत्यपि स्फुरति ॥ ५३ ॥

अथेत्यादि । लघु शीघ्रम् । वृत्तनामाङ्कितोऽयं श्लोकः । "नजजलगैर्गदिता सुमुखी" ॥ ५४ ॥

साल्वैकबद्धहृदयां नृपमध्यतो मां
गाङ्गोऽहरद्व्यसृजदप्यगमं च साल्वम् ।
अन्याहृतेति बत! मां व्यसृजत् स चाद्य
लोकच्युतामयि कृपालय! पालयेमाम् ॥ ५५ ॥

नादेय एष खलु मे व्यसने निदानं
संस्मृत्य भूमिपतयोऽलमहासिषुर्माम् ।
विश्वं विमृश्य कुरु युक्ततरं सदैव-
मेषा तु काशिपसुता बत! बंभ्रमीति ॥ ५६ ॥

तदनु निखिलराजन्यकारण्यहिरण्यरेताः स रैणुकेयोऽयममुमुदन्तमतिदुरन्तमवधार्य विधेयमपि विनिश्चित्य विपश्चितां पुरस्सरः सरस्वतीं सरसामेवमुदसारयत् ॥

अम्बे! किं वा विदध्यां सुतनु! किमशनैरानयेयापगेयं
साल्वं वा साध्वि! वाचा मम नियतमुभावप्यसून्नुज्झितारौ ।
भ्रंशो लोकद्वयात्ते कथमपि बत! नो जातु जायेत नूनं
जातः सोऽयं कदा वा मम कुहचन वा कुण्ठधारः कुठारः ॥ ५७ ॥

---

साल्वेत्यादि । लोकच्युताम् उभयलोकपरिभ्रष्टाम् ॥ ५५ ॥

नादेय इत्यादि । भीष्मः । अहासिषुः त्यक्तवन्तः । बंभ्रमीति अत्यर्थं भ्रमति ॥ ५६ ॥

तदन्वित्यादि । राजन्यकं क्षत्रियसमूहः । अरण्यहिरण्यरेताः दावाग्निः । विधेयं कार्यम् । उदसारयत् उत्सारितवान् ॥

अम्बे इत्यादि । अम्बार्थत्वाभावाद् ह्रस्वाभावः । विदध्यां कुर्याम् । उज्झितारौ त्यक्ष्यतः ॥ ५७ ॥

साध्यं यद्यत्र सिध्येत् कथमपि रहितं हिंसया तद्वरीयः
पित्तोच्छेदे सिता चेदिह भवति पटुः किं पटोलेन कार्यम् ।
वत्से! तत् साधयिष्ये तव हितमखिलोपायसारेण साम्ना
धन्ये काशीशकन्ये! विदितनिखिलवेद्ये! प्रपद्यस्व मोदम् ॥ ५८॥

ऊचे सा च समस्ततापसकुलोत्तंसाहितोद्ध्वंसन-
क्रीडोद्दण्डभुजाप्रकाण्ड! पदमूलोपाश्रिताया मम ।
आधातुं हितमीहसे यदि विभो! लोकद्वयोन्मर्दनं
सद्यो मर्दय वाहिनेयहतकं मे रोचते नापरम् ॥ ५९ ॥

समाहितविनाशे त्वं समाहितमना अपि ।
समाहितविधानेऽपि समाहितमना भव ॥ ६० ॥

एवमुद्भ्रान्तवचनकदम्बया परिम्लानवदनबिम्बयानयाम्बया तदभिमतप्रतिपादनैकप्रवणेनाकृतव्रणेनापि यथोपपत्ति निर्बध्यमानो मनागन्तर्मनाः सकललोकशोकलोपनैकलोलुपः स जामदग्न्यो "विविधतरानुरोधविधिनैव धैर्यसारभरितान्तरङ्गः तारङ्गिणेयोऽसावदसीयाभिमतविधाने जातानुमतिः न जायेतैव चेदमोघमिमं शरौघमस्य विपुलतरे वक्षसि विनियुयुक्षे, को वा विधिविलसितानि वारयेत् । जयापजयौ च पुनरेतदायत्तावेवे"ति विचारयन्नपि "प्रतीपदर्शिनीकुलप्रदीपायमाने!

---

साध्यमित्यादि । वरीयः अतिशयेन वरम् । सिता शर्करा ॥ ५८ ॥

ऊच इत्यादि । विशेषणाभ्यां तपसा पराक्रमेण च मदीप्सितसाधने प्रभुरिति द्योत्यते । वाहिनेयहतकं कुत्सितं वाहिनेयम् । मे रोचत इति 'रुच्यर्थानां–' (पा० सू० १-४-३३) इति संप्रदानसंज्ञा ॥ ५९ ॥

समेत्यादि । समाहितविनाशे सर्वरिपुविनाशे । समाहितं सम्यगाहितम् । समाहितविधाने प्रतिश्रुतकरणेऽपि ॥ ६० ॥

एवमित्यादि । उद्भ्रान्तेत्यनेन सर्वेषामुद्वेजकत्वम् । अन्तर्मनाः पीडितमानसः । विनियुयुक्षे विनियोक्तुमिच्छामि । एतदायत्तौ दैवाधीनौ । प्रतीपदर्शिनी स्त्री । विरुद्धदर्शिनीत्यपि स्फुरति । शोकस्य परमहानिर्जातैवेत्यवधार-

सर्वथा तवाभिमतभावनेऽहं प्रभवामि नो कालातिपातश्च भवेत् । तदस्य त्वदीयशोकस्याधुना परमहानिर्जातैवेत्यवधारय'' इति निगद्य निजैरनन्तैरन्तेवसद्भिरत्र वनान्ते वसद्भिः शैखावत्यमुखैः प्रवरतापसप्रकरैरकृतकप्रणयेनाकृतव्रणेन प्रमोदप्रति मनागपगतवदनवैवर्ण्यया काशिराजकन्यकया च राजभानपरिसरभागः सरभसं रणक्षमं कुरुक्षेत्रमुपेत्य महितरसापूरणसम्भाव्यमानसरस्वत्याः सरस्वत्यास्तीरधरणिं मेध्यतरामध्यवात्सीत् ॥

स हि तं भीष्ममानेतुमहितैरकृतव्रगम् ।
महितां हस्तिनपुरीमहिनोदकृतव्रणम् ॥ ६१ ॥

अनन्तरमकृतव्रणगिरा नर्मदाजलनिरोधकर्मनर्मकर्मठदोर्मण्डलीनिर्मितपौलस्त्यवीर्यनिर्मथनकृतवीर्यसुतविरामम् अक्षीणवीरलक्ष्मीलीलारामम् अनल्पसारात्मशरासनार्पणोपोद्बलितबलश्रीरामं श्रीपरशुराममात्मदेशिकममुं निजनिशामनायागतं निशम्य तत्क्षणोन्मिषदुन्मस्तकामोदविहस्तचित्तः स भरतसत्तमो नृपोत्तमैर्हस्तिनपुरवास्तव्यैः समस्तभूसुरस्तोमैर्हिताववोधनावहितैः पुरोहितैरपि सह सहसोपसृत्य तापससभामध्यमध्यासितानां प्रसृत्वरतेजःप्रसरधिक्कृततिग्मगुरुपादानां

---

येत्यस्मिन् वाक्ये नो इत्यस्य प्रभवामीत्यनेनान्वयेन परम् अत्यर्थम् अहानिः (इति) छेदे च भाव्यर्थः स्फुरति । अकृतकः अकृत्रिमः । प्रमोदप्रति अल्पेन प्रमोदेन । 'सुप् प्रतिना मात्रार्थे' (पा० सू० २-१-९) इत्यव्ययीभावः । मात्रार्थोऽल्पार्थः । महितेन रसेन जलेन यदापूरणं तेन संभाव्यमानः सरस्वान् सागरो यया तस्याः । यथाकथञ्चिदुगितो ङीबित्युक्तेः, प्रासः श्रीमान् अनयेति प्रासश्रीमतीत्यादिवद् ङीप् ॥

स इत्यादि । अहिनोत् प्रेषयामास ॥ ६१ ॥

अनन्तरमित्यादि । निरोधकर्मैव नर्म तत्र कर्मठा । उपोद्बलितं उपबृंहितम् । निशामनं दर्शनम् । उन्मस्तकः मस्तकमुद्भिद्य निर्गच्छन् । अतिप्रवृद्ध इत्यर्थः । धिक्कृताः तिग्मगोः दिवाकरस्य उरवः गुरवः पादा रश्मयो

गुरुपादानां पादपाथोजयोः प्रणम्य विरचितयथोचितापचितिः सुचिर-कालसमुपनततदवलोकसमुपचितहृदयमोदलघुजनितनयनतोयविवशतर-विलोकनो विनयभराचाचीनकन्धरमवातिष्ठत ॥

मोदलालस्यमानास्यः शस्यया वरिवस्यया ।
भार्गवो भरतोत्तंसं व्यचीकसदसौ वचः ॥ ६२ ॥

वत्स! व्यञ्जितभक्तिभारसुभगं सप्रश्रयं ते स्थितं
मुग्धं हन्त! चिरादिदं हृदि मुदं पुष्णाति भीष्माद्य मे ।
भद्रं ते भवतादलं ननु जनो वीतैषणोऽप्येष ते
कार्यादन्तिकमेषते स्म शृणु तं न्यक्षेण वक्ष्यामि ते ॥ ६३ ॥

पुरा वाराणस्यामुपयमविधावाहृत भवा-
नहासीदप्येतां हृदि निहितसाल्वेति कृपणाम् ।
ततः साल्वोऽप्येनां परपरिगृहीतेति विजहौ
श्रिता मामद्येयं नियतनिजधर्मात्ययभयात् ॥ ६४ ॥

यदेवं हा देवव्रत! कुलवधूः कापि विधुरा
स्वधर्मादुन्मुक्ता चरति पतिशुश्रषणमयात् ।
वरेण्ये तारुण्ये शिवशिव! हताशा विशरणा
तदेतन्मे चित्ते महितमिह तापं वितनुते ॥ ६५ ॥

---

यैः ते । गुरुपादानां, पादशब्दः पूज्यवाची । अपचितिः पूजा । अवाचीना अवाग्भूता । अवातिष्ठत स्थितवान् । 'समवप्र–' (पा० सू० १-३-२३) इति तङ् ॥

मोदेत्यादि । लालस्यमानम् अत्यर्थं लसत् । वरिवस्यया परिचर्यया । भरतोत्तंसं, प्रतीत्यध्याहार्यम् । व्यचीकसत् विकासितवान् । 'कस गतौ' ॥ ६२ ॥

वत्सेत्यादि । स्थितं, भावे क्तः । एषते स्म प्राप्तवान् । 'एष गतौ' भूवादि । न्यक्षेण कात्स्न्येन । प्रकृत्यादितृतीया । 'न्यक्षकात्स्न्यादिभ्यः क्रियाविशेषणे' (स० क० ३-१-२१४) ॥ ६३ ॥

पुरेत्यादि । नियतनिजधर्मं भर्तृशुश्रूषणं, तस्यात्ययोऽतिक्रमः ॥ ६४ ॥

यदित्यादि । पतिशुश्रूषणमयात् भर्तृशुश्रूपणस्वरूपात् ॥ ६५ ॥

किमु त्वत्तो भीत्या परकरगृहीतेति किमु वा
न कोऽप्येनां दीनां जगति परिगृह्णीत नियतम् ।
तदाज्ञां मे प्राज्ञ! त्वरितमुररीकृत्य महितां
गृहाणेमां धर्मं भजतु निजमेषा कुलवधूः ॥ ६६ ॥

इमामार्यां मा मा जहिहि भवतैवाहृतचरीं
निविष्टामभ्यर्णे तव परिगृहाणेति सुचिरम् ।
कुलोत्तंसं पूरुं स्मर रघुवरं चामुमपि मां
वरीयः सर्वस्मादपि गुरुवरादेशकरणम् ॥ ६७ ॥

आदरादेवमुक्तेऽपि निर्विकारमुखं मुनिः ।
दृष्ट्वा किमपि रुष्टात्मा पुनरप्यमुमभ्यधात् ॥ ६८ ॥

भो भोः पौरववीर! वीतमदनोल्लासालसाङ्गीमिमां
क्रन्दन्तीं कुररीमिवातिकरुणं काशीशकन्यां हठात् ।
किं कृत्वा हृदयेऽहृथा ननु वृथा लोकद्वयाद्भ्रंशिता
बालेयं बत! सौभराडपि जहौ ते साहसिक्यादिमाम् ॥ ६९ ॥

---

**किमु** इत्यादि । एषा निजधर्मं भजतु भर्तृसहिता भवत्वित्यर्थः ॥ ६६ ॥

**इमामित्यादि** । जहिहि त्यज । 'आ च हौ' (पा० सू० ६-४-११७) इतीकारोऽन्तादेशः । आहृतचरीं पूर्वमाहृताम् ॥ ६७ ॥

**आदरादित्यादि** । किमपि किञ्चित् ॥ ६८ ॥

**भो** इत्यादि । वीतं विगतम् । हठाद् बलात्कारेण । "हठाद् बलात् प्रसभार्यहलं हठे" । हृदये किं कृत्वा किं निरूप्य अहृथाः हृतवानसि । सौभराट् साल्वः । साहसिक्यात् सहसा वृत्तिं कुर्वन् साहसिकः । 'ओजस्सहोम्भस्तमसः' (पा० सू० ६-३-३) इति ठक् । तस्य कर्म साहसिक्यम् ॥ ६९ ॥

शिष्यस्नेहवशंवदाशयतयैवास्माभिरापादितं
सान्त्वं यत्तदिदं तु भस्मनिहुतं प्रोत्सिक्तचित्ते त्वयि ।
कृत्तोद्वृत्तसमस्तपार्थिवगलस्रस्तोरुरक्तोदक-
स्रोतःक्लृप्तपितृक्रियो मम भुजः श्रेयस्त्वया चिन्त्यताम् ॥ ७० ॥

अथ यथाकथञ्चिदपि नाङ्गीकरणीयां गुरोरिमां गां गाङ्गायनिरयमाकलय्य तं च किञ्चिदुदञ्चितक्रोधमवधार्य गुरुहिताचरणादविहिताचरणादपि चकितमतिरितिकर्तव्यतां मनस्यव्यवस्यन् विविधमिति विचारयामास—

अस्यामङ्गीकृतायां गुरुवरवचसाप्यद्य हित्वा प्रतिज्ञा-
मन्यासक्तां वधूटीमभजत कुलटां दूरदर्शी स भीष्मः ।
एवं जेगीयमानं घनतरमयशो वज्रलेपायमानो
नूनं नूत्नः कलङ्कः शशिनि परिणमेद्वंशकूटस्थभूते ॥ ७१ ॥

प्रत्याख्याते स्वकीये वचसि गुरुरसौ तत्क्षणोद्भूतघोर-
क्रोधोद्भ्रान्तेक्षणान्तप्रसृतशिखिकणस्तोमखद्योतिताशः ।
नैकं मामेव कृत्स्नं कुरुकुलमपि शापात्मकेऽस्त्रात्मके वा
वह्नावह्नाय नूनं हहह! शलभतां नेष्यते भर्गशिष्यः ॥ ७२ ॥

---

शिष्येत्यादि । वशंवदोऽधीनः । भस्मनिहुतं निष्फलमित्यर्थः । 'क्षेपे' (पा० सू० २-१-४७) इति समासः ॥ ७० ॥

अथेत्यादि । गाङ्गायनिः भीष्मः । तिकादित्वात् फिञ् ॥

अस्यामित्यादि । वधूटीं यौवनवतीं स्त्रियम् । कुलटां पुंश्चलीम् । जेगीयमानमत्यर्थं गीयमानम् अयशः शशिनि वज्रलेपायमानः नूत्नः कलङ्कः परिणमेत् । वज्रलेपः दुरपनोदनो वज्राख्यलेपद्रव्यविशेषः । कूटस्थ आदिपुरुषः ॥ ७१ ॥

प्रत्याख्यात इत्यादि । स्वकीये आत्मीये । 'गहादिभ्यश्च' (पा०सू० ४-२-१३८) इति छः । "स्वपरजनदेवानां कुक् च" इति कुगागमश्च । खद्योतिताः खद्योतवत्यः कृताः । "हहहेत्यद्भुते खेदे" इत्यमरः ॥ ७२ ॥

निर्मायो धर्म एवायं निर्मायादिह शर्म मे ।
निर्मलात्मेति निश्चित्य निर्ममो निर्ममे स गाम् ॥ ७३ ॥

सत्यं ते करुणावशाशय! वचो हीना स्वधर्मादियं
भ्राम्यन्ती विवशं बतैवमनिशं शोकादनाथा व्यथाम् ।
सर्वेषामपि सन्तनोति समयः कामं मया त्वद्गिरा
हेयो योषिदिहान्यबद्धहृदया व्यालीति वाणी कृता ॥ ७४ ॥

ब्रह्मन्नार्यहलं हृतार्य! महतामार्या मयासौ ततः
सौभेशाकलिताशयेत्यशनकैः प्रस्थापिता चास्थया ।
अस्यास्तावदतः परं बहुतरं तत्तादृशं चेष्टितं
हाहन्तेह विजानते ननु गुरो! के के न लोके जनाः ॥ ७५ ॥

विधूतप्राज्यराज्यश्रीवधूवसुरसावहम् ।
नित्यं धर्मात्ययादेव बेभेमि भृगुपुङ्गव! ॥ ७६ ॥

---

निर्माय इत्यादि । निर्मायात् कुर्यात् । लिङ् । 'घुमास्था-' (पा० सू० ६-४-६६) इति ईत्वापवाद 'एर्लिङि' (पा० सू० ६-४-६७) इत्येत्वं त्वाशीलिङ्येव । निर्ममः ममत्वरहितः ॥ ७३ ॥

सत्यमित्यादि । हेयः त्याज्यः । अन्यबद्धहृदया योषित् व्यालीति वाणी कृता । अन्यासङ्गिनी युवतिः व्यालीसदृशीति पुराणप्रसिद्धिः । (का?) तस्या बाधकं किमपि न पश्याम इत्यभिप्रायः ॥ ७४ ॥

ब्रह्मन्नित्यादि । आर्यहलं बलात्कारेण । महतामर्यः प्रधानभूतः । अशनकैः अशनैः । 'अव्यय-' (पा० सू० ५-३-७१) इत्यकच् ॥ ७५ ॥

विधूतेत्यादि । प्राज्यराज्यश्रीः साम्राज्यलक्ष्मीः । वसुरहमित्यपि स्फुरति । बेभेमि अत्यर्थं भीतो भवामि ॥ ७६ ॥

त्रासेन द्रविणाशया करुणया लोभेन वा लोपये-
द्धर्मं नैव कदाचनेति वचनं युष्मादृशां मानयन्।
सोऽहं विष्णुपदीसुतस्तव गुरो! पादाम्बुजाभ्यां शपे
नैनामन्यजनानुषङ्गिहृदयामङ्गीकरोमि ध्रुवम् ॥ ७७ ॥

अनन्तरमन्तेवासिनोऽपि तस्य तादृशमिदं वचनमवधार्याक्षीणरोषकलुषिताक्षियुगदुर्निरीक्षः स खलु भृगुपतिः आज्यसेकाज्ज्वलन इव जाज्वल्यमानः द्युतिभरविजितकर्मसाक्षिणं निजरभसकर्मसाक्षिणं शोणितालेपकषायितं क्षोणिपावलेपनिकषायितं क्रूरधारं कुठारं रूक्षतरं मुहुरीक्षमाणस्तीक्ष्णतरां वाचमाचचक्षे—

रे रे कौरव! गौरवोद्धतगिरा किं त्वादृशे बालिशे
वाग्मी को नु हितोक्तिभिर्विकुरुते लोकत्रये पुत्रिकाम्।
द्राक् त्वां भार्गव एष संश्रितजनत्राणव्रतान्नो चले-
दित्यद्यैव विबोधयेन्नृपकुलोद्धारः कुठारस्त्वयम् ॥ ७८ ॥

दीनां भार्गवपादमूलपतितामेनां निरस्यन् क्षणं
किं मन्ये विगतामयं बुधवरं मन्ये ह जीविष्यसि।
पातुं दुर्जनशोणितासवमसौ तात्वर्यमाणश्चिरं
तृष्यन् किञ्चन वा सहेत परशुः कालातिपातं कथम् ॥ ७९ ॥

---

त्रासेनेत्यादि। लोपयेत् लुप्तं कारयेत्। विष्णुपदी गङ्गा। पादाम्बुजाभ्यां शपे 'शप उपालम्भे' (वा०) इति तङ्। त्वत्पादौ स्पृशामि। नैतन्मया करिष्यत इत्येवंरूपशपथविशेष उपालम्भनम् ॥ ७७ ॥

अनन्तरमित्यादि। कर्मसाक्षी सूर्यः। "कर्मसाक्षी जगच्चक्षुरंशुमाली त्रयीतनुः" इति निघण्टुः ॥

रे रे इत्यादि। विकुरुते विक्रियां करोति। पुत्रिकां पाञ्चालिकाम् ॥ ७८॥

दीनामित्यादि। जीविष्यसि जीविष्यामि। मन्ये मन्यसे। अत्र 'प्रहासे च–' (पा० सू० १-४-१०६) इति मध्यमः, मन्यतेरुत्तमश्च। बुधवरं

दृप्यद्वैरिकदम्बघोरविपिने व्याजृम्भमाणः शर-
प्रासप्रायभयानकास्त्रनिकरान् संभ्राम्यतः संहरन् ।
प्रोद्यद्भूरिगभस्तिजालजटिलः सासर्यमाणः सदा
सर्वैर्घोरतरस्त्वयैष परशुः क्लीबाद्य किं विस्मृतः ॥ ८० ॥

घोरेण मे परशुना तक्षितो भक्षितः पुनः ।
कर्ता कृतान्तमाशु त्वं सर्ता च कुरुसत्तम ! ॥ ८१ ॥

उक्त्वा खलु मदादिष्टां गृहाण स्त्रीमतल्लिकाम् ।
यद्वा लघु मदादिष्टां गृहाणास्त्रमतल्लिकाम् ॥ ८२ ॥

तदनु तदाचार्यवचनमवधार्य "कष्टमद्य दिष्टबलाद् भृगुकुलकल्प-वल्लीसमुल्लसितमञ्जरीतल्लजेन सत्पथावेशिकेन देशिकेन तपोधनेन सह ममायोधनमापतितं, येनकेना याहूतानामिह बाहूद्भवानामाहवो न हातव्य एव, आततायिनमाकलितायुधं वसुधासुधाशनं हत्वा नियतं ब्रह्महत्या न जायेत, तदपि तत्कृतान्यनुद्धतानि प्रेमभारानुबद्धानि

---

मन्ये इत्यनेन प्रहासः सूच्यते । तात्वर्यमाणः अत्यर्थं त्वरमाणः । तृष्यन् पिपासितः ॥ ७९ ॥

दृप्यदित्यादि । सासर्यमाणः अत्यर्थं सर्यमाणः । क्लीब ! जड इति यावत् ॥ ८० ॥

घोरेणेत्यादि । कृतान्तं अकुशलकर्म । "कृतान्तो यमसिद्धान्तदैवा-कुशलकर्मसु" इत्यमरः । कर्ता त्वं मे परशुना तक्षितः खण्डितः । पुनः परेण शुना भक्षितश्च । कृतान्तं यमं सर्ता गन्ता च । भविष्यसीति शेषः ॥ ८१ ॥

उक्त्वेत्यादि । उक्त्वा (खलु) न वक्तव्यम् । 'अलंखल्वोः–' (पा० सू० ३-४-१८) इति क्त्वा । मदादिष्टां मया आदिष्टाम् । स्त्रीमतल्लिकां प्रशस्तां स्त्रियम् । लघु शीघ्रम् । "अथ शीघ्रं त्वरितं लघु क्षिप्रमरं द्रुतम्" इत्यमरः । अन्यत्र मदाद् इष्टामिति छेदः ॥ ८२ ॥

तदन्वित्यादि । सत्पथावेशिकेन सन्मार्गगामिना । आवेशिकः आगन्तुः । आततायिनं वधोद्यतम् । प्रणवनं स्तुतिः । प्रणाथनं याच्ञा ।

लालनपालनानुशासनादीनि दुर्विस्मराणि संस्मरन्निह प्रथनविधये न प्रभवामि । भवतु, बहुतरप्रणमनप्रणवनप्रणाथनादिभिरपि प्रशान्ततामापत्स्यते न चेदनेन योत्स्ये" इत्युरसिकृत्य हृदीतनयः स नदीतनयः पदुपहतोरगवदुरुतरप्रतिघविवशममुं बहुशः प्रणमन्नात्तविनयमनुसरणायत्तां वाचमादत्त —

किमिति बत गुरो! त्वं मह्यमेवं प्रकुप्य-
त्वयि! क इव कृपाब्धे! तादृशो मेऽपराधः ।
तव भृगुकुलमौले! विश्वलोकावितर्क्य-
प्रथिततरमहिम्नः को नु कोपं सहेत ॥ ८३ ॥

जगति तव चरित्रं दुर्निरूपं विचित्रं
यदिह महितवीर्यं कृत्तवान् कार्तवीर्यम् ।
उदधिमपि निरास्थः स्रागगाधं निरास्थो
वलभिदपि भवन्तं नाह्वयेताहवाय ॥ ८४ ॥

पदपतितमिमं ते दीनमन्तेवसन्तं
त्वदधिगतचतुर्भेदास्त्रमालावलम्बम् ।
निगमकुसुममाध्वीसारसारङ्ग! मा मा
क्षिप विकरुणमत्राधर्मरूपेऽन्धकूपे ॥ ८५ ॥

---

पदुपहतः पादेनोपहतः । 'पादस्य पदाज्याति-' (पा० सू० ६-३-५२) इति पदादेशः ॥

किमित्यादि । अवितर्क्यः अचिन्त्यः ॥ ८३ ॥

जगतीत्यादि । निरास्थः निरस्तवानसि, सद्याद् दूरीकृतवानित्यर्थः । अङि 'अस्यतेस्थुक्' (पा० सू० ७-४-१७) इति थुक् । स्राक् झटिति । निरास्थः अप्रयत्नः । "आस्थानीयत्नयोरास्था" इत्यमरः । आह्वयेत स्पर्धया आह्वानं कुर्यात् ॥ ८४ ॥

पदेत्यादि । चतुर्भेदास्त्राणीति । "शक्त्याद्यस्त्रं पाणिमुक्तं यन्त्रमुक्तं शरादिकम् । मुक्तामुक्तं धृतं मुक्तं नागपाशादि दीर्घकम् ॥ अमुक्तं छुरिकादि स्यादिति शस्त्रं चतुर्विधम् ।" इति वैजयन्ती । सारङ्गो भ्रमरः ॥ ८५ ॥

एवमभिहितेनापि महितरुषितेन निखिलनृपवर्गरुधिरमार्गणमार्गणेन तेन भार्गवेण, "भो भोः कुरुकुलकलङ्कभूत भीष्म! शिष्योऽहं शिष्योऽहमित्यनल्पविनयमिह जल्पन्नपि शिष्यौपयिकगुरुजनानुरोधने मनागपि मनो न वितनोषि, प्रत्युत मयि विप्रियमेव वत विधित्ससि छात्रव्यंसक! गोत्रविध्वंसक! मीमांसकदुर्दुरूट! व्यर्थकिततीर्थवाक! तीर्थकाक! किमनेन तव नतिनुतिनाथनादिना नियतमेतादृशेषु धर्मध्वजिषु प्राज्ञम्मानिषु परमकृतज्ञेषु युक्ततराणि प्रतिकर्तव्यानि पितृवधसन्धुक्षितमन्युसिन्धुतरणबन्धुः अखिलवसुन्धरेशान्तर्वसाविस्रगन्धी कठोरधारः कुठार एवायमद्धा विबुध्यते" इति स्फुरिताधरमुदितहासमुदितोऽसौ गुरुजनस्वरससिद्धशिष्यगणनिबद्धप्रेमभरविरहितयानया गिरा मनागुदीयमानरभसोऽपि गभीरतरमनाः पुनरपि सस्मितमिदमुदीरयामास—

केयं देशिक! ते सदादरकरी ब्रह्मण्यमुद्रा वरा
नैवं दृष्टचरी न च श्रुतचरी नोनूयमाना बुधैः।
शान्तेनाद्भुतरौद्रवीरशबलेनाद्धा रसेनाञ्चिता
हिंसामिश्रतपोविधानमहिता वक्तुं न शक्या जनैः॥ ८६॥

---

एवमित्यादि। रुधिरस्य मार्गणोऽन्वेष्टा मार्गणः शरौघो यस्य। औपयिकं युक्तम्। प्रत्युतोक्तान्यथात्वे। विधित्ससि विधातुमिच्छसि। धूर्तः छात्रः छात्रव्यंसकः। 'मयूरव्यंसकादयश्च' (पा० सू० २-१-७२) इति समासः। मीमांसकदुर्दुरूटः नास्तिकः। 'कुत्सितानि कुत्सनैः' (पा० सू० २-१-५३) इति समासः। व्यर्थकितो व्यर्थीकृतः तीर्थवाकः तीर्थस्य गुरोः वाग् येन तस्य संबोधनम्। तीर्थे काक इव तीर्थकाकः, अनवस्थित इत्यर्थः। 'ध्वाङ्क्षेण क्षेपे' (पा० सू० २-१-४२) इति समासः। धर्मध्वजिषु, "धर्मध्वजी लिङ्गवृत्तिः" इत्यमरः। प्राज्ञम्मानिषु प्राज्ञमात्मानं मन्यमानेषु। कृतमुपकारं तं जानन्तीति कृतज्ञाः तेभ्योऽन्योऽकृतज्ञाः। "विस्रं स्यादामगन्धि यत्" इत्यमरः। स्वरससिद्धः स्वतस्सिद्धः॥

केयमित्यादि। अत आरभ्य 'तनुमो नम' इत्यन्तं निन्दागर्भोक्तिः। सताम् आदरकरी सदादरकरी, दरं भयं च। वरा उत्कृष्टा, अवरेत्यपि।

हन्त! त्वां जननीं निहिन्धि सहजानप्याशु वाचा पितुः
खिद्यस्वाथ ततः स्वतातसविधात् तत्प्राणनं वा वृणु ।
नैवं किं किमिहाकृताकृतचरं केनापि लोके भवा-
नीदक्षं बत क्षर्मसूक्ष्ममपरः को वेत्ति लोकत्रये ॥ ८७ ॥

शोश्रूये गदितं त्वयैव सततं त्रिस्सप्तकृत्वो नृपा-
नेषोऽहं न्यहनं रुषेत्ययि मुने! नासं बताहं तदा ।
लोकेऽस्मिन् यदि वा तदायमुदपत्स्येऽहं मनो मोहनं
निध्यायन् निरवापयिष्यममितं तद्बाहुवीर्यं तव ॥ ८८ ॥

जय जय भृगुकुलकेतो! द्विजातिमात्रसम्भावनीयवीराग्रेसर! महितवंशजात वेदसंस्तुतापदान! मयि मामा कलय कोपम् अपनयजल-

---

बुधैः नोनूयमाना अत्यर्थं स्तूयमाना । अन्यत्र नो इति पृथुक्पदम् । अबुधैरत्यर्थं स्तूयमानेति वा । हिंसामिश्रतपोविधानेन महिता, तपोविधया तपोविधानेन न महिता च । शान्तस्य रौद्रादिमिश्रत्वान्निन्दा । तपसो हिंसामिश्रत्वान्निन्दा ॥ ८६॥

हन्तेत्यादि । निहिन्धि निहतवान् । खिद्यस्व खेदं प्राप्तवान् । वृणु वृतवान् । अत्र 'समुच्चयेऽन्यतरस्याम्' (पा० सू० ३-४-३) इति लोट् । 'समुच्चये सामान्यवचनस्य' (पा० सू० ३-४-५) इति कृञोऽनुप्रयोगः । अत्र निन्दागर्भत्वं स्पष्टमेव ॥ ८७ ॥

शोश्रूय इत्यादि । पुनः पुनः शृणोमि । त्वयैव नान्येन । त्रिस्सप्तकृत्वः अधिकविंशान् वारान् । 'सङ्ख्यायाः—' (पा० सू० ५-४-१७) इति कृत्वसुच् । न्यहनं निहतवानस्मि । आसम् अभवम् । अस्मिन् लोके तदाहमुदपत्स्ये जातो यदि तर्हि तव मोहनं तद्बाहुवीर्यं निध्यायन् पश्यन् । मनो निरवापयिष्यं सुखितमकार्षम् । 'लिङ्निमित्ते—' 'भूते च' (पा० सू० ३-३-१३९; १४०) इति लृङ् । अन्यत्र मनोमोहनं तत् तव बाहुवीर्यं निध्यायन् निरवापयिष्यं नष्टमकार्षमिति ॥ ८८ ॥

जयेत्यादि । केतुरलङ्कारभूतः । द्विजः ब्राह्मणश्रेष्ठः । अतिमात्रसंभावनीय! वीराग्रेसर! महितवंशजात! वेदसंस्तुतापदान! कोपं मामा कलय ।

मरुस्थलायमानयशोवारिराशे रेणुकानन्दन! क्व वा हीनबलोऽहं, क्व वा दशरथकुमारेणाप्यगणितपराक्रमो भवान्। महितप्रताप! मानिनामग्रेसर! स्फुटतरप्रसूतापदानोऽयं न कुत्रापि ते प्रतिभटभटभयावहः कुठारः कुण्ठधारः, तदखण्डराजसभावनशुष्मन्! भीष्मोऽहमिमे मुनिवरनते चरणे समाश्रये॥

धर्मनिष्ठेह शरणं त्वत्प्रसादो हि नो गुरो!।
युयुत्सतां स्वशिष्यैस्तु भवान्नो तनुमो नमः॥ ८९॥

---

अपनय एव जलं तस्य मरुस्थलायमानयशोवारिराशे! रेणुकानन्दन! हीनबलोऽहं क्व वा, दशरथकुमारेणापि श्रीरामेणापि अगणितपराक्रम! असंख्यातपराक्रमः भवान् क्व वा। महितः प्रतापो यस्य सः। मानिनामग्रेसर!। स्फुटतरं यथा तथा प्रसूतमपदानं यस्य सः। प्रतिभटभयावहः अयं कुठारः न कुत्रापि कुण्ठधारः। तद् अखण्डराजसभावनशुष्मन्! अखिलराजसमूहदवहुताशन! मुनिवरैर्नते इमे चरणे समाश्रये। अन्योऽप्यर्थः-केतुर्धूमकेतुः। द्विजातिमात्रेणैव संभावनीयः वीराग्रेसरम् अहितवंशजातवेदसं स्तुतापदानम् अयि मामाकलय। कोपमपनय। जल जड! यशोवारिराशेर्मरुस्थलायमान! रेणुकायाः अनन्दन दुःखदायिन्!। अहीनबलः इति छेदः। दशरथस्य कुमारेणापि अर्भकेणापि अगणितः अबहुमतः। महितप्रतापमानिनां महितप्रतापम् आत्मानं मन्यमानानाम् अग्रेसर। स्फुटतरं प्रसूतापदानं मातुस्तापदानं यस्य। अयं कुठारः कुत्रापि प्रतिभटभटभयावहो न, अपि तु कुण्ठधारः। अखण्डराजसभाव पूर्णराजसभाव! नशुष्मन् बलहीन!। "द्रविणं तरःसहोबलशौर्याणि स्थेम शुष्मापि" इत्यमरः। भीष्मोऽहं, बिभेत्यस्मादिति भीष्मः। मुनिवर! इमे ते चरणे न समाश्रये इति॥

धर्मेत्यादि। धर्मे निष्ठा यस्य सः धर्मनिष्ठः तस्य सम्बोधनम्। गुरो इह त्वत्प्रसादः हि एव नः शरणम्। भवान् स्वशिष्यैः नो न भवान् स्वशिष्यैः युयुत्सतां योद्धुमिच्छतु। 'युध संप्रहारे' अनुदात्तेत्। नमः तनुमः कुर्मः। अन्योऽप्यर्थः—गुरो इह धर्मनिष्ठा शरणम्। त्वत्प्रसादः नो न। भवान् स्वशिष्यैः युयुत्सताम्। नमो न तनुम इति॥ ८९॥

अथ तथाविधां भागीरथेयभारतीं परिकलय्य सरभसोद्भूतरभसभरपरिभूतचेताः स खलु भृगुकुलोद्वहः "रे रे पापाशय! भवतु भवतु। सुधारसापूर्णमुखविषकुम्भायमानैः अप्रमुखमधुरैरेतैर्वचोगुम्फविसरैः विधीयमानमवमानमिदमवगतमेव। रणाङ्गण एव परशुमात्रसहायोऽहमस्य युक्ततरमुत्तरमुपहरिष्यामि। यदि शक्तोऽसि पत्तनमेत्य बद्धकक्ष्यो मङ्क्षु मामभियुङ्क्ष्व! कुरुक्षेत्र एव निखिलक्षत्रकुलनिहन्ता भवन्तमहं तु प्रतिपालयामी"त्यभिधाय परिधूयमानपरश्वधपरित्रासितभुवनचक्रो रयाद्याश्चक्रे ॥

वाक्यं श्रुत्वास्य युद्धं स कर्तुं निश्चित्य कौरवः ।
पत्तनं हस्तिनं गत्वा नत्वा मात्रे तदुक्तवान् ॥ ९० ॥

इति श्रीमानवेदविरचिते चम्पुभारते
दशमः स्तबकः ॥

---

अथेत्यादि। सरभसं सवेगम् सहसेत्यर्थः, उद्भूतम्। भवतु भवतु अलमलम्। "अस्तु भवतु पूर्यते वारणे।" बद्धकक्ष्यः सन्नद्धः ॥

वाक्यमित्यादि। पत्तनं पुरम् ॥ ९० ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये दशमः स्तबकः ।

श्रुत्वेदं सत्यवत्या प्रणयविवशया पुत्रक! स्वस्ति ते स्ता-
दित्याशास्याश्रुपूरस्नपितनयनया पुष्टमानं विसृष्टः ।
विप्रैः स्फायत्तपस्यैः सदयमनुजरीगृह्यमाणः स मानी
स्थानीयात् स्वात् प्रतस्थे महिततरमना वैरिभीष्मोऽथ भीष्मः ॥ १ ॥

आरुह्य श्वेतवाहं रथमथ विविधैरायुधैर्घोररूपं
कोदण्डं पाण्डराभं सशरमधिकरं धारयन् गौरवासाः ।
शुभ्रालङ्कारदीप्रः शुचिकवचपरिभ्राजिताक्षामवक्षाः
शुक्लोष्णीषातपत्रः स खलु लघु कुरुक्षेत्रमापाक्षतोष्मा ॥ २ ॥

अह्नाय जाह्नवी तावदुपेत्यापायशङ्कया ।
जगादैनं जगन्माता सुतस्नेहविमोहिता ॥ ३ ॥

तनय! नयपयोधे! कोऽयमद्योद्यमस्ते
किमिह गुरुवरेऽस्मिन्नीहसे साहसाय ।
महितमधिकरौद्रं वीर! विश्वोत्तरं तद्
विदितमयि! न ते किं शस्यमस्यापदानम् ॥ ४ ॥

---

श्रुत्वेत्यादि । पुत्रक, अनुकम्पायां कन् । आशास्य आशिषं कृत्वा । अनुजरीगृह्यमाणः अत्यर्थमनुगृह्यमाणः । स्थानीयाद् नगरात् ॥ १ ॥

आरुह्येत्यादि । अधिकरं करे । गौरः श्वेतः । शुचिर्धवलः । अत्र भीष्मस्य धर्ममेकं प्रमाणीकृत्य गुरुभिः सह योद्धुं प्रवृत्तत्वात् धर्मस्य च सात्त्विकत्वात् सर्वपरिकराणां श्वेतत्वमित्यवसेयम् ॥ २ ॥

अह्नायेत्यादि । झटिति । जाह्नवी गङ्गा ॥ ३ ॥

तनयेत्यादि । साहसाय साहसं कर्तुम् । वीर, अनेन अप्रतिहतं ते वीर्यम्, अत्र तु न तथा भवतीति प्रकाशितम् । शस्यं प्रशस्यं, प्रवृद्धमिति यावत् । "शंसिदुहिगुहिभ्यः क्यब्वा" इति क्यप् । 'अनिदितां–' (पा०सू० ६-४-२४) इति नलोपः ॥ ४ ॥

विख्यातक्षितिनाथमाथनिगदव्याख्यातदोर्विक्रम-
स्तत्ताद्दक्षतपोमयानलशिखाजाज्वल्यमानाकृतिः।
सोऽयं पुलक! दुर्विभाव्यमहिमा भर्गोपमो भार्गवः
क्रुद्धश्चेत् ससुरासुरं जगदिदं भस्मीकरोति क्षणात् ॥ ५ ॥

अहममुमभियाचे त्वत्पदैकावलम्बे
बत! मम तनयेऽस्मिन्मैव रोषं भजेति।
क्षणमिह विरम त्वं कस्य वानेन योद्धुं
बलतुलितषडास्येनाक्षता दक्षता स्यात् ॥ ६ ॥

दीनां नदीनां विनयादयं नम-
न्नेनां नदीनामगृणादिमां गिरम्।
स नाथितोऽपीष्यति धर्मनिष्ठया
सनाथितोऽहं समरं समारभे ॥ ७ ॥

इति भरितधैर्येण तेन भरतवर्येणाख्यातमाकलय्यापि प्रणयभर-पर्याकुला भागीरथीयं भार्गवपार्श्वमाविश्य 'ननु मुनिवर! कृपणैकबन्धो! करुणैकसिन्धो! निर्बन्धादतो निवर्तस्व। हन्त! धर्म्ये पथि चरन्तं निजममुमन्तेवसन्तं मा मा रभसानले शलभतां लम्भय। त्वत्पदैकावलम्बं मम बालकं पालये'ति पादयोः पपात।

---

विख्यातेत्यादि। माथो मथनम्। निगदव्याख्यातः स्पष्टोक्त इति यावत्। दुर्विभाव्यः दुर्विज्ञेयः ॥ ५ ॥

अहमित्यादि। षडास्यो गुहः। दक्षता वैदग्ध्यम् ॥ ६ ॥

दीनामित्यादि। नदीनां नदीश्रेष्ठाम्। नदीनां उत्कृष्टां गिरम्। नाथितोऽपि याचितोऽपि। सनाथितः सनाथीकृतः ॥ ७ ॥

इतीत्यादि। धर्म्यं धर्मादनपेतम्। अन्तेवसन्तं शिष्यम्। लम्भय प्रापय। 'लभेश्च' (पा० सू० ७-१-६४) इति नुम् ॥

निजपदपतितां तां तापभारातितान्तां
सुरसरितमवश्यं विश्ववन्द्यामपश्यत् ।
उदितमृदुलहासव्याजहाराभिरामः
सरसमिति स वाचं व्याजहारापि रामः ॥ ८ ॥

भद्रे! त्वत्सुत एष मत्पदगतासालम्बहीनामिमा-
मम्बामुद्वह पौरवोद्वह! सतीमित्थं मयाप्यर्थितः ।
दर्पान्न्यक्कृतमामकीनवचनो युद्धाय बद्धोद्यमः
पश्याभ्येति जवेन जाह्नवि! कथं जन्याभ्निवर्तेऽधुना ॥ ९ ॥

निजमेवात्मजं तत् त्वं निवर्तय रणोद्यमात् ।
कल्मषोन्माथिनि! शिवे! दुर्मदोन्मादिमानसम् ॥ १० ॥

इति निगदितेयं नियतं ममाङ्गजस्य मङ्गलं धर्म एव निर्मायादिति निर्णीय यथागतमेव गताभूत् ॥

अनन्तरमशान्तसन्नाहः खरतरवारिधारापातवेगोपगतोर्ध्वलोकपरपक्षराजहंसविसरः स वाहिनेयः सहसाभिगम्य प्रमथनाथशिष्यप्राथमिकं

---

निजेत्यादि । मृदुलहासव्याजो यो हारः तेनभिरामः । सरसं सानुनयम् ॥ ८ ॥

भद्रे! इत्यादि । अम्बामुद्वह अम्बायाः पाणिग्रहणं कुरु । पौरवोद्वह! पौरवश्रेष्ठ! । मयापि आत्मदेशिकेनापि । न्यक्कृतः तिरस्कृतः ॥ ९ ॥

निजमित्यादि । दुर्मदोन्मादिमानसं दुर्मदेन उन्मादि उन्मदनशीलं मानसं यस्य ॥ १० ॥

इतीत्यादि । अङ्गजस्य पुत्रस्य । निर्मायात् कुर्यात् । यथागतं गतमनतिक्रम्य ॥

अनन्तरमित्यादि । खरायास्तरवारिधारायाः खड्गधारायाः आपातेन वेगेन गतोर्ध्वलोकाः परपक्षराजहंसाः शत्रुराजश्रेष्ठाः यस्य; खरतरा वारिधारा जलधारा परपक्षा उत्कृष्टगरुतः राजहंसाः पक्षिविशेषाः इति मेघसाम्यप्रतीत्या

प्रथमानमानभाजां प्रथमं परामर्षदुराधर्षं कृतवीर्यसुतसीमन्तिनीजननयनाम्भःप्रियंभविष्णुं विजयलक्ष्मीस्वयंग्रहणसुभगंभविष्णुं भृशतरविशालायामधिककर्कशायां वक्षस्थलशिलायां निजपरशुधारां निशातयन्तं, पञ्चास्यमिव परसत्त्वविध्वंसिनं, कल्पान्तवह्निमिव ज्वलितानल्पतरमहःस्थानम्, अस्तम्भभूतमपि नृसिंहं, द्विजराजशेखरमप्यखण्डपरशुम्, अखिलजनदुर्निरीक्षममुं भृगुकुलाध्यक्षं निजागमप्रतीक्षमीक्षामास ॥

अथायमात्मानमधिकमानमाह्वयमानमेनं विनयेन विनमन् "अयि! गुरुवर! रथगतोऽहं पृथिवीगतेन विश्वम्भरमहौजसापि भवता न सिसमरयिषामि। यदि सिसंग्रामयिषा सांग्रामिकं कमपि रथवरमलंकुर्वाणो रिपुविसरनिरसनैककार्मं कार्मुकवरं करतले परिकलयन् घटितकङ्कटो झटिति जाघटीतु भवान्" इत्यदभ्रादरमभ्यभाषिष्ट ॥

---

अनायासेन शत्रुनिग्राहकत्वमुक्तम्। प्रथमं भवं प्राथमिकं, प्रधानभूतमित्यर्थः। 'ह्यजृद्-' (पा० सू० ४-३-७२) इति ठक्। निशातयन्तम् उत्तेजयन्तम्। परसत्त्वानि अन्यजन्तून्, परेषां शत्रूणां सत्त्वं पराक्रमं च। ज्वलितम् अनल्पतरं महःस्थानं महर्लोकं येन। भूर्भुवस्स्वर्महस्तपस्सत्यलोकेषु ज्वलितस्यानल्पतरस्य महसः पदं स्थानं च। स्तम्भाद् भूतः तस्मादन्यः अस्तम्भभूतः, अस्तम्भं प्राप्तश्च। नृसिंहो नरश्रेष्ठश्च। द्विजराजशेखरश्चन्द्रशेखरः, ब्राह्मणश्रेष्ठानामलङ्कारभूतश्च। खण्डपरशुर्हरः। अखण्डोऽन्यून उत्कृष्टश्च। ईक्षामास ददर्श ॥

अथेत्यादि। सिसमरयिषामि समरं कर्तुमिच्छामि। सिसङ्ग्रामयिषा सङ्ग्रामं कर्तुमिच्छा। 'तत् करोति' (वा०) इति णिजन्तात् सन्। सङ्ग्रामाय प्रभवन् साङ्ग्रामिकः। 'तस्मै प्रभवति-' (पा० सू० ५-१-१०१) इति ठक्। कार्मः कर्मशीलः। 'कार्मस्ताच्छील्ये-' (पा० सू० ६-४-१७२) इति निपातः। जाघटीतु अत्यर्थं घटताम्। अदभ्रं बहु ॥

सोऽप्यूचेऽथ वसुन्धरा रथवरो वेदा स्वयं सैन्धवा
यन्ता गन्धवहश्च कङ्कटवरो मे देवतामातरः ।
अस्त्राणामपि संहतिः समुचिते दिष्टे तु तिष्ठेत मे
योद्धुं धर्मपथैकतत्पर! भवानह्वाय सन्नह्यताम् ॥ ११ ॥

एवमभिभाष्यैन्द्रजालिकप्रयोगादिव तत्क्षणप्रकाशितमक्षतप्रभाचितं चन्द्रालङ्कृतलक्षणेनाक्षीणकेतनेनाक्षामशोभम् अनवलक्ष्यगमनैर्विशिष्टतरविविधलक्षणविराजमानैराजानेयैरखर्वरविगन्धर्वगर्वसर्वस्वनिर्वासनपरैः अर्ववरैः अनर्वाचीनम्, अदभ्रदीप्तिभरैः श्रीगर्भमुखैरखिलैरायुधगणैरधिकभीषणं, विविधदिव्यौषधसनाथितम्, अकृतव्रणसारथिकं रथवरम्, कलितकवचगोधाङ्गुलित्रः तपस्यातिशयदीप्तमूर्तिः अखिलजनदुर्निरीक्षोऽन्तरिक्षमध्यमुष्णांशुरिवोढगर्वमधिरूढो रचितरिपुजनज्यानिदानेन ज्यानिनादेन परिहसितवारिवाहनादेन सिंहनादेन च जगदण्डकुण्डकुहरमपि विघूर्णयन् "भो भोः कुरुकुलाध्यक्ष! दुर्वारदोर्विक्रमोष्मायमाण! भीष्म! समायाहि समायाहि" इति मुहुर्मुहु-

---

सोऽपीत्यादि । सैन्धवा वाजिनः । कङ्कटः कवचः । देवतामातरः, "ब्रह्माण्याद्याः स्मृताः सप्त देवतामातरो बुधैः" इत्यभिधानरत्नमाला । तिष्ठेत प्रकाशेत ॥ ११ ॥

एवमित्यादि । ऐन्द्रजालिकः इन्द्रजालविद्यावान् । अक्षतप्रभया चितं चन्द्रालङ्कृतलक्षणेन । अनवलक्ष्यत्वं वेगातिशयात् । विविधलक्षणैः देवमण्याद्यावर्तप्रभृतिभिः । आजानेयाः, "आजानेयाः कुलीनाः स्युः" इत्यमरः । रविगन्धर्वाः सूर्यवाजिनः । अर्ववरैः हयश्रेष्ठैः । अनर्वाचीनम् उत्तमम् । श्रीगर्भोऽसिः । "श्रीगर्भो विजयश्शास्ता धर्मपालः कृपाणवत्" इति वैजयन्ती । गोधा प्रकोष्ठपालिनी । रचितं रिपुजनस्य ज्यानिदानं हानिदानं येन सः । आह्वयमानः स्पर्धयाह्वानं कुर्वन् । मेघपुष्पधारया जल-

राह्वयमानः पुष्कलमेघपुष्पधारया पुष्कलावर्तगणो गुरुतरं गिरिवरमिवामुं सपदि शलभोत्थलीलाधारयया शरनिकरधारया वारयामास ॥

वाहिनेयस्ततो वाहान् सन्नियम्योपगम्य तम् ।
भक्त्या प्रदक्षिणीकृत्य प्रणमन् मुहुरभ्यधात् ॥ १२ ॥

विश्वोच्चण्डपरश्वधाभिधमहावैश्वानरोड्डामर-
ज्वालाजालहुतावनीश्वरपुरोडाशेन घोरात्मना ।
शिष्योऽहं भवता कथं प्रभवता शक्नोमि योद्धुं गुरो !
तत् त्वं भक्तिमते जयं पुरुकृपापूर्णाशयाशास्व मे ॥ १३ ॥

प्रत्यालपत् स खलु धर्मरतामुना ते
वृत्तेन पौरव ! परं प्रमदं प्रयामि ।
दत्ते कथं नु जयमेष जनो जिगीषु-
र्मत्तेभविक्रम ! घटस्व तदात्तधैर्यम् ॥ १४ ॥

तदनु नदीनात्मजोऽयमदीनात्मको मुहुरनल्पादरं तत्पादयोः प्रणम्य रथवरमास्थाय महितम् अहितलोकदरकरं दरवरमाध्माय बद्धपरिकरं गुरुवरमभ्यर्हितां गिरमभ्यभाषत—

---

धारया । शलभानां उत्थानं शलभोत्थम् । उत्थिताः शलभा इत्यर्थः । क्रिया द्रव्यं लक्षयति सामीप्यात् । धारयया धर्त्र्या ॥

वाहिनेय इत्यादि । सन्नियम्य आस्थाप्य ॥ १२ ॥

विश्वेत्यादि । प्रभवता शक्तेन । जयमाशास्व विजयतां भवानित्याशिषं प्रयुङ्क्ष्व ॥ १३ ॥

प्रत्यालपदित्यादि । प्रत्युक्तवान् । जेतुमिच्छन् कथं जयं दत्ते ददाति ॥ १४ ॥

तदन्वित्यादि । नदीनात्मजः भीष्मः । महितं पूजितम् । दरकरं भयङ्करम् । दरवरं शङ्खश्रेष्ठम् । बद्धपरिकरः सन्नद्धः । अभ्यर्हितां पूजिताम् ॥

ब्राह्मण्यं तद्वरेण्यं शिवशिव! महदाम्नातमाम्नायजातं
स्फीतामेतां तपस्यामखिलबहुमतामार्यमाचार्यकं च ।
भीष्मो यौष्माकमेतन्निखिलमयमलं मानयन्माननीयं
क्षात्रायैवास्त्रयोगादिह समुपनतायेपुपङ्क्तिं प्रयुङ्क्ते ॥ १५ ॥

तदद्य निखिलविष्टपादृष्टचरीं दत्तशत्रुजनचित्तकातरीम् अस्त्रचातुरीमखिलवीरजनमदद्रवणसम्पादिभुजद्रविणसम्पदमपि मामकीनामिमामालोकय, यदि शक्तोऽसि शस्तरयैरस्त्रचयैः शरशरासमुखनिरासकरैः प्रसभमभिविध्यन्तमिद्धतेजसं मामिन्धानगर्वान्ध निरुन्धि गुरुवर! तवाहमभिनवां कामपि तृणतामपदयायमुपदयामि, तदयि चिरन्तनीयं तृणता करतलादवमुच्यताम्'' इत्युच्चकैरुदीरयन्नुदीयमानादरमखिलसुधाशनान् वसुधासुधाशनान् गुरुजनमपि मनसायमानमन्नुभाभ्यां शराभ्यामापादितपादाभिवादनो विमतजनविषधरव्यथापादनकथाप्रसङ्गो गाङ्गायनिरमन्दरयेण भल्लतल्लजेनास्य कोदण्डकोटिमवखण्डयन् निशिततरशिखाज्वलितशिखिशिखान् नव विशिखानपि रथं प्रति रयातिशयधारयानीरयामास ॥

---

ब्राह्मण्यमित्यादि । आचार्यकम् आचार्यकर्म 'योपधाद्–' (पा० सू० ५-१-१३२) इति वुञ् । यौष्माकं युष्मदीयं, 'युष्मदस्मदोः' (पा० सू० ८-१-२०) इत्यण् । 'तस्मिन्नणि च–' (पा० सू० ४-३-२) इति युष्माकादेशः ॥ १५ ॥

तदित्यादि । कातरी कातर्यम् । चातुरी चातुर्यम् । मदद्रवणसम्पादि मदविलायनम् । भुजद्रविणं भुजबलम् । मामकीनाम्, 'युष्मदस्मदोः–' (पा० सू० ४-३-१) इति खञ् । 'तवकममकावेकवचने' (पा० सू० ४-३-३) इति युष्मदस्तवकादेशः । अपदय! निष्कृप । अभिनवां तृणतां धनुः, तृणत्वं च । लघुतामिति यावत् । अयं वाच्योऽर्थः । उपदयामि उपदां करोमि । चिरन्तनीयं तृणता पुराणं धनुः । विमतजना एव विषधराः तेषां व्यथापादने कथाप्रसङ्गः विषवैद्यः । ''स्नुहीदलफलो भल्लः'' (वैजयन्ती) ॥

ततो वातेरितैरेतैः प्रहितैः प्रहतो मुनिः।
रराज रक्तदिग्धाङ्गो गिरिर्गैरिकवानिव ॥ १६ ॥

कल्पान्तोद्भ्रान्तभास्वत्प्रकरपरिभवोद्रेकदानोद्भटोद्य-
दुर्मर्षामर्षवैश्वानरकपिशतराक्षिद्वयीदुर्निरीक्षः।
धृत्वा चापं महीभृन्निवहबृहदहङ्कारसंहारकारी
व्याकर्तुं बाहुवीर्यं तदिह स समनद्धाशु लब्धावकाशः ॥ १७ ॥

इत्थं बद्धाभियोगः स खलु मुनिरसन्दिग्धचेताः स भीष्मो-
ऽप्यन्योन्योत्पन्नवैरौ बत! दुरभिनिवेशेन काशीशपुत्र्याः।
मानेनाध्मायमानौ सकलजनसमुद्गीयमानापदानौ
तावेतौ व्योमवीथीमथ सपदि पुरा पत्रिपूरैः पिपूर्तः ॥ १८ ॥

इत्थमिन्धानरभसभरान्धमानसयोः स्फारतरगुणास्फालनदरा-ध्मापनरथोद्घोषणमुखघोरनिर्घोषोत्कम्पितसमस्तजनचित्तयोर्दीप्तिभरदी-प्यमाननिखिलदिशामुखान्निशातमुखान् विजयैकफलानपि विविधफ-लान्, स्निग्धानप्यस्निग्धान्, विस्मयप्रदानप्यविस्मयप्रदान्; विषोल्बणान्

---

तत इत्यादि। वातेरितत्वं प्रहतत्वे हेतुः। गैरिकं धातुविशेषः ॥ १६ ॥

कल्पान्त इत्यादि। प्रलये व्याकर्तुं स्फुटीकर्तुम्। समनद्ध सन्न-द्धोऽभूत् ॥ १७ ॥

इत्थमित्यादि। अभियोग उद्योग इति यावत्। आध्मायमानौ पूर्णौ। पुरा पिपूर्तः पूरितवन्तौ। 'पॄ पालनपूरणयोः' लुङः। 'अर्तिपिपर्त्योश्च' (पा० सू० ७-४-७७) इति श्लावभ्यासस्येत्वम्। 'उदोष्ठ्यपूर्वस्य' (पा० सू० ७-१-१०२) इत्युत्वं रपरम्। 'हलि च' (पा० सू० ८-२-७७) इति दीर्घः ॥ १८ ॥

इत्थमित्यादि। स्फारतरं भूरितरम्। दराध्मापनं शङ्खापूरणम्। विविधफलान् भल्लकर्णिप्रभृतीन्। स्निग्धान् तैलोद्दङ्कितान्। अस्निग्धान् रूक्षान्। अस्य विष्णोः विस्मयप्रदान्। विः गरुडः, तस्य स्मयं गर्वं प्रकर्षेण घ्नन्तीति

इषूत्करानप्रतिहतरयं प्रहरमाणयोरर्धमार्ग एव गर्धितजयं वर्धयमान-योर्जवभरजनितान्योन्यसङ्घर्षजज्ञन्यमानदहनदन्दह्यमानमहितत्रिशिख-विसरभसितहरिणीकृतरणाङ्गणयोः दुष्प्रयोगतरमहितदिव्यास्त्रचयसुप्र-योगचातुरीदर्शनचित्तीयमाणचित्तयोः तयोर्भृगुकुरुकुलप्रदीपयोः परि-जगदपरिलोकितचरभीषणतरप्रयोगविशेषदुर्निरीक्षं तत इतः परि-पतद्भिः अतिदीप्तिमद्भिः अतिमहितकालानलपोस्फुरत्स्फुलिङ्गलीलामनु-सरद्भिः शूलशरासतरवारिकरपालिकाभिण्डिपालचतुस्तालासिपुत्रिका-मुसलमुसृण्ठिमुद्गरतोमरपरिघपरश्वधप्रासपट्टसप्रायैरायुधगणैः अधिकभीषणं प्रयुङ्क्ष्व, अभियुङ्क्ष्व, विद्धोऽसि, बद्धोऽसि, याहि, समायाहि, हतोऽसि, प्रतिहतोऽसि, रक्ष,लक्षयेत्यादिकैः वीरजनमनःप्रमोदनैः समरसमयो-चितैरुदितैः उद्भटाभोगं गिरिगह्वरमिव महितसिंहनादं, दिवाकर-कुलमिव करालतरखट्वाङ्गसङ्गताभोगं, कान्तारमध्यमिव बहलशरभा-चितं दृश्यमानखड्गपरिविल्गनं च, लङ्कापुरमिव महितवीर्यविद्रावणम् अधिकविभीषणं च, महाकाव्यमिवाधिकवर्धितरसाञ्चितं प्रासविसरभास-मानं च, परिपक्वकणिशजालमिव प्रायोपविष्टपरीक्षित्, सन्निकृष्टमिव च

---

विसयप्रदाः, अर्थाञ्जवातिशयेन। गर्धितः काङ्क्षितः। 'गर्ध अभिकाङ्क्षायां' चुरादिः। वर्धमानयोः छिन्दतोः। 'वर्ध छेदनपूरणयोः' चुरादिः। अन्योन्य-सङ्घर्षः अन्योन्यसङ्घट्टनम्। हरिणीकृतं पाण्डरीकृतं, "हरिणः पाण्डरः पाण्डुः" इत्यमरः। चित्तीयमाणमाश्चर्यमनुभवत्। परिजगत् जगति। पोस्फुरत् पुनः-पुनरत्यर्थं स्फुरत्। तरवारिः असिः। शूलादयः पञ्चदश आयुधविशेषाः। दिवाकरकुलं सूर्यवंशः। खट्वाङ्गो नाम कश्चिद्राजा, परशुश्च। शरभैः अष्टपाद्भि-र्मृगविशेषैः। "शरभस्तु गजारातिरुत्पादश्चाष्टपादपि" इति वैजयन्ती। शराणां भया च। खड्गानां गण्डकानाम्, असीनां च। महितं वीर्यं विन्दतीति महित-वीर्यवित्। 'विदिर्लाभे' क्विप्। महितवीर्याणां विद्रावणं च। अधिकविभीषणं अधिक उत्कृष्टो विभीषणो यत्र, अधिकभयङ्करं च। अधिकवर्धितैः अधिकवृद्धैः। रसैः अङ्गाङ्गिभावेन वर्तमानैः नवरसैः; अधिकं वर्धितुं शीलमस्य अधिकवर्धि, तच्च तरः वेगश्च तेन। प्रासाः अनुप्रासाः, कुन्ताश्च। कणिशं सस्यमञ्जरी।

परिशोभमानपरशुकं, आपवावसथमिव कौळजनहृदयमिव च देद्युत्यमानशक्तिकं, विशिखाचितमप्यविशिखाचितं, शैखावत्यमुखैरखिलवैखानसैः कुरुवरपराजयोत्सुकिन्या काशीशकन्यया वाहिनेयगृह्यैरवनीसुरैरवनीवरैः तत्तदद्भुतावलोकजनिततत्तादृशहर्षवेगदत्तपुष्पवर्षैः निरन्तरनिवेशितविमानशतनिरवकाशिताकाशैः पुरन्दरादिवृन्दारकवृन्दैरपि अमन्दादरमभिनन्द्यमनं, प्रमोदनानामपि प्रमोदनं, विस्मयकराणामपि विस्मयकरं, श्लाघनीयानामपि श्लाघनीयं, भयावहानामपि भयावहम्, अनालक्षितचरम् अनाकर्णितचरम् अवाङ्मनसगोचरम् अनवसेयजयापजयं समरमिह सममेव समजरीजृम्भ्यत ॥

इत्थं चित्रीयमाणत्रिजगति महिते तत्र युद्धे प्रवृत्ते
तुल्यं तोष्टूयमाने प्रमदभरनिविष्टाशये वन्दिवृन्दे ।
सासूयं जामदग्न्यः सपदि शरवरेणैष घोरेण भीष्मं
रोषादव्याहतोष्मा विदयमुरसि विव्याथ दिव्यानुभावः ॥ १९॥

शरेण शितधारेण शतधारानुकारिणा ।
विद्धः क्षतजदिग्धोऽसौ पपात च मुमोह च ॥ २० ॥

---

सन्निकृष्टं समीपम् । पराः उत्कृष्टाः शुकाः, श्रीशुकश्च परशुश्च । आपवो वसिष्ठः । कौळजनाः कौळधर्मरताः । शक्तिर्वसिष्ठपुत्रर्षिः, कौळजनदैवतं च । विशिखैः शरैः आचितम् । अविशिखाभिः सूर्यरश्मिभिः अचितं च । विशिखैर्निरवकाशिताकाशत्वादचितत्वम् । वाहिनेयगृह्यैः भीष्मपक्ष्यैः । वाक् च मनश्च वाङ्मनसम् । अनवसेयौ अनिश्चेतव्यौ । अपजयः पराजयः । समजरीजृम्भ्यत अत्यर्थमवर्धत ॥

इत्थमित्यादि । तोष्टूयमाने पुनःपुनरत्यर्थं स्तूयमाने ॥ १९ ॥

शरेणेत्यादि । शतधारो वज्रः । दिग्धो लिप्तः ॥ २० ॥

तदनु दूनमानसेन सूतोरसेन सकलयन्तृकुलतन्त्रपारदृश्वना मातरिश्वजवपश्यतोहरैः अश्ववरैरुह्यमाने रथवरे किमपि दूरमपनीयमाने भागीरथेयममुं भयादपयातमेव मन्यमानेषु प्रमदभरवशंवदाशयेषु व्याकोशवदनकुशेशयेषु अकृतव्रणमुखेषु भृगुगृह्येषु मुनिमुख्येषु "हे भीष्म! वीराग्रतस्सर! पण्डिताग्रेसर! समयेऽस्मिन् कस्मादकस्मादपसृतोऽसि, प्रथनमुखपलायनप्रतिपादकमतिरहस्यं शास्त्रान्तरमद्य केन तावदध्यापितं, हन्त! बन्धनोद्योगः किमिह भवताभिवीक्षितः, रे रे धीरजनप्रौढमानिन्! मूढाग्रयायिन्! अत्र भुवनत्रये को नु खलु प्रदेशो निशिततरपरशुधारानधीनः, तत् त्वरिततरमुपगम्य काशीशकन्यकामुपयम्य कुरुवर! कुरु गुरुवरप्रसादम्" इत्थमिद्धहासमुच्चैर्भरितरसम् इह बहुधा परिहसनपरेषु निखिलपरिपन्थिजनबहुलकान्तारकल्पान्तबहुलः तत्क्षणमेव लब्धसंज्ञः स खलु कुरुकुलोत्तंसः सत्वरमनुपलब्धचरपरिभवोपलब्धिपरिवरीवृध्यमानरभसभरवरीवृत्यमानरक्तिमोद्रेकदेद्युत्यमानमूर्तिः उत्थायोद्धतभुजगोत्तमभोगाभोगभाजं विहिताहितजनतापभरं चापवरमुद्धुराटोपमुद्धरन् उद्धतसिंहारवमुखरितहरिन्मुखो भृशमुन्मनायमानरथ्यसारथिकेन रथेन रभसभरदेदीप्यमानफालानलकीलावलिव्यतिकरजाज्वल्यमानशिखरिप्रकाण्डकोदण्डमण्डितोद्दण्डदोर्दण्डप्रचण्डरूपः त्रिपुरान्तिकमन्तकान्तक इव, रामान्तिकमतर्कितनिजेक्षणत्रस्तसमस्तमुनिवरस्तोममुपगम्य "भो वीर! जितकाशिन्!

---

तदन्वित्यादि। सूतोरसेन सारथिश्रेष्ठेन। यन्तृकुलतन्त्रं सारथिसिद्धान्तः। मुनिमुख्येषु परिहसत्सु परिहसनपरेष्विति 'यस्य च भावेन—' (पा० सू० २-३-३७) इति सप्तमी। अकस्माद् अकाण्डे। बन्धनोद्योगः बन्धनायोद्योगः। 'पलायनाद्वधः श्रेयान् बन्धे प्राप्ते पलायनम्'। कल्पान्तबहुलः प्रलयकालाग्निः। "बहुलः कृत्तिका गावो बहुलोऽग्नौ शितौ त्रिषु" इत्यमरः। संज्ञा चेतना। रक्तिमोद्रेकः रागातिशयः। उन्मनायमानाः युद्धोत्सुकाः रथ्याः सारथिश्च यस्य। शिखरिप्रकाण्डं मेरुः। जितकाशिन्! जयेन शोभमान।

पश्योन्मूलितनरेन्द्रकुलानुभावस्य युधि विलसतस्तवोद्धतं दर्पविषमद्य एवाहमुद्धरामी"ति परुषमाभाषमाणो बाणैरतिनिशितधारैः अपारैः अमुमपारीत् ॥

अमर्षेणाभिभूतात्मा दुर्मर्षेणाथ भार्गवः।
बाणैर्विदलयन् बाणान् बाणीमिति बभाण च ॥ २१ ॥

त्वत्कं भीष्म! शतं सहस्रमयुतं लक्षं च वा न क्षमं
स्थातुं मे पुरतः परं क्षणमपि क्रोधाभिभूतात्मनः।
एकस्त्वं बत! मां समस्तवसुधानाथान्ववायान्तकं
दुर्दान्ताभिबुभूषसीह तदिदं हाहन्त! हास्यं न किम् ॥ २२ ॥

भ्रूणघ्नी पुंश्चली च प्रकृतिजलमयी यस्य तावत् सवित्री
यस्यासीद्धीवरीशः क्षितिभृदपि पिता स प्रतीपात्मजन्मा।
यो वा श्लाघ्येऽप्युदास्ते जगदवनमये धर्मरूपेऽपि कर्म-
ण्युत्सर्पद्दर्पभारोद्धुतगुरुवचसस्तस्य ते शस्यते किम् ॥ २३ ॥

---

युधि विलसतः तव, सर्पस्येत्यपि स्फुरति। नरेन्द्रो विषवैद्यश्च। अपारीत्, 'पॄ पालनपूरणयोः'। 'सिचि वृद्धिः—' (पा० सू० ७-२-१) इति वृद्धिः ॥

अमर्षेणेत्यादि। बभाण उक्तवान् ॥ २१ ॥

त्वत्कमित्यादि। भीष्म! त्वत्कं त्वदीयमिति यावत्। 'स एषां ग्रामणीः' (पा० सू० ५-२-७८) इति कः। दुर्दान्त! दुर्विनीत। अभिबुभूषसि अभिभवितुमिच्छसि ॥ २२ ॥

भ्रूणेत्यादि। भ्रूणो गर्भः। पुंश्चली पुंसि चलतीति पुंश्चली। प्रकृति-जळमयी स्वतो जळरूपिणी, जलस्वरूपिणी च। सवित्री माता। धीवरी दाशस्त्री। प्रतीपः, विरुद्ध इत्यपि स्फुरति। उदास्ते उदासीनो भवति। उद्धुतं उल्लङ्घितम्। शस्यते प्रशस्यते ॥ २३ ॥

भीरो! वीरो यदि बत! ततो गायकानां निहीनाद्
घातं भ्रातुः कथमसहथा वीर्यचर्याविहीनात् ।
धर्मत्यागाद् भयत इति चेदन्यसक्ताशयायाः
प्रागम्बाया हरणसमये तत् पुनः कुत्र यातम् ॥ २४ ॥

माद्यन्माहिष्मतीशक्षितिपसमुपदिष्टक्ष्मापालपाली-
रक्तस्वादेन कृत्तः सपदि परशुना निष्पतन् जन्यभूमौ ।
भीष्मातिस्थूलवर्ष्मन्नियतमिह कणेहत्य दिग्धास्रपङ्कः
कङ्कैः काकैः करङ्कैषिभिरपि भषकैर्न्यक्षतो भक्ष्यसे त्वम् ॥ २५ ॥

श्रुत्वा स भीष्मोऽपि वचः सुदुःश्रवं
तत्तादृशक्रोधवशाशयोऽभ्यधात् ।
वाचाल! केयं तव वाग्विभीषिका
वीरा विवृण्वन्ति हि पौरुषं निजम् ॥ २६ ॥

---

भीरो इत्यादि। गायकानां गन्धर्वाणाम्। निहीनात् निकृष्टात्। घातं वधम् ॥ २४ ॥

माद्यदित्यादि। माहिष्मतीशः कार्तवीर्यः। स्वादेन आस्वादेन। कणेहत्य भक्ष्यसे श्रद्धाप्रतीघातावधि भक्ष्यसे इति यावत्। 'कणेमनसी—' (पा० सू० १-४-६६) इति गतिसंज्ञायां, 'कुगति—' (पा० सू० २-२-१८) इति समासः। ल्यप्। करङ्कं शवशरीरमित्यर्थः। ''करङ्कोऽप्यस्थिपञ्जरम्'' इति वैजयन्ती। भषकैः श्वभिः। न्यक्षतः कार्त्स्न्येन ॥ २५ ॥

श्रुत्वेत्यादि। वाचाल!, यस्तु कुत्सितं बहु भाषते स वाचालो वाचाटश्च। 'आलजाटचौ बहुभाषिणि' (पा० सू० ५-२-१२५) इत्यालच्। वाग्विभीषिका वाचा भयोत्पादनम् ॥ २६ ॥

आ! ज्ञातं ननु मोघमेव निजबाणौघं विभाव्येदृशै-
र्वाग्बाणैः प्रहरस्यहो! जळमते! किं तेन मे हीयते ।
इत्थं वीरशिखामणिः परिहसन् निर्भीतिरभ्येत्य तं
तूर्णं भार्गवमूर्णुनाव सरथं व्यालोल्बणैर्मार्गणैः ॥ २७ ॥

क्षुन्दानं बाणवृन्दैः सपदि निजमिषुव्रातमिन्धानरोषा-
दन्ध! त्वं मृत्युनास्तोऽप्यभिपतसि तमेवेति गाढं हसन्तम् ।
निध्यायन् जामदग्न्यं निरतिशयरुषा गर्वनिर्वापणैषी
प्राहैषीदेष तीक्ष्णं कमपि खगमपास्तोरुदम्भोळिदम्भम् ॥ २८ ॥

तदनु महितावधानं प्रहितेऽस्मिन्नधिकभीषणे विहतदूषणे खरान्ते नितान्तरये रचितरिपुगणप्राणमार्गणे महामार्गणे रामसायक इव सालसप्तकं स्फुटतरकिणगणस्थपुटितमतिपृथुलमुरस्थलमस्य निर्भरतरं निर्भिद्य क्षतजपरिक्षालनाय कारणजलमवगाहितुमिव तरसा रसामपि निर्विदार्य निर्जिहाने, स जमदग्निनन्दनो निरन्तरनिस्सृतविस्तृतास्त्र-प्रवाहपरिप्लुतापघनो घनतरशरवेधवेदनाजनितमोहवेगशिथिलीकृत-निखिलावयवो दरपलितपक्ष्मोदरनिलीनकनीनिकविलोचनयुगविनि-स्सृताश्रुलेशः क्षपितपक्षः क्षमाधर इव संभ्रमाकुलसकलजनवदनोदीय-मानहाहारवमुखरितहरिन्मुखमवनाववशमवपपात ॥

---

आ ज्ञातमित्यादि । आ इति स्मृतौ । ऊर्णुनाव छादितवान् । 'ऊर्णुञ् छादने' ॥ २७ ॥

क्षुन्दानमित्यादि । तिलशः खण्डयन्तम् । अन्ध! अज्ञ । अस्तः त्यक्तोऽपि । तमेव मृत्युमेव । निध्यायन् पश्यन् । गर्वस्य निर्वापणैषी शमनैषी । प्राहैषीत् प्रहितवान् । खगं शरम् । दम्भोलेः वज्रस्य ॥ २८ ॥

तदन्वित्यादि । दूषणो दोषः, राक्षसश्च । खरस्तीक्ष्णो, राक्षसश्च । अन्तोऽग्रं, नाशश्च । स्थपुटितं स्थपुटं कृतं, "स्थपुटं विषमोन्नतम्" इति वैजयन्ती । रसां भूमिम् । निर्जिहाने निर्गच्छति । अपघनोऽङ्गम् । दरम् ईषत् ॥

इत्थं पृथ्वीतलेऽस्मिन् सपदि निपतिते मोहिते वाहिनेयः
सोऽयं शोकानुकम्पाद्रुततरहृदयो हन्त! धिक् क्षात्रमेतत् ।
स्थास्नुर्यस्मिन् गुरुं मे द्विजवरममितब्रह्मतेजोनिधानं
बाणेनैवं बतापातयमपद्यमित्याकुलात्मा व्यलापीत् ॥ २९ ॥

अकृतव्रणमुखमुनिपुङ्गवास्तु सकलरिपुकुलप्रमथनं प्रमथनाथ-प्रथमान्तेवासिनं भृगुपतिं प्रधनभुवि परिपतितमालोक्य पृथुलतरशोक-विवशतरचेतसो निरतिशयवैवश्यया काशीशकन्यया सह सहसोपसृत्य "हा! मुनिसत्तम! सत्यसन्ध! कथमनन्यनाथानस्मान् अपाराधिभार-पारावारान्तरपास्तसौहृदमवपात्य कदाचिदप्यरहितां महितां दयामपि दूरतोऽपास्य त्वमेक एव बत! गतोऽसि, अखिलभुवनाभयार्पणस्थूल-लक्षस्याक्षतानुभावस्य ते कथमापदियमापतिता, किं वा न करोति दैवदुर्विपाकः, समाश्रितजनवत्सल! समाश्वसिहि समाश्वसिहि, निहत-निखिलनृपचमूस्त्वममूरमून् व्यसनभरमसनतरमानसान् नः कृपासार-सार्द्रया दृशा सकृदपि सुखापय" विविधमिति विलपन्तो बद्धादरमुद्धृत्य युद्धाजिरादपनीय स्वप्राणभोगार्पणेनाप्युज्जीवयितुं सज्जचेतस इव मृदुमृदु समाश्लिष्यन्तो जलार्द्रेण भुजाग्रेण निखिलावयवेषु समास्पृशन्तः शिशिरतरैः शीकरोत्करैः अक्षतादरमुक्षन्तः "जय जय हेहयकुलप्रमथन-प्रथितापदान भृगूत्तम! जवादुत्तिष्ठोत्तिष्ठ" इत्यादिकामाशिषमञ्जसा प्रयुञ्जानाश्च निखिलभुवनाश्रयभूतमेनमाश्वासयामासुः ॥

---

इत्थमित्यादि । द्रुततरम् अत्यर्थमार्द्रम् । स्थास्नुः स्थितिशीलः । 'ग्लाजि-स्थश्च क्स्नुः' (पा० सू० ३-२-१३९) इति क्स्नुः । व्यलापीत् विलपितवान् ॥२९॥

अकृतेत्यादि । पारावारान्तः समुद्रान्तर्भागे । स्थूललक्षो बहुप्रदः । समाश्वसिहि, 'रुदादिभ्यः—' (पा० सू० ७-२-७६) इतीट् । मूः मूर्च्छितः तस्मादन्यः अमूः, 'मूर्च्छा मोहसमुच्छ्राययोः', 'राल्लोपः' (पा० सू० ६-४-२१) इति क्विपि छलोपः, 'र्वोरुपधायाः—' (पा० सू० ८-२-७६) इति दीर्घः । अमून् नः । मसनतरं मलिनतरम् । सार्द्रया आर्द्रया । सुखापय सुखितान् कुरु । उक्षन्तः सिञ्चन्तः । आश्वासयामासुः आश्वस्तमकुर्वन् ॥

तदनु पुरहरान्तेवसन्नसौ यातबाधः सपदि जातबोधः तेषां तोषेण सह सहसा समुत्थाय निष्प्रतिघातनिष्पन्नाप्रतिमप्रतिघभारोद्वृत्तविवृत्तरक्ततरनेत्रयुगलः क्वासौ क्वासाविति दिक्षु च विदिक्षु च दिधक्षुरिव वीक्षमाणः प्रसन्नहृदयेनाकृतव्रणेन कृतसन्नाहमसन्नवाहं महिताङ्गं शताङ्गमूढमानमधिरूढः कटुतरकल्पान्तघनघटारटितघनतरे मदसंहारकसिंहारवस्फुटितभुवनकटाहः घोरतरधनुर्घोषेण गम्भीरतरकम्बुनिध्वानेन च ककुभां कदम्बमभिपूरयन् झटिति भुवनत्रयमपि भसीचिकीर्षुः सङ्कर्षणमुखसमुत्त्रौकमाणो वीतिहोत्र इव, खरतरनखरकोटिशतकोटिभिर्हिरण्यकशिपुवक्षःपीठिकां पिपाटयिषुः स्तम्भात् संभृतक्रोधमुज्जृम्भमाणो नृसिंह इव, निखिलब्रह्माण्डषण्डमह्नाय सञ्जिहीर्षुः समस्तोपमानवस्तुसार्थाट्टतराट्टहासमाविर्भवन् साक्षात् संहाररुद्र इव च घोरघोराकृतिः सत्वरं भीष्मममुमभिपत्य "वीर जितकाशिन्! युद्धाध्वरेषु पुरा परावरान् धरावरपुरोडाशनिवहानक्षताशं भक्षितवतो ममामर्षबर्हिषः किमेकाप्याहुतिर्भवति भवान्। हन्त! क्षत्रकुलोद्भवोऽपि निखिलक्षत्रकुलोन्मूलनोन्मिषदनल्पदर्पोद्धतस्य पुरहरान्तेवसतो भुजप्रकाण्डमिदं मृग इव मृगाधिराजं मृगयते। नियतमनियता वर्तेषा कालगतिः। शठ! मूढ! वीरविसरप्रौढमानिन्! क्षणमिह तिष्ठ तिष्ठ। वचसा किम्। अखिलमपि दर्शयिष्यामी"ति रूक्षतरमाचक्षाणो विपाटितमहितमाठीभिर्विपाठघाटीभिरधिकतरोत्सेकममुमरौत्सीत्॥

---

तदन्वित्यादि। शताङ्गं रथम्। भसीचिकीर्षुः भसीकर्तुमिच्छुः। समुत्त्रौकमाणः समुद्गच्छन्। वीतहोत्रोऽग्निः। पिपाटयिषुः पाटयितुमिच्छुः। सञ्जिहीर्षुः संहर्तुमिच्छुः। उपमानसार्थाट्टतरः उपमानसार्थम् अतिशयेनातिक्रान्तः। 'अट्ट अतिक्रमहिंसयोः'। जितकाशिन्! जयेन शोभमान। "जितकाशी जितरणः" इति वैजयन्ती। परा अवराश्च परावराः। धरावरा राजानः, त एव पुरोडाशाः। "माठिः स्त्री जागरो वक्षश्छदः सन्नाहकङ्कटौ" इति वैजयन्ती। घाटी समूहः। अरौत्सीद् रुद्धवान्॥

ततश्च;

यद् युक्तं विश्रुताया जगति भगवतो धूर्जटेः शिष्यताया
यद् युक्तं श्लाघ्यतायाः सुरवरपृतनाधीशसातीर्थ्यतायाः ।
यद् युक्तं दक्षताया महितबलमहीभृज्जयाभ्यासजाया
वर्यं तद् बाहुवीर्यं प्रकटितममुना वैरिवारैरवार्यम् ॥ ३० ॥

विशिखशतैरधिकशितैर्वचनशतैरपि च समिति परुषतरैः ।
प्रसभं तं प्रहरन्तं रभसभरादुदगिरद् गिरं भीष्मः ॥ ३१ ॥

रे रे तापसकात्तवीर्यमद! नो कार्तवीर्योऽस्म्यहं
नो वा सा नृपसंहतिर्न जननी ते रेणुकानामिका ।
भीष्मोऽहं द्युनदीसुतः पुररिपोः साक्षात् प्रशिष्यो वशी
व्यामुक्तामलधर्मनामकमहावर्मास्मि निर्मायधीः ॥ ३२ ॥

नूनमक्रममेवैवमाक्राम्यत्सु सुदुस्सहम् ।
रोरुष्येत स्वशिष्योऽपि तद्भार्गव! विमृश्यताम् ॥ ३३ ॥

---

ततश्च ॥

यदित्यादि । समानगुरौ वासी सतीर्थ्यः । 'समानतीर्थे वासी' (पा० सू० ४-४-१०७) इति यत । 'तीर्थे ये' (पा० सू० ६-३-८७) इति समानस्य सभावः, तस्य भावः सातीर्थ्यं, ब्राह्मणादित्वाद् ष्यञ् । 'हलः—' (पा० सू० ६-४-१५०) इति यलोपः ॥ ३० ॥

विशिखेत्यादि । समिति युद्धे । उदगिरद् उद्गीर्णवान्, उक्तवानित्यर्थः ॥ ३१ ॥

रे इत्यादि । तापसक! कुत्सिततापस । 'कुत्सिते' (पा०सू० ५-३-७४) इति कः । आत्तवीर्यमदः वीर्यमदसहित इति यावत् । रेणुकानामिका, 'प्रत्ययस्थात्—' (पा० सू० ७-३-४४) इतीकारः । प्रशिष्यः शिष्यस्य शिष्यः । वशी जितेन्द्रियः ॥ ३२ ॥

नूनमित्यादि । रोरुष्येत अत्यर्थं रुष्येत् ॥ ३३ ॥

उद्योगस्ते तीरदेशाक्रमेच्छो-
रुद्दामस्य क्षीरराशेरिवायम् ।
इत्युक्त्वासौ स्यन्दनं वाजिनो वा
बाणव्रातैरस्तरिष्टास्तरिष्टः ॥ ३४ ॥

भूयश्शीघ्रास्त्राभिधानं महास्त्रं
भूयः शीघ्रं प्राहिणोद् भार्गवोऽसौ ।
शोचिष्केशप्रख्यमेनं न्यरौत्सीद्
भीष्मोऽप्येष प्रक्षिपन्नेतदेव ॥ ३५ ॥

ततः सुतुमुले भृशमुग्रतरे विग्रहे जाग्रत्युदग्रवीर्येणोग्रशिष्येण प्रहितानि महितानि तानि तानि रहस्यतराणि दिव्यास्त्राणि तैस्तैरेव भरतवरोऽयमवरत ॥

दिव्यास्त्रेष्वथ तेषु तेषु विहतेष्वादाय शक्ती रुषा
रामोऽसौ सहसा निरास महसा निर्धूतसप्तार्चिषः ।
गाङ्गेयस्तरसा शरावरवरेणावारयन्नग्रियो
वीराणामसिना समानमलुनादेनाः समानाकुलः ॥ ३६ ॥

---

**उद्योग** इत्यादि । क्षीरराशेः जलधेः । अस्तरिष्ट छादितवान् । 'स्तॄ छादने' । रिष्टं अशुभम् । ''रिष्टं क्षेमाशुभाभावेषु'' इत्यमरः ॥ ३४ ॥

**भूय** इत्यादि । भूयः भूयिष्ठम् । भूयः पुनः । शोचिष्केशः अग्निः । एतदेव शीघ्रास्त्रमेव ॥ ३५ ॥

**तत** इत्यादि । जाग्रति प्रकाशमाने । उग्रः शिवः । अवरत, 'वृञ् आवरणे' । 'आ धृषाद्वा' (ग० सू०) इति विकल्पितणिच्कः । ''वृञ आवरणे वा णौ वारयेद्वरते वरेत्'' इति दैवे ॥

**दिव्ये**त्यादि । शक्तीः आयुधविशेषान् । निरास प्रहितवान् । शरावरवरेण फलकश्रेष्ठेन । समानं सहैव । अलुनात् खण्डितवान् । एनाः शक्तीः ॥ ३६ ॥

शक्त्या मुक्ताः स्वशक्तीः सपदि शकलिता वीक्ष्य दुर्मर्षरोषे
भीमं दिव्यास्त्रमेकं क्षिपति भृगुपतौ तन्मुखादुत्पतन्तः ।
क्षोणीरन्ध्रात् पतङ्गा इव विशिखनिकाया निशाताः शताङ्गं
केतुं चापं च सञ्चुक्षिदिर इह रयाद् भैष्मकानूष्मलास्ते ॥ ३७ ॥

सन्नह्य जाह्नवेयोऽयं रथं शरवरैरथ ।
तूर्णमेवोर्णुनावैनं घूर्णमानमना रुषा ॥ ३८ ॥

रोषान्धो भार्गवोऽथ द्रुतमयमिषुणा हैहयाधीशहन्ता
यन्तारं हन्त! हत्वा त्रिपुरहरमहा बृंहयन् सिंहनादम् ।
तूणादुद्धृत्य तूर्णं कलितरयभरं कालकल्पं पृषत्कं
किञ्चित्संभ्रान्तबुद्धेरुरसि कुरुपतेरस्य मानी न्यखानीत् ॥ ३९ ॥

प्रदरप्रवरेणैष भरतप्रवरो हतः ।
विच्छायन् महतीं मूर्च्छां विच्छायो निपपात च ॥ ४० ॥

भृगुपतिरथ मत्वा भीष्ममेतं परेतं
विधुतनिजनिदेशं जृम्भमाणाभिमानम् ।
प्रमदभरपरीतः काशिनाथस्य पुत्र्या
सह च मुनिवृषैस्तैरेष नानद्यते स्म ॥ ४१ ॥

---

शक्त्येत्यादि । शकलिताः खण्डिताः । पतङ्गाः शलभाः । सञ्चुक्षुदिरे पिष्टवन्तः । भैष्मकान् भीष्मसम्बन्धिनः ॥ ३७ ॥

सन्नह्येत्यादि । योजयित्वेत्यर्थः । ऊर्णुनाव छादितवान् ॥ ३८ ॥

रोषेत्यादि । बृंहयन् वर्धयन् । न्यखानीद् निखातवान् ॥ ३९ ॥

प्रदरेत्यादि । प्रदरो वाणः । "प्रदरा भङ्गनारीरुग्बाणाः" इत्यमरः । विच्छायन् प्राप्नुवन् । मूर्च्छां मोहम् । विच्छायः शोभाहीनः ॥ ४० ॥

भृगुपतिरित्यादि । परेतं मृतम् । नानद्यते स्म अत्यर्थं ननाद ॥४१॥

अनन्तरमह्वाय जाह्नवेयोऽयं निजपतनविलोकनविसृत्वरविषादभरविहस्तचित्तैरखिलैरवनीवरैः अवनीसुरैस्तपोधनैः पुरोधोभिरन्यैरपि दिदृक्षुजनैरक्षामसौहृदैः ससंभ्रममुपगम्योपचितप्रणयमाश्वास्यमानोऽप्यश्रन्थितमोहबन्धः स्वप्नदशायामिव भरितवेगमुपगम्य परितःस्थितेषु द्युतिभरविजितवीतिहोत्रेषु अविदितगोत्रेषु विशिष्टतरेषु अष्टसु द्विजवरिष्ठेषु कृपारसभरितात्मकेषु आत्मानमधिकशिशिरैः शीकरैरमृतकणकल्पैरक्षतप्रणयमभ्युक्ष्य 'वत्स मा बिभेहि! वयमेव सदा तवावलम्बनम्। नाशमेतु बत! शोकवेगः। स्वस्ति तेऽस्तु सततं, स्वस्तितेऽस्तु।' इति मधुरससमधुरया स्वरसमधुरया गिरा समाश्वास्य तरसा तिरोहितेषु सहसा रहितमोहः समुत्थाय सम्मदोल्लाससंफुल्लवदनसरोरुहैः स्वजननिवहैरक्षीणकुतुकमीक्ष्यमाणो निहतसारथिकं निजरथं सनाथयन्तीं वाहाग्रकलितप्रग्रहां वाहिनीवरामखिललोकजननीं निजजननीमवलोकयन्नधिकमोदविवशचेताः तन्निदेशादमुं रथप्रौढमधिरूढस्तत्पदारविन्दयोरमन्दादरमवन्दिष्ट ॥

दृष्ट्वा पदान्तपतितं तनयं परेतो
जातोऽसि हन्त! तनयेति मुदा वदन्ती।
उत्थाप्य सा तु शिरसि प्रणयातिभारा-
दाघ्राय नेत्रसलिलैरमुमभ्यषिञ्चत् ॥ ४२ ॥

ननु जननि! जनोऽयं त्वत्पदाम्भोजपांसु-
प्रसरगतिरितीमं भक्तिभाराद् वदन्तम्।
जयमिह युधि नूनं वत्स! हे लप्स्यसे स्रा-
गिति सुतमनुगृह्य स्वैरमेषाथ याता ॥ ४३ ॥

---

अनन्तरमित्यादि। विसृत्वरः विसरणशील। अश्रन्थितः अशिथिलः। गोत्रं नाम। मा बिभेहि मा भैः। मधुरसेन सदृशमधुरया। स्वरसमधुरया स्वतः मधुरया। वाहिनीवरां गङ्गाम्। अवन्दिष्ट वन्दितवान् ॥

दृष्ट्वेत्यादि। परेतो जातः मृतः पुनरुत्पन्नः ॥ ४२ ॥

नन्वित्यादि। हे अयि!। स्राग् झटिति ॥ ४३ ॥

तदनु जाह्नवीनन्दनोऽयमह्नाय वैरिविजयालंकर्मीणं कमपि कार्मुकोद्धमिद्धमदमुद्धरन् प्रसभोदितरभसभरानवकटविकटभ्रूलताक्षेप-दुष्प्रेक्ष्यमुखः स्वयंप्रगृहीतप्रग्रहो निजनिपतननिरीक्षणनिरित्वरमोदभर-भरिताशयैः सकलपरिजनैः परिवार्यमाणम् अखिलपरजनैरवार्यमाणं विजयपरिशोभमानवदनाभिरामं परशुरामं भुवनैकविक्रान्तममुमभिक्रम्य तुलितवातन्धयवरेण वैरिवारान्तकरेण बाणान्तरेण वाहान्तरे कठिन-तरकिणनिचयनिरन्तरे निचखान ॥

अथ घोरमारुतपेचकारुतफेरवारवपरिधिमुखैरतिभैरवैरजन्यै रोदो-जन्यैरधिकभीषणायां जन्यभुवि भृगूद्वहो निशाततरशरनिखातवेद-नातिशयविमोहिताशयोऽयमशनिहतमहितमहीरुहवदशनैरवशमतिर्बहुशो विहितमहीपतिकुलावपातो बत! पपात ॥

अकृतव्रणमुख्यैः स्राक् कृतव्रणविरोपणः ।
समुत् स च समुत्तस्थौ समुत्सुकमना युधि ॥ ४४ ॥

अनयोर्मानधनयोरायोधनमथाधिकम् ।
उद्यदुद्दामरभसं सद्य एवोदपद्यत ॥ ४५ ॥

---

तदन्वित्यादि । कर्मणेऽलं शक्तं अलंकर्मीणम् । अवकटा अवनता, तस्या अन्या अनवकटा ऋज्वी । 'अवात्कुटारच' (पा० सू० ५-२-३०) इति चकारात् कटच् । स्वयंप्रगृहीतः आत्मनैव गृहीतः । 'स्वयं क्तेन' (पा० सू० २-१-२५) इति समासः । अभिक्रम्य, "रणे यानमभिक्रमः" इत्यमरः । वातन्धयः अहिः । 'नाडीमुष्टयोश्च' (पा० सू० ३-२-३०) इत्यत्रानुक्तसमुच्चयार्थचकारात् खश् । वाहान्तरे वक्षसि । निचखान निखातवान् ॥

अथेत्यादि । पेचकारुतं उलूकरवः । फेरवः क्रोष्टा । परिधिः परिवेषः । अजन्यैः उत्पातैः । "अजन्यं क्लीब उत्पातः" इत्यमरः । रोदोजन्यैः द्यावा-पृथिव्योरुत्पन्नैः । निखातवेदना निखननपीडा । अशनिहतः वज्रेण छिन्नः ॥

अकृतेत्यादि । कृतव्रणविरोपणः कृतव्रणापनयनः ॥ ४४ ॥

अनयोरित्यादि । आयोधनं युद्धम् । उदपद्यत उत्पन्नम् ॥ ४५ ॥

इत्थमुद्धततरमद्धा युद्ध्यमानयोरेतयोः कलम्बवरकदम्बनिकुम्बिताम्बरतया दुर्दिनायितेष्वधिकविंशेषु वासरेषु व्यतीतेषु परेद्युः सोऽयमापगेयस्तु सायं पुरोवदेव साम्परायान्निवृत्य निर्वर्तितनिखिलसामयिककृत्यो दुर्वारतररामदोर्विक्रमानुसरणविषण्णचेताः शयनतले निषण्णो द्विजवृन्दारकानखिलवृन्दारकवरान् निखिलपितृगणान् सकलभूतविसरान् वासतेयीमपि सबहुमानमानम्य निभृतमिति निरूपयामास—

हन्त! क्षत्रकुलान्तकेन मुनिना युद्धं बतेदं मया
प्रारब्धं गुरुणा दुरन्तमिह को जेतास्य शौर्याम्बुधेः ।
जेतव्यो युधि भार्गवो यदि मम स्फायत्तपस्याबलः
स्वप्ने मे तदुपायसारमनुगृह्णन्तु स्फुटं देवताः ॥ ४६ ॥

इति साभ्यर्थनं निर्भरतरभक्तिरसार्द्रया धिया विमृश्य प्रभात इव पार्श्वेनापसव्येनाधिशय्यास्मिन् प्रसुप्ते प्रथमदृष्टास्त एवाष्टौ प्रणयपुष्टाशया विप्रवराः क्षिप्रमाविर्भूय "वत्स! सत्पथैषिन्! मा विषीद । त्वद्बान्धवा वयमेव भवन्तमविरतमवितास्मः । धर्मैकनिष्ठ! भृगुकुलश्रेष्ठममुमधृष्यतेजसमपि विजेष्यसे । विनैव हिंसया विजयावहेनास्मदनुग्रहात्

---

इत्थमित्यादि । कलम्बवरा बाणश्रेष्ठाः । निकुम्बितं छादितम् । दुर्दिनायितेषु दुर्दिनं कुर्वत्सु । "सुदिनदुर्दिननीहारेभ्यश्चेति वक्तव्यम्" (वा०) इति क्यङ् । अधिकविंशेषु एकाधिकविंशतिसंख्येष्वित्यर्थः । 'संख्ययाव्यय—' (पा० सू० २-२-२५) इत्यादिना समासः । परेद्युः परेह्नि । साम्परायाद् युद्धात् । समयः प्राप्त एषामिति सामायिकानि । वृन्दारकवरान् देवश्रेष्ठान् । वासतेयीं रात्रिम् । "शर्वरी वासतेय्युषा" इति वैजयन्ती ॥

हन्तेत्यादि । खेदे । स्फायद् वर्धमानं तपस्याबलं यस्य । तदुपायसारं तस्य श्रेष्ठं जयोपायम् ॥ ४६ ॥

इतीत्यादि । अपसव्येन दक्षिणेन । प्रसुप्ते निद्राणे । वर्तमाने क्तः । सत्पथैषिन्! सन्मार्गगामिन् । अवितास्मः पालयितास्मः । विजेष्यसे जेष्यसि ।

स्मृतिपदमापात्येन प्राजापत्येन जामदग्न्याविदितेन प्रस्वापनाभिधेन महास्त्रेणास्मिन् महाहवे प्रस्वापयैनम् । पुनः प्रबोधनास्त्रप्रभावेण प्रबोधय च । कुत्रापि भवतः पराजयो न भवतात्" इत्येनमनुगृह्य तरसा तिरोधानमादधुः ॥

तत्क्षणमेव प्रभातायां विभावर्याम् उत्तालसम्मदोत्तरलचित्तेन कुरुकुलोत्तमेनोत्थाय कृतनियमेनोच्चैजितशरवरोद्भ्रेजितशरधियुगोड्डा-मरेणोच्चण्डकोदण्डोद्दण्डदोर्दण्डप्रकाण्डेन सत्वरमुपेत्य पुरोवद्देवापादित-पादाभिवादनेन गुरूपासनातिकुशलेनानेनाशु विषोल्बणैराशुगवृषोत्करै-रिद्धाधिकप्रतिघमखिलप्रतीकेषु विद्धो भृगूत्तमः शल्यप्रवराकारप्रकार-मयमनायि ॥

सद्यः प्रोद्यत्प्रथीयःप्रतिघभृशतराध्मातधीर्भार्गवोऽथ
क्ष्माभृद्वृन्दिष्ठगोष्ठीविमथनविधिकण्ठोक्तकुण्ठेतरौजाः ।
शक्त्या कार्तान्तदण्डप्रवरसमितया ज्वाललेलिह्यमान-
व्योम्ना धाम्ना प्रदीप्तो भुजशिरसि स तं विद्धवानिद्धवेगम् ॥४७॥

---

'विपराभ्यां–' (पा० सू० १-३-१९) इति तङ् । आपात्येन आपतता । 'भव्यगेय–' (पा० सू० ३-४-६८) इति कर्तरि निपातः । प्राजापत्येन प्रजापतिदेवताकेन ॥

तत्क्षणमित्यादि । उत्तालः उन्नतः । उद्भ्रेजितं शोभितम् । गुरोरुपासने सेवने, गुरु चैतदुपासनं चेत्यपि । "शराभ्यास उपासनम्" इत्यमरः । अखिलप्रतीकेषु सर्वावयवेषु । शल्यः, "श्वावित्तु शल्यः" इत्यमरः । प्रकारं सादृश्यम् ।

सद्य इत्यादि । क्ष्माभृद्वृन्दिष्ठा अतिशयेन श्रेष्ठा राजानः । 'प्रियस्थिर–' (पा० सू० ६-४-१५७) इत्यादिनेष्ठनि वृन्दादेशः । कार्तान्तः कृतान्तसम्बन्धी । भुजशिरसि स्कन्धे ॥ ४७ ॥

विश्वोत्कृष्टप्रतापप्रलयहुतवहप्लुष्टविश्वारिवर्गो
निर्यन्निस्सीमरक्तप्रकरपरिलसद्विग्रहो भार्गवस्य।
कोपान्धः फालदेशं प्रति निशिततरं कालदेश्यं स मौर्वी-
माकृष्याकर्णमाशु प्रवरमथ शरं प्राहिणोद्गाहिनेयः ॥ ४८ ॥

अस्याथो वत्सदेशे प्रहितवति रुषा भार्गवे मार्गणाग्र्यं
सोऽपि क्रोधात् तदीये न्यखनदतिघने वत्सदेशे जवेन।
शक्तिं प्रोद्दामधामप्रधुतशिखिशिखां प्रोद्धतारातिसार्थ-
प्रोत्सर्पद्दर्पहालाहलविनियमने कालकालायमानः ॥ ४९ ॥

श्लाघ्यामाज्ञां गुरोर्मे वितनु तनुमते! नीच! नो चेन्निमेषा-
दस्यामुष्यामिषत्वं युधि नियतमिषोरेष एषिष्यसे त्वम्।
इत्युक्त्वा भार्गवोऽसौ भृशतरविसरज्ज्वालजाज्वल्यमान-
ब्रह्माण्डं ब्राह्ममस्त्रं प्रतिकुरुवृषभं प्राक्षिपत् प्राज्यतेजाः ॥ ५० ॥

तुल्योदीतसहस्रदीधितिसहस्रोस्रप्रतिस्पर्धि तद्
ब्रह्मास्त्रं परिजृम्भमाणमवधीकृत्याशु लोकत्रयम्।
पश्यन् विश्वभयानकं कुरुवरो विश्वैकवीरस्ततो
ब्रह्मास्त्रं स च भार्गवं प्रति रयात् प्रायुङ्क्त रोषान्धधीः ॥ ५१ ॥

---

विश्वेत्यादि। कालदेश्यं प्रायेण कालतुल्यं, सकलान्तकरमित्यर्थः ॥ ४८ ॥

अस्येत्यादि। वत्सदेशे वक्षसि। कालकालायमानः कालकाल इवाचरन् ॥ ४९ ॥

श्लाघ्यामित्यादि। एषिष्यसे प्राप्स्यसि। प्रतिकुरुवृषभं कुरुवृषभमभिमुखीकृत्य ॥ ५० ॥

तुल्येत्यादि। तुल्योदीताः युगपदुदिताः ॥ ५१ ॥

अस्त्रे ताभ्याममुभाभ्यामधिकतररुषा पुष्टवेगं विसृष्टे
प्रोद्यत्प्रोद्दामधामप्रकरभयकरानल्पकल्पाग्निकल्पे ।
जाघट्येते स्म मध्येसृति झटिति मिथः स्फारनिध्वानरुद्ध-
ब्रह्माण्डाखण्डरन्ध्रं परिवियदतिभीमारुतौ मारुतौ वा ॥ ५२ ॥

ततस्तदानीं मिथस्सम्भूय भृशतरोज्जृम्भमाणं सर्वतःप्रसृमरैर्हेतिप्रकरैरखिलहरिदन्तानि विलिहन्तमुद्दामास्त्रद्वयोत्पद्यमानजातवेदसममुमवलोक्य सन्त्राससम्भ्रमावेशविवशतराशयतया केषुचिज्जनेषु हाहारवविमोचिषु, केषुचित् प्रधावनविधायिषु, केषुचित् संहर संहरेति प्रलपनपरेषु, केषुचन शान्तं शान्तमिति प्रभाषमाणेषु, केषुचिदम्बाया दुरभिनिवेशात् कष्टमखिलमपि विष्टपं नष्टमिति शोचनपरेषु, केषुचिदितिकर्तव्यतामौढ्यान्निमीलिताक्षियुगलमवस्थितेषु, महानुभावः स भागीरथेयस्तु भार्गवममुमखिलास्त्रविसरवरीयसो ब्रह्मास्त्रस्यापि वैफल्यदर्शनादाकुलहृदयमाकलय्यायमेवावसर इति दृढतरमुरसिकृत्य श्रद्धाभक्तिपरिपूतचेताः पूर्वदृष्टान् अष्टौ भूसुरवरान् मातरपितरौ गुरुवरं धर्ममपि निर्माय प्रणमन् "अयि देशिक! सत्पथभ्रंशकान्निजशिष्यनिबद्धादतो निर्बन्धात्तरसा विरमतु भवान् । नो चेन्मया धर्मैकावलम्बेन प्रयुज्यमानं प्राज्यानुभावमिदमस्त्रमेव भवन्तं विरमयेदि"ति निगद्य सद्यः प्रस्वापनाभिधानम् अस्तरिपुमदप्रसरमस्त्रवरं दृढतरायां ज्यायाममन्दावधानं सन्दधाति स्म ॥

---

अस्त्रे इत्यादि । जाघट्येते स्म घटिते । मध्येसृति मार्गमध्ये । 'पारेमध्ये–' (पा० सू० २-१-१८) इति समासः । परिवियद् वियति । अतिभीमम् आरुतं ययोः । वा इव ॥ ५२ ॥

तत इत्यादि । अमुम् उद्दामास्त्रद्वयोत्पद्यमानजातवेदसमवलोक्य । शान्तं शान्तं, 'आशंसायां भूतवच्च' (पा० सू० ३-३-१३२) इति भूतवत् प्रत्ययः । उरसिकृत्य निश्चित्येत्यर्थः । मातरपितरौ मातापितरौ । सन्दधाति स्म सन्दधे ॥

सद्यः सन्धीयमानं महितमिदमदृष्टप्रतीकारमस्त्रं
व्यामोहं किञ्चिदन्तर्विदधदथ त्रिलोक्याकुले भार्गवेऽस्मिन् ।
जन्याप्तैः सम्भ्रमार्तैः सकलसुरवरैः प्रेरितः शन्तनोस्तं
पुत्रं पूर्णानुभावं त्वरितमुपसरन् नारदोऽयं न्यगादीत् ॥ ५३ ॥

भो भो भागीरथेय! प्रवर! नयविदां धर्मसूक्ष्मार्थवेदिन्!
मामा लोकाभिरामे खलविसरविरामे त्रिलोकीललामे ।
रामे माहाकुलेऽस्मिन्नुरुतपसि गुरौ साहसं कार्यमेवं
तत् त्वं प्रस्वापनास्त्रं द्रुतमिदमुपसंहृत्य रक्ष त्रिलोकीम् ॥ ५४ ॥

आख्यातमप्येवमसंहृतास्त्रमालक्ष्य पूर्वेक्षितभूसुरास्तम् ।
आलक्ष्यमन्दस्मितमागता द्रागाचख्युरस्त्रं प्रतिसंहरेति ॥ ५५ ॥

आज्ञां द्विजानां परिगृह्य सद्यः प्राज्ञेऽथ भीष्मे प्रतिसंहृतास्त्रे ।
आनम्रवक्त्रो भृगुनन्दनोऽयं मन्दाक्षमन्दाक्षरमाचचक्षे ॥ ५६ ॥

त्रिस्सप्तकृत्वः पृथिवीश्वराणामोघः पुराघानि समूलघातम् ।
येनैव सोऽहं विजितोऽद्य कष्टं छात्रेण धात्रीपतिमात्रकेण ॥ ५७ ॥

---

सद्य इत्यादि । जन्याप्तैः समरदर्शनार्थं प्राप्तैः । सम्भ्रमार्तैः सम्भ्रमेण ऋतैः, ऋतैः गतैः । "ऋते च तृतीयासमासे" (वा०) इति वृद्धिः ॥ ५३ ॥

भो इत्यादि । विरामे अन्तकरे । त्रिलोकीललामे, "ललामं पुच्छपुण्ड्राश्वभूषाप्राधान्यकेतुषु" इत्यमरः । माहाकुले कुलीने । 'महाकुलाद्–' (पा० सू० ४-१-१४१) इत्यञ् ॥ ५४ ॥

आख्यातमित्यादि । आलक्ष्यं मन्दस्मितं यथा तथा आचख्युः ॥ ५५ ॥

आज्ञामित्यादि । मन्दाक्षं लज्जा ॥ ५६ ॥

त्रिस्सप्त इत्यादि । त्रिस्सप्तकृत्वः तिस्रः क्रियायाः अभ्यावृत्तयः त्रिः । 'द्वित्रि–' (पा० सू० ५-४-१८) इति सुच् । सप्त क्रियायाः अभ्यावृत्तयः सप्तकृत्वः । त्रिः सप्तकृत्वः त्रिस्सप्तकृत्वः । 'विशेषणं–' (पा० सू० २-१-५७) इति समासः ।

इति रणाङ्गणेऽस्मिन्नुदीयमानदीनभावमुदीरयन्नयं भृगुपतिः पितृपितामहप्रभृतिभिः स्वपितृभिः सविधमुपसमीय, "वत्स! तपस्विजनकुत्सनीयात् तरसा समरादतो निवर्तस्व। सन्नाहममुं विहाय ब्राह्ममेव धर्मं ब्रह्मविदां वरिष्ठानुतिष्ठ। स्वधर्ममेवानुचरन् भरतकुलवर्यो भवता न जय्यः। तदलमनेन दुरन्तेन निर्बन्धेन"। इति सानुनयमनुनाथितोऽपि "कदाचिदपि नाहमाहवान्निवर्ते" इत्येव गुरुजनममुमवर्तयत।

ऋचीकप्रमुखैर्ऋषिप्रवरैरासन्नमापन्नैः "अयि भरतकुलप्रदीप! समस्तशास्त्रपारावारपारेचर! सततमपि परिचार्येणाचार्येणामुना मा युद्ध्यस्व। तदतो निवर्तस्वे"ति बद्धादरमभ्यर्थितोऽपि "कदाचिदपि क्षत्रधर्ममुत्सृज्य मानधनोऽहमायोधनमुखाद्विमुखो न भवामी"त्येवाभ्यभाषिष्ट॥

ततस्तेषां पितॄणामकृतव्रणसखानां शैखावत्यमुखानाम् अखिलवैखानसवराणामपि निर्भरतरेण निर्बन्धेन भार्गवेऽस्मिन् कथमपि विनिवर्तिते स भीष्मोऽपि वीक्षितचराणामक्षीणसौहृदभराणां तेषामेव बाडववराणां वचनात् त्वरितमेव परिधूतपरिकरो रथवरादवतीर्य विनयभरविराजिताङ्गो मन्देतरादरं दूरादेव वन्दंवन्दं भृगुनन्दनोपान्तं मन्दं मन्दमुपगम्य तत्पदारविन्दयोः साष्टाङ्गपातं पपात॥

---

एकविंशतिवारान्। 'सङ्ख्यायाः–' (पा० सू० ५-४-१७) इति कृत्वसुच्। अघानि हतः। कर्मणि लुङ्। समूलघातं समूलमित्येवार्थः। 'समूल–' (पा० सू० ३-४-३६) इति णमुल्। मात्रकेण, स्वार्थे कः॥ ५७॥

इतीत्यादि। अमीय अभिगम्य। न जय्यः न जेतुं शक्यः। अनुनाथितः याचितः। अवर्तयत उक्तवान्। वृतु भाषार्थः चौरादिकः॥

ऋचीकेत्यादि। आसन्नं समीपम्। परिचार्येण पूज्येनेत्यर्थः। अभ्यभाषिष्ट उक्तवान्॥

तत इत्यादि। वीक्षितचराणां पूर्वदृष्टानां बाडववराणां ब्राह्मणश्रेष्ठानाम्। परिधूतपरिकरः त्यक्तसकलयुद्धोपकरणः। वन्दंवन्दमभिवन्द्याभिवन्द्य॥

पश्यन् पदान्तपतितं प्रवरं कुरूणां
शिष्यं निजं पुरुकृपारससार्द्रचेताः ।
प्रोत्थाप्य सोऽथ परिरभ्य दृढं भुजाभ्यां
प्रेमातिगद्गदमिदं गदितं न्यगादीत् ॥ ५८ ॥

हे वत्स! नास्ति भवता सदृशस्त्रिलोक्यां
वीरस्तु कश्चिदपि विश्रुतकीर्तिराशे! ।
हन्ताहमेष ननु शिष्यवतामिहाद्यो
जातोऽद्य भद्रमनिशं तव बोभवीतु ॥ ५९ ॥

एवमेनं महाभागमुदीर्योदीर्णसम्भ्रमम् ।
समाहूयाभ्यधादेवमम्बां म्लानमुखाम्बुजाम् ॥ ६० ॥

भजावलेपास्तरिपुं कुरूत्तमं
भुजावलेपास्तमितास्त्रदीप्सितम् ।
बलं ममास्मिन् विफलं बताजनि
प्रभञ्जनस्येह यथा महीधरे ॥ ६१ ॥

एवमादिश्य तामम्बां छात्रैः सत्रा तपस्यितुम् ।
गिरीन्द्रं स महेन्द्राख्यमरंहीदथ रंहसा ॥ ६२ ॥

---

पश्यन्नित्यादि । सार्द्रम् आर्द्रम् । गदितं वचनम् ॥ ५८ ॥

हे इत्यादि । प्रशस्तः शिष्योऽस्त्येषामिति शिष्यवन्तः, प्रशंसायां मतुप् । बोभवीतु अत्यर्थं भूयात् ॥ ५९ ॥

एवमित्यादि । महाभागः, "आरभ्योत्पत्तिमा मृत्योः कलङ्को यस्य नो भवेत् । स्याच्चैवानुपमा कीर्तिर्महाभागः स उच्यते ॥" उदीर्णं प्रवृद्धम् ॥ ६० ॥

भजेत्यादि । अजनि जातम् । 'दीपजन–' (पा० सू० ३-१-६१) इति कर्तरि चिण् । प्रभञ्जनस्य वायोः ॥ ६१ ॥

एवमित्यादि । तपस्यितुं तपः कर्तुम् । अरंहीद् अगात् ॥ ६२ ॥

सोऽयं भागीरथेयोऽप्यथ सकलमिदं हन्त! यस्यानुभावः
सोऽयं धर्मस्त्रिलोक्यां जयति परमिति ध्वस्तसर्वाभिमानः।
सानन्दं वन्दिवृन्दैर्मुनिभिरवनिपैः सादरं नन्द्यमानो
लोकातीतानुभावो निजनगरमगान्मोमुदत्पौरलोकम् ॥ ६२ ॥

सा तु काशीशकन्यका तत्क्षणमेव विजयलक्ष्मीसमालिङ्गिते द्विगुणीभूतगुरुप्रसादे गुरुप्रसादप्रसन्नवदनारविन्दे मन्देतरनिजातिभारमूलकन्दे गतवति जाह्नवीनन्दने दुर्मर्षामर्षधर्षिताशया नष्टभद्रापि पञ्चभद्रा आश्रितजनानन्दवर्धनं नन्दिवर्धनं प्रसाद्य तदनुग्रहादहमेव पुरुषतामासाद्य सद्य एव प्रतिस्पर्धिजनदर्पापहारिणमात्मापकारिणं ताराङ्गिणेयममुं रणे नियतं निपातयिष्यामीत्युरसिकृत्य यमुनोपवनमुपेत्य विविक्ततरे प्रदेश उपविशन्ती चित्तखलीनभक्तिभरखलीनेन विविधविषयेभ्यो विषयिसिन्धुजान् निरुन्धती दुश्चरतरं तपश्चचार ॥

ततश्च;

प्रशस्ययानया तपस्यया परं परितोषमुपेयुषा लोचनपथमेयुषा स्फटिकमणिघृणिघृणाकरमनोहररुचिभरनिचोलितनिरुपमाङ्गेन विलसितास्येनाप्यविलसितास्येन परमकारुणिकेन भवानीसुकृतपरिपाकेन

---

स इत्यादि। ध्वस्ताः गताः। मोमुदद् अत्यर्थं मोदमानः ॥ ६२ ॥

सेत्यादि। गुरुश्चासौ प्रसादश्च। नष्टभद्रा नष्टमङ्गला। पञ्चभद्रा उपद्रुता। "पञ्चभद्राप्युपद्रुता" इति निघण्टुः। नन्दिवर्धनः शम्भुः। "सर्वज्ञो नन्दिवर्धनः" इति वैजयन्ती। प्रतिस्पर्धिजनाः शत्रवः। ताराङ्गिणेयं भीष्मम्। 'स्त्रीभ्यो ढक्' (पा० सू० ४-१-१२०)। चित्तखलीनः हृदयाकाशलग्नः। भक्तिभरः भक्त्यतिशय एव खलीनः। "कविका तु खलीनोऽस्त्री" इत्यमरः। विषयिसिन्धुजान् इन्द्रियवाजिनः ॥

ततश्च;

प्रशस्ययेत्यादि। घृणिः रश्मिः। घृणा जुगुप्सा। "जुगुप्साकरुणे घृणे" इत्यमरः। निचोलितं छादितम्। विलसितं शोभितम्। अविः पर्वतः

भगवता "ननु भामिनि! भाविनि भवे काचन कन्यका सम्भूय भूयः पुरुषभूयमवभूय निरुपमनिकारकारिणं भीष्मं निहनिष्यसी"ति निगदिता द्रुतमेव निजपराभवपरिहरणधुरीणदेहान्तरलिप्सया निरन्तरानुशयदहनदन्दह्यमानापि तनूमनूनभाति तनूनपाति पातयामास ॥

वह्नौ शलभतां निन्ये स्वयमेव स्वकं वपुः।
रोषादेषा शिवशिव! स्त्रीणां मानसमायसम् ॥ ६४ ॥

तदैव सा नान्दनिकतपस्यानन्दितेन चन्द्रशेखरेण 'ननु महाभाग! महीपते! तनयकाम्यतस्तव तनयैव भविष्यति, सा पुनः पुरुषतां भविष्यते च', इति महितादरमनुगृहीतस्य राज्ञो यज्ञसेनस्य शिखण्डिनी नाम तनुजाप्यजायत ॥

अथो वधूभावमसौ पिधाय विस्रम्भतः शम्भुगिरां सुतायाः।
क्रमादमुष्याः पुरुषोचितानि कर्माणि निर्माति पुरा नरेन्द्रः ॥ ६५ ॥

तदनु शनैरेधमाना सा कदाचन चिरकालातिक्रमशिथिलरक्षाविधानाम् अक्षाममधुरसालम्बभूतां लोलम्बभूतां द्वारि लम्बमानां मालामिमां लीलारसादादाय कण्ठकाण्डमलङ्कुर्वाणा सद्य एव विज्ञमानसेन यज्ञसेनेन नादेयभयादियं नादेयेति निगदिता स्रजमिमां विसृजति स्म ॥

---

तस्मिन् लसिता आस्था स्थितिर्यस्य। ननु हे। पुरुषभूयं पुरुषत्वम्। अवभूय प्राप्य। अनुशयोऽनुतापः। अनूनभाति अनूनं यथा तथा भाति ज्वलति। तनूनपाति अग्नौ ॥

वह्नावित्यादि। स्वकम् आत्मीयम्। आयसम् अयोविकारः ॥ ६४ ॥

तदैवेत्यादि। नान्दनिकी नन्दनप्रयोजना। तनयकाम्यतः आत्मनस्तनयमिच्छतः। भविष्यते प्राप्स्यति ॥

अथो इत्यादि। पिधाय तिरोधाय। निर्माति पुरा अकरोत् ॥ ६५ ॥

तदन्वित्यादि। एधमाना वर्धमाना। मधुरसस्यालम्बभूताम् अत एव लोलम्बभूतां भ्रमरप्राप्ताम्। नादेयो भीष्मः ॥

द्रोणोपलब्धसकलास्त्रकलाकलापा-
मीषत्समुन्मिदुरोजयुगां विभाव्य ।
अक्षीणशैशवदशां स दशार्णपुत्र्याः
पाणिं महीपतिरजिग्रहदात्मजां ताम् ॥ ६६ ॥

अल्पे गतेऽनेहसि सा नवोढा पतिं विविक्ते युवतिं विदित्वा ।
दशार्णपुत्री निजगाद धात्रीं सा च क्षणात् स्वामिनमाचचक्षे ॥ ६७ ॥

ततस्तदाकर्णनोदीर्णरभसभरपरिघूर्णमानमानसो निखिलारिकुलारण्यहिरण्यरेता हिरण्यवर्माभिधानः स दशार्णनृपतिः संवर्तसमयसमुज्जृम्भमाणसमस्ताम्भोनिधानाभोगवाहिन्या वाहिन्या सह द्रुततरं द्रुपदपुरं प्रति प्रातिष्ठत ॥

अद्धा युद्धाय बद्धोद्यममुरुपृतनासङ्घसंवीतपार्श्वं
दुर्वारक्रोधभारद्रुतगलितसुहृद्भावमभ्यापतन्तम् ।
आकर्ण्यैनं दशार्णं प्रतिभटतिमिरध्वंसकल्पान्तहंसं
पाञ्चालश्चञ्चलात्मा शुचमतिमहतीमापदापन्नभीतिः ॥ ६८ ॥

एवं पर्याकुलोऽसौ पदनतजनतापारिजातायमानं
शश्वद्विश्वोपतापव्यपनयनपरं पार्वतीप्राणनाथम् ।
कारुण्यार्द्रान्तरङ्गं स्वचरसफलतां सत्यसन्धं त्रिलोकी-
नाथं नाथन्ननाथः शरणमुपययौ चेतसा जातसादः ॥ ६९ ॥

---

द्रोणेत्यादि । कलापः समूहः । आत्मजां दशार्णपुत्र्याः पाणिमजिग्रहद् ग्राहयामास । अत्र रघुवंशव्याख्या—"तमर्थमग्राहयद् इति । नीवह्योर्हरतेश्चैवेति चकाराद् द्विकर्मकत्व"मिति ॥ ६६ ॥

अल्प इत्यादि । स्वामिनं दशार्णनृपतिम् ॥ ६७ ॥

तत इत्यादि । हिरण्यरेताः अग्निः । वाहिन्या सेनया । प्रातिष्ठत प्रस्थानमकरोत् ॥

अद्धेत्यादि । संवीतं सङ्गतम् । कल्पान्तहंसं प्रलयकालभास्वन्तम् ॥ ६८ ॥

एवमित्यादि । उपतापः रोगः । नाथन् याचमानः ॥ ६९ ॥

महितभुजगमालं वत्सदीप्तास्थिमालं
पदनतमुनिजालं पात्रकोद्भासिफालम् ।
करकलितकपालं सर्वलोकैकपालं
मनसि सकलकालं भावये कालकालम् ॥ ७० ॥

निखिलभुवननाथं पूरिताशेषनाथं
प्रमथगणसनाथं पार्वतीप्राणनाथम् ।
विहितविबुधनाथं भक्तलोकाधिमाथं
रचितदनुजनाथं संश्रये भूतनाथम् ॥ ७१ ॥

विनतविबुधजातं ध्यायतां पारिजातं
परमशिवमजातं वश्यनेत्राभिजातम् ।
मुनिमनसि विभातं पापरात्रिप्रभातं
स्फटिकवदवदातं नौमि तं लोकतातम् ॥ ७२ ॥

भसितविलसदङ्गं पाणिरङ्गत्कुरङ्गं
शमितशमलसङ्गं शैलजापाङ्गरङ्गम् ।
द्युतिविजितपतङ्गं कल्पितानङ्गभङ्गं
भुजलसितभुजङ्गं नौमि गङ्गाभुजङ्गम् ॥ ७३ ॥

---

महितेत्यादि । वत्समुरः । सकलकालम्, अत्यन्तसंयोगे द्वितीया । भावये ध्यायामि ॥ ७० ॥

निखिलेत्यादि । पूरिताशेषनाथं, नाथो याच्ञा । विहितो विबुधानां नाथः ऐश्वर्यं येन । आधिं मथ्नातीति आधिमाथः । दनुजानां नाथ उपतापः ॥ ७१ ॥

विनतेत्यादि । अजातम् अजम् । नौमि स्तौमि ॥ ७२ ॥

भसितेत्यादि । पतङ्गः सूर्यः । गङ्गाभुजङ्गं, भुजङ्गो विटः ॥ ७३ ॥

जय जय गिरिकन्याभाग्यसर्वस्वसीमन्!
जय जय जगदाविर्भावनाशैकसाक्षिन्! ।
जय जय भवपारावारपोतायिताङ्घ्रे!
जय जय निगमान्तस्तूयमानापदान! ॥ ७४ ॥

जय जय वृषकेतो! दुर्धियां धूमकेतो!
जय जय शुभहेतो! सर्वगीर्वाणकेतो! ।
जय जय भवतारिन्! भक्तचेतोविहारिन्!
जय जय मृगधारिन्! विश्वलोकार्तिहारिन्! ॥ ७५ ॥

विपदुदधिनिमग्नं पाहि पाहि प्रभो! मां
त्वयि च परमभक्तं पाहि पाहि प्रभो! माम् ।
अनितरगतिमेनं पाहि पाहि प्रभो! मां
पुरहर! भृशदीनं पाहि पाहि प्रभो! माम् ॥ ७६ ॥

यमदमन! नमस्ते दीनबन्धो! नमस्ते
गरलधर! नमस्ते कान्तिसिन्धो! नमस्ते ।
स्मरदहन! नमस्ते कामदायिन्! नमस्ते
महितबल! नमस्ते दक्षवैरिन्! नमस्ते ॥ ७७ ॥

भव! मृड! शिव! शम्भो! सीदतो मे प्रसीद
स्मरहर! नतबन्धो! सीदतो मे प्रसीद ।
गिरिश! हर! कपालिन्! सीदतो मे प्रसीद
त्रिपुरहर! पिनाकिन्! सीदतो मे प्रसीद ॥ ७८ ॥

---

जयेति । पोतायितः पोतवदाचरन् । निगमान्ता उपनिषदः ॥ ७४ ॥

जयेत्यादि । गीर्वाणानां केतुरलङ्कारभूतः ॥ ७५ ॥

विपदित्यादि । इतरो गतिराश्रयो नास्तीत्यनितरगतिः ॥ ७६ ॥

यमेत्यादि । कामम् इष्टं दातुं शीलमस्येति कामदायी ॥ ७७ ॥

भवेत्यादि । सीदतः अवसन्नस्य ॥ ७८ ॥

अनितरजननाथे मय्युदासीनचेताः
कथमिव भवसि त्वं विश्वनाथाधुनापि ।
शिव! शिव! शशिमौले! हन्त! लोकप्रसिद्धा
क्व पुनरयुतसिद्धा त्वत्कृपाद्य प्रयाता ॥ ७९ ॥

पदनिपदितमेतं गाढविश्वस्तयुष्मद्-
गिरमयि करुणाब्धे! धूर्जटे! सत्यसन्ध! ।
चरणगतशरण्य! त्वत्कृपैकावलम्बं
बतबत! तव दासं हन्त! मा मा जहीहि ॥ ८० ॥

भव! भव! भवभवविषादभरविषादन! विषादनविधाविशारद! शारदनीरदनीकारदकान्तिसारस्य सारस्यभरलालस्यमानविबुधमिथुन-विविधविहारहारिणो हारिणोत्करमुग्धतरोत्प्लवनचङ्क्रमणातिरुचिरस्य चिरस्यारचिततपस्यावाप्यरूप्यशिखरिशिखरस्य खरस्यन्दविजितवैनतेय-सौरभेयावासमस्तके समस्तकेलीनिरतकाळीमिळितभूतसङ्घसन्तते सन्ततेन्धानाधिवास! आधिवासगृहभवारण्यपावकायमानात् कायमाना-

---

अनितरेत्यादि । अधुनापि अतिमहत्यामापद्यपि । अयुतसिद्धा अपृथक्सिद्धा । "यु मिश्रणामिश्रणयोः" ॥ ७९ ॥

पदेत्यादि । गाढं दृढम् । जहीहि त्यज ॥ ८० ॥

भवेत्यादि । हे भव! भव!, भवः शिवः । भवभवविषादः जननमरणादिदुःखम् । विषादनविधा विषभोजनविधानम् । शारदनीरदः शरन्मेघः तस्य नीकारदः कान्तिसारो यस्य तस्य । सारस्यभरः सारस्यातिशयः । हारिणः मनोहारिणः । हारिणः हरिणसम्बन्धी । अतिरुचिरस्य अतिमनोहरस्य । चिरस्य चिरकालम् । रूप्यशिखरिशिखरस्य कैलासशृङ्गस्य । खरेण क्रूरेण स्यन्देन जवेन विजितो वैनतेयो येन तादृशस्य सौरभेयस्यावासभूते मस्तके अग्रभागे । समस्ताः सकलाः । काळी भद्रकाळी । सन्तते व्याप्ते । सन्ततेन्धानः सततं प्रकाशमानः । आधिः मनःपीडा तस्य वासगृहम् । पावकायमानात् पावक इवाचरतः । कायमानः गीयमानः । सर्वलोकैरिति शेषः । भक्तिरसस्य वेशात् आवेशात् ।

द्भुतभक्तिरसवेशात् सवेशात्तागमभक्तलोकाय लोकायासलभ्या-भीप्सितप्रतिपादनप्रसितात्मक! सितात्मकात्मवर्णोन्मूलितविश्वकाशमानं! विश्वकाशमानकीर्तिचन्द्रिकानन्दिततिलोकीचकोरप्रमद! प्रमद-भरविधायकनिजकथाभिधनननसुधारसभृशसुखापितनिखिलभक्तवृन्दारक! वृन्दारकवैरिवीरव्यापादनादिनवनवापदान! नवनपरनाकपालकमुख-निखिललोकपालक! कपालकलितकपिलजटाकलापविराजमानकलाप-खण्ड! विराजमानकलापखण्डनाखण्डमदफणिवरफणागणमणीघृणि-व्यतिकरभरितपरभागभागीरथीनिकामभासितोत्तमाङ्ग! कामभासितोत्त-माङ्गदाहकारकफालपावककीलजालकजाज्वल्यमानपुष्करान्तर! पुष्करा-न्तरदलविलोभनविलोचनान्तवान्तकरुणामृतरसामोदितानतजनमानस-सारस! मानससारससरोजमानसारापसारिवदनसरसीरुहपरिलसितमृदु-हसितपरिहसितशिशिरकरकुन्दमन्दारकान्तिविसर! विसरदारुण्यदशन-वसनरुचिविसरव्यतिकरातिलसितरदनकरकबीजनिकररसनरससमुपगत-दरणवरतुण्डानुकारिहारिनासिकानालिकातिरुचिविसर! रुचिविसरविलो-

---

सवेशे समीपे आत्तागमाय समीपागतायेत्यर्थः। लोके लोकैर्वा आयासलभ्यं क्लेशलभ्यं यदीप्सितं तस्य प्रतिपादने प्रसितः प्रसक्त आत्मा यस्य। सितात्मकं धवलस्वरूपम्। विश्वेषां काशानां बल्वजानां मानः। विश्वकाशमाना सर्वलोके प्रकाशमाना। चकोरप्रमदा चकोरी। प्रमदः सन्तोषः। वृन्दारकाः श्रेष्ठाः। वृन्दारकवैरिणः असुराः। विराजमानः शोभमानः। कलापखण्डः चन्द्रकला। विराजस्य गरुत्मतः मानकलायाः अपखण्डनेन अखण्डमदाः, तत्र परिभवितु-मशक्यत्वात्। निकामभासितम् अत्यर्थं शोभितम् उत्तमाङ्गं शिरः। कामस्य भया शोभया सितं बद्धं यदङ्गं तस्य। पुष्करं आकाशः। पुष्करान्तरं तामर-सान्तर्दलम्। मानससारसं मनस्सरसिजम्। मानसं सरः तत्रस्थानां सारसानां श्रेष्ठानां सरोजानां कान्तिविसरः शोभासमूहः। विसरन् प्रसरन्। करकः, "समौ करकडाडिमौ" इत्यमरः। दरणः शुकः। "शुकस्त्रिकेतुर्मेधावी श्रीमान् वाग्मी फलाशनः। दरणो दण्डिकीरौ च" इति वैजयन्ती। रुचिविसरः

भनसितोपलविमोहनकपोलफलकप्रतिफलदालोलकुण्डलीशकुण्डलाभास-मान! आभासमानतालाभविलज्जमानोपमानकाण्डगलकाण्डलसितकालि-माभोगप्रतिपदोक्तपदावाप्तजनसतताभिजाततत्सलताभर! तताभिजात-वत्सलताभरणभूतभूरितरभुजङ्गमाचलाभ! जङ्गमाचलाभासुरसुरवैरिवीर-दमनोद्दण्डदोर्दण्डनिहतनिखिलजनजीविताहारकाल! आहारकालपतित-गलितहालाहलबिन्दुरेखाशङ्काकररोमलतोपशोभितोदरान्तराहिण्डमाना-खण्डजगदण्डविततो! विततेभाजिनाभाजनकजघनभारभरणधुरीण! रीणे-तरोरुयुगरामणीयकसफलीकृतगिरिसम्भवातपःप्रभाव! प्रभावलयनिलय-वरिष्ठतराष्ठीवदभिनवस्फटिकसम्पुटकसंगृहीतमहिताभिरूप्यरत्न! रूप्यरत्न-कृततूलकाहलीवरविलासभरनिरासपरचातुरीसन्ततप्रसृताद्वय! सन्तत-प्रसृताद्वयाधिमयपयोधिदूरमग्नविषयिवृन्दसन्दरोद्धरणकर्मकर्मठकमठप्रव-रायमाणप्रपदयुग! पदयुगलाग्रजाग्रदमलमणिमञ्जीरशिञ्जितशिशिरीकृत-

---

शोभातिशयः। सितोपलः स्फटिकः। आभासमानः शोभमानः। आभया समानता आभासमानता तस्याः अलाभेन। उपमानकाण्डः उपमानसमूहः। प्रतिपदोक्तं स्पष्टोक्तम्। सतताभिजातः सततभूतः। वत्सलताभरः वात्सल्या-तिशयः। तता विस्तृता अभिजाता रुचिरा च या वत्सलता प्रशस्तमुरः तस्या आभरणभूतैः भूरितरभुजङ्गमैः अचला स्थिरा आभा यस्य। जङ्गमा-चलवद् आभासुराणां सुरवैरिवीराणाम्। निखिलजनजीवितस्य आहारः आहर्ता स चासौ कालश्च। आहारकाले भोजनसमये। उदरान्तराहिण्डमाना उदरा-न्तान्तर्गता जगदण्डस्य ब्रह्माण्डस्य विततिर्यस्मिन्। विततस्य इभाजिनस्य आभाजनकः शोभोत्पादकः। रीणेतरम् अक्षीणम्। प्रभावलयस्य निलये। अष्ठीवन्तौ जानुनी। "जानूरुपर्वाष्ठीवदस्त्रियाम्" इत्यमरः। सम्पुटकः समुद्गकः। आभिरूप्यं सौरूप्यम्, तदेव रत्नम्। रूप्यरत्नेन रजतश्रेष्ठेन। "रत्नं स्वजाति-श्रेष्ठेऽपि" इत्यमरः। काहली सुषिरवाद्यविशेषः। चातुरी वैदग्ध्यम्। सन्ततं व्याप्तं, प्रसृताद्वयं जङ्घाद्वयं यस्य। सन्ततप्रसृतः अविच्छेदेन प्रसृतः। अद्वयः द्वित्वरहितः। केवलमसदृश इति यावत्। कमठप्रवरायमाणं कमठप्रवरवदा-

महितचरणाश्चितश्रुत्यन्तराल! महितचरणाश्चितश्रुत्यन्तरालपनपरवाडब-वरवरिवसितपादसरसिज! सरसिजासनवदनवनावस्थितनिगमतरुकिस-लयाङ्कुरायमाणमञ्जुलाङ्गुलीनिकरराजित! करराजिततातहीननखनवीन-चन्द्रचन्द्रिकापवाह्यमानानतजनवाह्याभ्यन्तरान्धतमस! अन्धतमसकल-संसारिजनमनोमुकुरविनेजनकरपदपरागविसरविभासित! विभासिता-मरसमुखरेखपदतलप्रसरदरुणप्रभाप्रकरसन्तर्प्यमाणमुनिचक्रचक्रवाकवर! कवरादिचरणान्तनिखिलावयवप्रसृतरोचिःप्रकरपरिहसितसमसमयसमु-दितानेककोटिसहस्रकिरणशोचिःप्रसर! प्रसरदमलभक्तिभारशुद्धभाववद्ध-मोदसिद्धलोकवर्ण्यमाननिरुपमानमहिमधर! हिमधराधरचिरारचित-सुचरितविवर्तायमानया तायमानयानमानमरालमानिनीमाननीयगमन-कामनीयकातिकमनीयपादघटितपादकटकारवार्द्रीकृतरजताद्रिवासिजन-कर्णविवरया वरयाचनाभिरतमानससेवकजनाभिसरणजङ्घालजङ्घा-युगलोपशमितकुसुमशरशरधिवरोरुदम्भया ऊरुदम्भयोजितमणिस्तम्भ-सम्भृतजघनमदनभवनकनकवरणायमानरशनोपशोभितकौशेयवरजनित-सुषमया सुषमयामुनोर्मिलेखासखरोमराजिविराजितमुग्धतापदावलम्ब-

---

चरत्। "पादाग्रं प्रपदम्" इत्यमरः। चरणाश्चितानां पदपतितानां श्रुत्यन्तरालं श्रोत्रमार्गो येन। महितैः चरणैः पादैः अश्चितानां श्रुत्यन्तराणाम् आलपने स्वाध्याये। वरिवसितम् उपासितम्। करराजिना रश्मिसमूहेन। अन्धं तमः अन्धतमसम्। अन्धतमानां अत्यन्तमज्ञानाम्। अरुणा चासौ प्रभा च, अरुणस्य सूर्यस्य प्रभा च। मुनिचक्ररूपाश्चक्रवाकश्रेष्ठाः। कवरादिचरणान्तेषु केशादि-पादान्तेषु। समसमयसमुदिताः एककालमेवोदिताः। महिम्नः धरः महिमधरः। हिमधराधरः हिमवान्। सुचरितस्य विवर्तायमानया विवर्त इवाचरन्त्या। स्वरूपा-दप्रच्युतस्य रूपान्तरावभासो विवर्तः। तायमानः वर्धमानः। कर्णविवरं कर्णमार्गः। वरस्य याचने उरुः दम्भः डम्भः। ऊरुदम्भाद् ऊरुव्याजात्। वरणः प्राकारः। सुषमा परमा शोभा। सुषमा रुचिरा। मुग्धतापदस्य अवलम्बस्य मध्यस्य।

भुग्नताकरमनोहरपयोधरधराधरझरायिततारहारनिकरया करयापितमद-कमलजातया जातयातयामेतराभमदनदरसारमहितमदहारचतुररुचिभार-ललितगलनालगलितकलनादविजितपिकलापया कलापयातनापादन-वदनत्रदमानकुन्दलसितमन्दहसितसमुपनतचन्द्रिकाभ्रमसमुपगतचन्द्रिका-प्रियमिथुनशङ्काकरविलोचनकलावतीर्यमाणविश्वजनकल्याणया कल्या-णयाचनीयकान्तिपूरकल्पतरुकुसुमकल्पितकर्णपूररुचिरञ्चितरुचिरगण्ड-मण्डलमण्डनायमानहाटकताटङ्कापादितानङ्गरथाङ्गभङ्गितानवया नव-यावकमदयापकसिन्दूरपरागसुन्दरसीमन्तरेखया विभासितया असित-यामिनीकामनीयकान्तालकान्तदेदीप्यमानसुमहितामोदसुमनोरमणीय-शोभया कान्तालकान्तदेदीप्यमानसुमहितामोदसुमनोरमणीयशोभया-वहलावण्यभरविलोभनीयतनुवल्लरीनित्योल्लसितयौवनमणीचया मणी-चयाभासितविबुधविभूषापादितसदाभया सदाभयावहबाहाञ्चलकलित-महितश्रीपूर्णलसितश्रीपर्णयाऽपर्णया पर्णयापनैकनियमनियमिजना-

---

झरो निर्झरः । कराभ्यां यापितः दूरीकृतः । जाता यातयामेतरा नूतनेति यावत् । दरसारः शङ्खश्रेष्ठः । कलापस्य चन्द्रस्य । यातनायाः तीव्रवेदनायाः आपादने आपादके । वदमानं शोभमानम् । चन्द्रिकाप्रियमिथुनं चकोरमिथुनम् । "चकोरश्चन्द्रिकाप्रियः" इति निघण्टुः । कल्याणं मङ्गलम् । कल्याणेन सुवर्णेन । "कल्याणं मङ्गले क्लीबमुत्सवेऽक्षयरुक्मयोः" इति निघण्टुः । तानवं तनुत्वम् । यावकस्य अलक्तकस्य । यावायतीति यावकः । "सिन्दूरं नागसम्भवम्" इत्यमरः । असितयामिन्यां कृष्णपक्षरात्र्याम् । कामनीयकस्य अन्तः अन्तकरः यः अलकान्तः तत्र देदीप्यमानाः अत्यर्थं शोभमानाः । सुमहितामोदाः शोभनसौरभ्याश्च । सुमनसः पुष्पाणि च । तै रमणीया शोभा यस्याः । अलकान्ते अलकापुर्यां, देदीप्यमानानां अत्यर्थं सङ्क्रीडमानानाम् । आमोदः सन्तोषः । सुमनोरमणीनां देवस्त्रीणां यशसः भयावहः । यौवनमेव मणीचः पुष्पम् । मणीचयैः रत्नसमूहैः सती आभा यस्य । सदा अभयावहे अभयकरे बाहाञ्चले । श्रीपर्णं कमलं, "श्रीपर्णं कमलेऽपि च" इत्यमरः । अपर्णया श्रीपार्वत्या । पर्णयापनं पर्णाहारः । आपादने एकान्तया एकाग्रया ।

**पादितनिजोपासनफलापादनैकान्तया कान्तया कान्तयाप्येतरवामभागः वामभागधेयजनदुरासदालोकः सदा लोकस्तुतमुक्तापरागसमवर्णरक्षा-समाहिताधिकरुचीभराश्चितात्मकः समवर्णरक्षासमाहिताधिकरूचीभरा-श्चितात्मकः चितात्मकस्थेमसंस्थापितसकलधर्मसेत्वन्तरः त्वं तरस्समा-पादितापदं तापदन्दह्यमानमानसं मानसंक्षयविगर्हितविग्रहावस्थानं विग्रहावस्थानन्तपराक्रमदुराक्रमदशार्णाभिषेणनविहस्तसमस्तविषयम् अस्त-विषयपरायणपाराशरिजनभजनीयभवदीयपदसरोजसमापन्नं समाप-न्नयनचतुरनीतिसाराविदुरविधुरमन्त्रिविसरं विसरन्नानाविधाशिवसन्ततं शिव! सन्ततं सन्ततन्यूनेतरामर्षदुराधर्षदशार्णवितीर्णावमतिवनिता-महितानुकं महितानुकम्पालयं पालयत! मां पालयतमाम् ॥**

---

कान्तया भार्यया । कान्तः याप्येतरश्च, याप्यः कुत्सितः तस्मादितरः याप्येतरः सर्वैः स्तुत इत्यर्थः, वामभागो यस्य । वामभागधेयाः विरुद्धदैवाः । मुक्तापरागः मौक्तिकचूर्णम् । रक्षा भस्म । अञ्चित आत्मा देहो यस्य । समवर्णरक्षा सर्ववर्ण-रक्षा । रुचिरभरः इच्छातिशयः तेन अञ्चित आत्मा मनो यस्य । चितात्मकेन व्याप्तस्वरूपेण स्थेम्ना बलेन संस्थापितानि धर्मसेत्वन्तराणि धर्ममर्यादा-विशेषा येन । त्वं, तरसा समापतिता आपद्यस्य । तापेन दन्दह्यमानं गर्हितं दह्यमानं मानसं यस्य । मानसंक्षयेण मानहान्या । विग्रहावस्थानं शरीरस्थितिः जीवनमिति यावत् । विग्रहावस्थायां युद्धावस्थायाम् अनन्तपराक्रमः अत एव दुराक्रमश्च यो दशार्णः तस्याभिषेणनेन सेनया अभियानेन विहस्तः व्याकुलः समस्तविषयः सकलविषयवासिजनो यस्य । अस्तविषयपारायणैः त्यक्तसकल-विषयैः । पाराशरिजनैः भिक्षुकैः । समापन्नं प्राप्तम् । आपन्नयनेन आपन्निवर्तनेन चतुरस्य समर्थस्य नीतिसारस्य उपायसारस्य अविदुरः अवेत्ता, अत एव विधुरो मन्त्रिविसरो यस्य । विसरद्भिः नानाविधैः अशिवैः अशुभैः सन्ततं व्याप्तम् । शिव शम्भो! । सन्ततं सततम् । सन्ततेन कृतेन, मयेत्यर्थः । न्यूनेतरः अनल्पः । अवमतिरेव वनिता तस्या अनुकं कमितारम् । अनुकम्पाया आलय-भूतम् । पाले पालने यतः प्रयत्नकृत् पालयतः, तस्य संबोधनम् । मां पालयतमां अत्यर्थं पालय रक्ष । 'तिङश्च' (पा० सू० ५-३-५६) इति तरप् ॥

कालकण्ठहर! कालकण्ठ! हर! काशकभ्रमहितद्युते!
पार्वणेन्दुमुख! पार्वतीश! मृड! शार्वरीशशकलाञ्चित! ।
कुण्डलीसदुपगण्डलीनपृथुकुण्डलीशमणिमण्डली-
भासमान! भुवनासमानमुनिभाव्यमान! भव! पाहि माम् ॥८१॥

कामदेहहर! कामदेह! हर! वामदेहवनिताकृते!
वामदेव! मृड! वासुदेवसख! वामदेवरिपुशासन ।
चित्तरङ्गकृतनृत्तभङ्गिभवदुत्तरङ्गमुद! सत्तते-
श्चित्तरङ्गमय! भक्तरङ्ग्यपद! मुक्तसङ्गरत! पाहि माम् ॥ ८२ ॥

स्वामिन्नशोकसदनाश्रितलोकबन्धो!
हाहन्त! शोकसदनं कुरु मा विभो माम् ।
तद्रागरीणकरुणाशिशिरैरपाङ्गै-
स्तापाशयं शिशिरयेः शिशिरांशुमौले! ॥ ८३ ॥

---

कालेत्यादि । कालकण्ठहर कालनाशन! । शार्वरीशशकलं चन्द्रकला । कुण्डलीभवन्तः । उपगण्डं गण्डसमीपे ॥ ८१ ॥

कामेत्यादि । कामस्य देहहर! । कामदा ईहा यस्य । हे हर! । वामानां प्रतिकूलानां देवरिपूणाम् । उत्तरङ्गा प्रवृद्धा मुदा यस्याः । सत्ततेः सज्जनततेः । चित्तरङ्गमय चिल्लहरीस्वरूप!, ज्ञानस्वरूप इत्यर्थः । भक्तैः रङ्ग्यं प्राप्यं पदं यस्य ॥ ८२ ॥

स्वामिन्नित्यादि । अशोकस्य सुखस्य आवासभूतः । अत्र नञस्त-द्विरुद्धार्थवाचित्वम् । अत्र अशोकसदनाश्रित इति पदच्छेदने अतीतेयं सर्वापि स्तुतिः श्रीमदशोकपुरक्षेत्रसन्निहितभगवत्सम्बन्धिनीत्यपि विवक्षितम् । अरीणया अक्षीणया । शिशिरयेः शीतलीकुरु ॥ ८३ ॥

स खलु वरो बत! पुरोधाकल्पितः सत्यसन्धेनाविश्लथितसंश्रितजनप्रेमबन्धेन महितकरुणाधोरणीसर्वाभिसारनिर्वासितसर्वातुरजनदुर्वारतापभारेण गरुत्मतेवामोदितविनताशयेन, शेषेणेव विधुविराजितोत्तमाङ्गेन, रमयेव अच्युतकान्तिभाजनात्मना, उमयेव वामाङ्गभाजा, मधुसूदनेनेव महितश्रीसदनवत्सेन अविनाभूतविनायकेन च, पितामहेनेव गौरीसङ्गमावद्धरागेण परमहंसोपलसितेन च, बिडौजसेव वृत्रविध्वंसिना महितभद्रकुञ्जरेण च, सुवर्णगिरिणा दुर्वर्णगिरिणेव च परमसुमनःकोटीरचितशोभेन, रावणेनेव कुम्भकर्णेनेव विभीषणेनेव चाधिकमहितविष्णुपदभूतात्मना, धनदेनेव मदनेनेव मलयेनेव गहनेनेव हरिणेव च

---

स इत्यादि। स खलु वरः भवता सफलो विधेय इत्यन्वयः। धोरणी प्रवाहः। विनताया आशयः, विनतानामाशयश्च। विधुः विष्णुश्चन्द्रश्च। "विधुर्विष्णौ चन्द्रमसि" इत्यमरः। उत्तमम् अङ्गं उत्तमाङ्गं, शिरश्च। अच्युतस्य हरेः कान्तेरिच्छायाः भाजनात्मना पात्रभूतया, अच्युता च्युतिरहिता कान्तिः शोभा आत्मा देहश्च। वामं सव्यं, सुन्दरं च। महितं श्रीसदनं वत्सः श्रीवत्सो यस्य, यद्वा महितायाः श्रियः लक्ष्म्याः सदनं वत्सम् उरो यस्य। महितायाः शोभायाश्च। अविनाभूतः सहितः। विनायको गरुडः, गजाननश्च। "गौरी शिवासरस्वत्योः"। परमहंसाः वाहनभूता उत्कृष्टा हंसाः। सन्न्यासिविशेषाश्च। विडौजा इन्द्रः। वृत्रो वृत्रासुरः, वृत्रा अरयश्च। "ध्वान्तारिदानवा वृत्राः" इत्यमरः। महितः भद्रः भद्रजातीयश्च कुञ्जरो यस्य। "मन्दो भद्रो मृगश्चेति विज्ञेया गजयोनयः"। भद्रकुञ्जरो वृषश्रेष्ठश्च। दुर्वर्णगिरिः कैलासः। सुमनःकोटिभिः देवसमूहैः, भगवत्सेवार्थमागतैः सनकादिभिः सज्जनसमूहैश्च। उत्कृष्टकुसुमजटाभरेण चिता व्याप्ता शोभा यस्य। विष्णोः पदं श्रीपादं प्राप्त आत्मा मनो येषां ते विष्णुपदभूतात्मानः, भक्ता इति यावत्, ते अत्यर्थम् अहिता यस्य तेन। अधिकमहितः स्थूलश्च, विष्णुपदं आकाशं प्राप्त, अत्युन्नतश्च, आत्मा देहो यस्य। अधिकमहितं पूजितं विष्णुपदभूतं निरन्तरध्यानाद् विष्णोः स्थानाद् भूतम् आत्मा मनो यस्य। अधिकमहितायां विष्णुपदभूतायां गङ्गायाम् आत्मा मनो यस्य।

(हरेणेव च) भद्रश्रीभाजनेन, हिमवतेवाहीनकटकेन, कटकेनेव महित-सेनानीतकान्तिसन्तानेन, सन्तानेनेव कामदानदक्षेण, दक्षेणेव लोकेश-जातमहितेन, सितभासितेन भसितभासितेन महितपवमानाशनेन महित-भवनाशनेन शमलशमनेन शमनशमदेन गङ्गाभुजङ्गेन भुजङ्गागङ्गेन विरूपाक्षेणाप्यविरूपाक्षेण खण्डपरशुनाप्यखण्डपरशुना त्रिनेत्रेणाप्य-नेत्रेण विषादिनाप्यविषादिना रजतविराजितेनापि रजताविराजितेन करकलितकमलेनापि करविधुतकमलेन अवर्णनीयमहितानुभावेन प्रभवता भवता भवतापहृतापहृताखिललोकनिखिलशोकेन सकलभक्त-जनविधेयेन सफलो विधेयः ॥

---

भद्रायाः श्रियः समृद्धेः शोभायाश्च । भद्रश्रियश्चन्दनस्य । "भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः । श्रीः लवङ्गश्च । "श्रीरिन्दिरायां शोभायां स्यात् सम्पत्तिलवङ्गयोः" इत्यमरः । भद्रश्रिया इभेन अजनं गमनं यस्य । भद्रश्रियः इभस्य गजासुरस्य अजनेन क्षेपेण । 'अज गतिक्षेपणयोः' । 'वा यौ' (पा० सू० २-४-५७) इति (वी ? व्य)भावे रूपम् । 'कृत्यल्युट–' (पा० सू० ३-३-११३) इति कर्तरि । अहीनः उत्कृष्टः कटको नितम्बो यस्य । अहीनः सर्पश्रेष्ठः कटको वलयो यस्य । कटकः सेनानिवेशः । महितया सेनया, महितैः सेनानीभिः वाहिनीपतिभिर्वा आनीतः, इतश्च कान्तिसन्तानो यस्य, महितेन सेनान्या गुहेन हेतुना इतः कान्तिसन्तानः । सन्तानः कल्पतरुः । दानं वितरणं, खण्डनं च । लोकेशजातेषु ब्रह्मपुत्रेषु दिक्पालेषु च । सितभया धवलकान्त्या सितेन बद्धेन । भसितेन भस्मना । पवनाशाः सर्पाः । भवस्य नाशः । शमलस्य पापस्य शमनः नाशकः । शमनो यमः । गङ्गायाः भुजङ्गेन विटेन । भुजङ्गा-नश्नुते प्राप्नोतीति भुजङ्गाक्, तादृशमङ्गं यस्य । अविरूपाक्षेण अविरूपं सूर्यस्व-रूपं अक्षि यस्य । "अवयः शैलमेषार्काः" इत्यमरः । अखण्डेन अविकलधारेण । नेत्रं नयनं, वसनं च । विषमत्तुं शीलमस्य, विषादी विषादवांश्च । रजतवद् विराजितेन । राजताविः कैलासः । कमलं मृगः, पद्मं च । भवतापं हरतीति भवतापहृत् । अपहृतः अखिललोकस्य निखिलः शोको येन । विधेयोऽधीनः । विधेयः कार्यश्च ॥

एवं देवाधिदेवं सविधमुपगतामापदं सन्तितीर्षन्
नुत्वा भक्तैकबन्धुं भुवनशिवकरं पूर्णकारुण्यसिन्धुम् ।
भक्त्युद्रेकातिवेलद्रुतहृदयमयं याचमानो नरेन्द्रः
संतस्थे सङ्कटी तं नवपुलकघटाकङ्कटी कंकटीकम् ॥ ८४ ॥

शिखण्डिनी तु स्वहेतूपजातोपतापादिति विचिन्तनपरं विवशतरं पितरं निरीक्ष्य निरतिशयशोका जवेन जीवितं जिहासती निखिलजगदन्तरात्मनो भगवतः प्रेरणयैव निशीथसमये निजनगरान्निरीय विच्छायती यदृच्छया गङ्गाद्वारवसतेर्ऋषेर्ऋषीकस्य तपोवनमीषाम्बभूव ॥

व्यापन्नैकद्रुपदं पुरमिदमपहाय सत्वरं याता ।
सा व्यापन्नानेकद्रुपदं विपिनं किमेतदान्ध्यमहो! ॥ ८५ ॥

ततश्च;

शिखण्डिनी निजं कण्ठं चिखण्डिषुरखण्डरुक् ।
उग्रधारमुदग्राभं खड्गमुद्गूर्णवत्यसौ ॥ ८६ ॥

---

एवमित्यादि । नुत्वा स्तुत्वा । अतिवेलद्रुतं अत्यर्थं द्रवीभूतम् । पुलकघटा एव कङ्कटः कवचः । कङ्कटीको रुद्रः ॥ ८४ ॥

शिखण्डिनीत्यादि । जिहासती त्यक्तुकामा । विच्छायती गच्छन्ती । गङ्गाद्वारं नाम गङ्गायाः प्रदेशविशेषः । "गङ्गाद्वारे तपस्यन्तं तुष्टिहेतोस्तपस्विनी" इति महाभारते । ऋषीकस्य ऋषीकनाम्नः । ईषाम्बभूव जगाम । 'ई (ष) गतौ' ॥

व्यापन्नेत्यादि । व्यापन्नः विशेषेणापत्प्राप्तः द्रुपदो यत्र । व्यापन्नानां विभिः पक्षिभिः प्राप्तानाम् । अनेकद्रूणां बहुवृक्षाणां, "पलाशी द्रुद्रुमागमाः" इत्यमरः । पदं स्थानम् ॥ ८५ ॥

ततश्च;

शिखण्डिनीत्यादि । चिखण्डिषुः खण्डयितुमिच्छुः । उद्गूर्णवती प्रहर्तुमुद्गमितवतीत्यर्थः ॥ ८६ ॥

अमुना मुनिनामुष्मात् सहसा साहसादसौ ।
वारिता भूरितापैनं ततः परिचचार च ॥ ८७ ॥

तदनु निजपरिचरणपरितोतुषेण नियमितहृषीकेण तेन ऋषीकेण 'ननु मोहनाङ्गि! न चिरादेव विभजनायेह समुपयास्यतां वृषस्यतां गन्धर्वाणामुपकण्ठमुपयान्त्या नूनमश्रमेण ते श्रेयो भविते'ति महितादरमभिहिता सा तदैवोपनतानां देवगायनानामुपशल्यमुपगम्य विभजनं तद्विलोकयन्ती कुतुकभरसयन्ती निभृतमवतिष्ठते स्म ॥

अथ यथामनोरथं विहितमिथुनविभागेषु तेषु महाभागेषु यथायथं गतेषु तत्रावशिष्टयोरुपहताभिलाषयोरेको युवप्रवेको युवतिरूपीयन् अभिरूपामनन्यजन्मदयितानिभामिमां निभालयन्नमन्दमोदविकचवदनारविन्दो मन्दमुपगम्य, 'ननु कमनि! रम्यशीले! मामकेनामुना पुरुषभावेन तावकं विधूतविबुधनारीजनानुभावं वधूभावं भावयितुकामो भवामी'त्यभिहिता सा द्रुपदद्दुहिता द्रुतमभ्युदितमोदा तथेत्यभ्युपजगाम ॥

---

अमुनेत्यादि । साहसाद् अविवेककर्मणः ॥ ८७ ॥

तदन्वित्यादि । परितोतुषेण अत्यर्थं परितुष्यता । हृषीकाणि इन्द्रियाणि । विभजनाय, विभजनमिति गन्धर्वाणां सम्भोगार्थं स्त्रीपुरुषसंविभागः । वृषस्यतां रतेच्छावताम् । देवगायकानां गन्धर्वाणाम् ॥

अथेत्यादि । यथायथं यथास्वम् । युवप्रवेकः श्रेष्ठो युवा । युवतिरूपीयन् आत्मनो युवतिरूपमिच्छन् । अनन्यजन्मदयिता रतिः । (विभावयन्? निभालयन्) पश्यन् । भावयितुकामः प्राप्तुकामः । अभ्युपजगाम अङ्गीकृतवती ॥

गन्धर्वः पृथुसालसम्मिततनुस्कन्धं वहन्नुन्नतं
प्रोद्दण्डं परिघप्रमाणमनघं दोर्दण्डयुग्मं दधत् ।
नम्राङ्गी च शिखण्डिनी पृथुकुचश्रोणीभरोल्लासिनी
तावेतौ रुचिराकृती व्यतिबभूवाते समानस्पृहौ ॥ ८८ ॥

तावेतौ तरसा तत्र कृतव्यत्यसनावपि ।
उभौ च प्रमदाभूतावुभौ वा पुंस्त्वसंयुतौ ॥ ८९ ॥

गन्धर्वी बन्धुराकारा गन्धर्वेणापरेण सा ।
अथान्तरदधान्मोदं द्रागन्तरदधादपि ॥ ९० ॥

यदेष यज्ञसेनजः समस्तकर्मधारयः ।
अलब्ध पुंस्त्वमाद्दतं तदत्र युज्यते परम् ॥ ९१ ॥

---

गन्धर्व इत्यादि । तौ, 'पुमान् स्त्रिया' (पा० सू० १-२-६७) इति पुंसः शेषः । व्यतिबभूवाते पुंस्त्वस्त्रीत्वयोर्व्यत्यासो भूत इत्यर्थः । 'कर्तरि कर्मव्यतीहारे' (पा० सू० १-३-१४) इति तङ् ॥ ८८ ॥

तावित्यादि । प्रमदाभूतौ स्त्रीभूतौ पुंस्त्वसंयुतौ पुंस्त्वसहिताविति विरोधः । प्रमदं हर्षम् . आभीक्ष्ण्येन प्राप्तौ । युतः मिश्रितः, अमिश्रितश्च ॥ ८९ ॥

गन्धर्वीत्यादि । गन्धर्वेणेति सहार्थे टा । अन्तः मनसि । मोदम् अदधाद् धृतवती । अन्तरदधात् तिरोहिता ॥ ९० ॥

यदित्यादि । समस्तकर्मणां धारयः धर्ता । यज्ञसेनजः शिखण्डी पुंस्त्वमलब्ध लब्धवान् । यत् तद्युज्यते, समस्तकर्मसु पटिष्ठस्य तस्य पुंस्त्वमेव युक्तमिति भावः । अत्र कर्मधारयसमासस्य पुंवद्भावो युक्तमित्यपि स्फुरति । 'पुंवत्कर्मधारय–' (पा० सू० ६-३-४२) इति कर्मधारयसमासस्य पुंवद्भावविधानात् ॥ ९१ ॥

स खलु शिखण्डिनी पुनरखण्डोद्भूतसम्मदाद्भुतास्त्रविद्यापारगं भर्गसमधामकं बुद्बुदकनामकं धनुर्वेदाचार्यमासाद्य चर्यया परिचर्यया प्रसाद्यादसीयानुग्रहासादितसकलशस्त्रास्त्रपाटवो झटिति निजपुटभेदनं निरवधिकवेदनं काम्पिल्याभिधानमभिगम्य दशार्णभयविशीर्णमतेः पितुः पदान्ते प्रणिगदिताखिलात्मचरितः प्रणिपपात ॥

हरिणाक्षीमरुणाक्षं
स खलु नताङ्गीं समुन्नताङ्गमथ ।
पृथुलकुचां पृथुवक्षं
विसिष्मिये वीक्ष्य भूभृदात्मजनिम् ॥ ९२ ॥

आमोदाकुलधीः स्वमण्डलजुषामानन्दनं नन्दनं
संश्लिष्यास्तरुजोऽस्य मस्तकतले जिघ्रन्ननल्पादरम् ।
प्राप्तः पारमपारशोकजलधेरापूर्णकामस्तदा
सर्वं शर्वकृपाविजृम्भितमिति व्यक्तं स मेने हृदि ॥ ९३ ॥

द्रुपदोऽथ द्रुतं दूतं प्राहैषीदेष कञ्चन ।
हिरण्यवर्मणे तूर्णमभिषेणयते रुषा ॥ ९४ ॥

---

स खल्वित्यादि । पुटभेदनं पुरम् । वेदना दुःखम् ॥

हरिणेत्यादि । विसिष्मिये विस्मितोऽभूत् । आत्मनो जनिः जननं यस्या यस्येति च विग्रहे विशेषणानामन्वयः ॥ ९२ ॥

आमोदेत्यादि । विजृम्भितं विजृम्भणम् ॥ ९३ ॥

द्रुपद इत्यादि । प्राहैषीत् प्रहितवान् । रुषा अभिषेणयते सेनया अभिगच्छते ॥ ९४ ॥

अनन्तरमुदीर्णरभसभूमा स दशार्णभूपः पथि परिष्कृतनिजोप-शल्यप्रतिष्कशमुखेन 'हन्त जन्मसिद्धमेव नो नन्दनस्य पुंस्त्वम् । अधुनैव पुरुषममुं तव जामातरमुपगम्य जातादरमयि सम्भावय । कदाचिदप्यनतिसन्धिषु सम्बन्धिषु मामा कुरु साहसिक्यम् ।' इति द्रुपदवाक्यमाकलय्याप्यगलितसन्देहपङ्कं निर्णेतुमनास्तूर्णमेव निजसुता-सन्निकृष्टं प्रतिविसृष्टानामृतवचननिरतानां वनितानां वचनाज्जातविश्वास आश्वेव विधुतसमरसंरम्भः सम्बन्धिनं विज्ञमेनं यज्ञसेनं सपदि सम्भावय-न्नदसीयनगरमासाद्य मोमुद्यमानमानसैः अतिविकचवदनसारसैरखिल-बन्धुजनैः अमन्दादरमभिनन्द्यमानो नानन्द्यमानमानसो मासमेक-मासाञ्चक्रे ॥

ततश्च ;

भूपालो भूरिधामा चरणगतशरण्यो वरेण्यैर्हिरण्यै
रत्नैर्नूत्नैश्चिरत्नैरपि च निरुपमैः क्षौमजातैः सुजातैः ।
जातामोदं स जामातरमधिकतरं तर्पयन्नर्पिताशी-
रामन्त्र्य स्वां तनूजां प्रुषतमपि पुरीमस्तशोकामहास्त ॥ ९५ ॥

---

अनन्तरमित्यादि । प्रतिष्कशमुखेन दूतमुखेन । नो नन्दनस्य असत्सुतस्य पुंस्त्वं जन्मसिद्धमेव । पुरुषममुं तव जामातरम् अधुनैव सम्भावय । नन्दनस्य पुंस्त्वं जन्मसिद्धमेव नो न । अधुनैव पुरुषम् इत्यपि स्फुरति । अतिसन्धिः वञ्चनम् । साहसिक्यं साहसिकव्यापारः । आसाञ्चक्रे आस्ते स्म । 'दयायासश्च' (पा० सू० ३-१-३७) इत्याम् ॥

ततश्च ;

भूपाल इत्यादि । चिरत्नैः चिरन्तनैः । नूत्नैः नूतनैः । अहास्त प्रास्थवान् ॥ ९५ ॥

स लब्धपुंस्त्वेन सुतेन तेन
समस्तशस्त्रास्त्रचणेन साकम् ।
द्रुतं द्रुताधिर्द्रुपदोऽभिरेमे
ततोऽभिरामे स्वपुरे पुरेव ॥ ९६ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
अम्बोपाख्याने एकादशः स्तबकः ॥

अम्बोपाख्यानं समाप्तम् ॥

---

स इत्यादि । शस्त्रास्त्रचणः शस्त्रास्त्रैः प्रसिद्धः । 'तेन वित्तः' (पा० सू० ५-२-२६) इति चणप् । द्रुताधिः गताधिः । अभिरेमे सुखं तस्थौ ॥ ९६ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये एकादशः स्तबकः ।

द्वादशः स्तवकः ।

विचित्रवीर्यस्तु विधिवदुपोढाभ्यामूढरागाभ्यामनुसरणचातुरीधुरीणाभ्यामखिलमदनतन्त्रहृदयवेदयाभ्यामाभ्यामम्बिकाम्बालिकाभ्यां सह विविधतरविभवविसरैरुपसुरपुरे पुरवरे कुसुमबाणबाणवारजर्जरितधैर्यसारबाणवारोऽयमतिचिरमनवरतमपि नवरतमनुबोभूयते स्म ॥

माननीयगुणकामिनीयुगलकामनीयकविलोकना-
दन्तराचितदुरन्तरागरचितान्धताकुलितचेतनः ।
वासरानपि च वत्सरानपि च भासुराकृतिरसौ नृपो
न व्यबुद्ध बत! नव्यरत्नगणभव्यपत्तनगतो गतान् ॥ १ ॥

---

विचित्रवीर्यस्तु इति । "अम्बिकाम्बालिके भीष्मो भ्रात्रा चात्रोदवीवहद्" इत्युक्तं प्राक्, तदनन्तरमित्यर्थः । मदनतन्त्रं कामसिद्धान्तः तस्य हृदयं रहस्यम् । उपसुरपुरे सुरपुराद् अधिकरमणीये । 'उपोऽधिके च' (पा० सू० १-४-८७) इति कर्मप्रवचनीयसंज्ञा । 'यस्मादधिकं–' (पा० सू० २-३-९) इति सप्तमी । बाणवारः शरसमूहः तेन जर्जरितः धैर्यसारः बाणवारः कवचो यस्य । अनवरतं सततमपि नवरतमिति शाब्दो विरोधः । अनुबोभूयते स्म पौनःपुन्येनात्यर्थमनुभूतवान् ॥

माननीयेत्यादि । वासरान् । "दिवसो दिवा दिनं द्युःप्रोक्तमहर्वासरो घस्रः ।" इति शब्दरत्नाकरः । भव्यं शुभं, "भव्यो भावी योग्यश्शुभोऽपि च" इति वैजयन्ती । "नौ रनौ रनरसंयुतौ रस(विधिः)युगं निधि)र्भ्रमरकूजितम्" ॥ १ ॥

एवं रंरम्यमाणं भृशतरविलसन्मण्डलं प्राज्यकीर्ति-
ज्योत्स्नानिष्यन्दसंस्नापितनिखिलदिशं मेदिनीशीतभानुम् ।
विध्वस्तस्फीतभोगो विषमगतिरथो राजयक्ष्माभिधानः
स्वर्भानुः क्षिप्रमेनं प्रबलविधिबलादग्रहीदुग्ररूपः ॥ २ ॥

---

एवमित्यादि । रंरम्यमाणं पौनःपुन्येनात्यर्थं रममाणम् । अनेन राजयक्ष्मारम्भावस्था द्योत्यते । रत्यभिनिवेशस्य तत्पूर्वरूपत्वात् । तदुक्तमस्य पूर्वरूपेषु "स्त्रीमद्यमांसप्रियता" इति । उपलक्षणं चैतदन्येषाम् । मण्डलानि द्वादशराजमण्डलानि, मण्डलं बिम्बं च । कीर्तिरेव ज्योत्स्ना । संस्नापिता मज्जिता । 'ष्णा शौचे', 'ष्णा शौचवेष्टनयोः', द्वयोरपि ग्रहणम् । श्लास्नोरनुपसृष्टयोरप्राप्ते विकल्पेन मित्त्वविधानाद् उपसृष्टयोर्मित्त्वाभावः । मेदिनीशीतभानुं मेदिनीचन्द्रम् । विध्वस्ताः स्फीता भोगा येन । रोगाभिभवेनाशक्यसर्वभोग इत्यर्थः । विधुना विष्णुना अस्तं हरिचक्रेण छिन्नकाय इत्यर्थः । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः । "भोगो राज्ये धने सौख्ये पालनाभ्यवहारयोः । फणे देहे च सर्पस्य वेश्यादीनां भृतावपि ॥" इति वैजयन्ती । विषमा दुश्चिकित्स्या गतिः परिणतिः यस्य । यद्वा विषमा अन्यरोगातुल्या औषधक्षयकरी गतिर्यस्य । तदुक्तं—"देहौषधक्षयकृतेः क्षयः" इति । विषमा अन्यग्रहातुल्या राशिषु प्रतिलोमा च गतिः यस्य । राजयक्ष्मेत्यभिधानं यस्य । "नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा । यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥" स्वर्भानुः सैंहिकेयः । स्वर्भानुत्वारोपेण पूर्णावस्थायामियमापदापतितेति व्यज्यते । प्रबलविधिबलादित्यनेन नासावपथ्यादिजन्यः, किन्तु पूर्वजन्मकृतपापहेतुक एवेति प्रकाश्यते । उग्राणि देहपीडाकराणि रूपाणि पीनसादीनि यस्य सः, घोररूपश्च । अत्र पूर्वरूपाणां सत्ताभिव्यञ्जकेन रंरम्यमाणमित्यनेन दुस्सहनिखिलरूपसामग्र्यसम्पादकेन उग्ररूप इत्यनेन कर्मजत्वप्रतिपादकेन विधिबलादित्यनेन च दुर्निवारतया शरीरापायपर्यवसायीति व्यज्यते । तथा च ग्रन्थान्तराणि —— "अमर्मगोऽल्पहेत्वग्ररूपरूपोऽनुपद्रवः" इत्यादि "अनुपक्रम एव स्यात् स्थितोऽत्यन्तविपर्यये" इति "कर्मजः कर्मसंक्षयाद्" इति च । कर्मक्षयः पुनरनुभवादिना ॥ २ ॥

रोगेणानेन गुरुणा तदैव स धरापतिः ।
व्यसनाद् वनितानाम्नो दुर्निवारान्न्यवारि च ॥ ३ ॥

गदानामधिराजेन क्षेत्रियेणाशु यक्ष्मणा ।
नृपाणामधिराजोऽयं स्पर्धयेवाभ्यभूयत ॥ ४ ॥

अलङ्घ्यवृत्तेर्मम यो विधुः प्रागवन्ध्ययद् वृत्तिममुष्य गोत्रम् ।
उन्मूलयामीति विचिन्त्य नूनं स सानुगोऽमुं विधुरीचकार ॥ ५ ॥

भुवनविदितमेनं हृद्यमाह्लादिताशं
कुरुवृषभमनैषीदेष शोषोऽतिशोषम् ।
इह निखिलजनानां शश्वदालम्बभूतं
घनरसमिव लोके सारसं घर्मकालः ॥ ६ ॥

---

**रोगेणेत्यादि** । गुरुणा सोढुमशक्येन । आचार्येणेत्यपि स्फुरति । अनेन दुर्निवारान्निवारणे शक्तिः प्रकाशिता । वनितानाम्नः व्यसनात् । "स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च ॥" इति सप्तव्यसनानि । दुर्निवारादित्यनेन तेषु व्यसनेषु मध्ये सकलेन्द्रिय-सन्तर्पकत्वात् स्त्रीव्यसनस्याधिक्यं प्रकाशितम् । न्यवारि न्यरोधि च । अत्र चशब्देन ग्रहणक्रिया समुच्चीयते । अनेन ग्रहणसमय एवात्यर्थमभिभूतोऽभूदिति प्रकाश्यते ॥ ३ ॥

**गदानामित्यादि** । क्षेत्रियेण अन्यजन्मभवे देहे चिकित्स्येन । 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः' (पा० सू० ५-२-९२) इति निपात्यते । उभयो-रप्यधिराज्यं स्पर्धयेवेत्युत्प्रेक्षाया निमित्तम् ॥ ४ ॥

**अलङ्घ्येत्यादि** । यो विधुः चन्द्रः प्राग् मम वृत्तिमवन्ध्ययद् वन्ध्या-मकरोत् । "यत्र स्नात्वा दक्षशापाद्विमुक्ता" इत्याद्युक्तेर्दक्षशापोत्थस्य यक्ष्मणो निवृत्तेरुक्तत्वात् । सानुगः अनुगैः सहितः । "अनेकरोगानुगतो बहुरोगपुरस्सरः । राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः" ॥ ५ ॥

**भुवनेत्यादि** । भुवनविदितं त्रिष्वपि लोकेषु प्रसिद्धम् । भुवनमिति विदितं च । "जीवनं भुवनं वनम्" इत्यमरः । हृद्यं हृदयप्रियं, हृद्यत्वमाह्लादकत्वं

विश्वागदङ्कारगणं वितन्वन्नन्वर्थताहीनमहीनशोकम् ।
अगादभिप्रेतपुरं गतोऽपि भूयोऽप्यभि प्रेतपुरं स भूपः ॥ ७ ॥

अनन्तरमनन्तशोकभारभागयं भागीरथेयो भ्रातुरेतस्य परेतस्य पारलौकिकानि कर्माणि विदितधर्मा विधिवदेव विततान ॥

अथातिशोकाकुलिताशयापि वानस्य सन्तानतरोः प्ररोहम् ।
सा वासवी साधु विचिन्तयन्ती प्रावोचदाहूय च वाहिनेयम् ॥८॥

सगर्भ्यस्ते दिष्टात् सुत! सपदि दिष्टान्तमगमत्
ततो गोत्रं नष्टं समजनि च नः कष्टमधुना ।
मनीषिन्! जानीषे विधिमपि च कृच्छ्रोचितमतः
प्रजावत्योस्त्यक्त्वा व्रतमिदमपत्यानि जनय ॥ ९ ॥

स तु मातुर्व्यथावत्याः सत्यवत्या निशम्य गाम् ।
सद्यस्तामविहस्तात्मा सत्योद्यमिदमुक्तवान् ॥ १० ॥

---

च पयसो गुणः । "जीवनं तर्पणं हृद्यं ह्लादि बुद्धिप्रबोधनम्" इत्युक्तत्वात् । शोषः यक्ष्मा । घनरसं जलम् । सारसं सरसि भवम् ॥ ६ ॥

विश्वेत्यादि । अगदङ्कारश्चिकित्सकः । अन्वर्थताहीनं गदापनयनाभावात् । अभिप्रेतं अभीष्टं पुरम् । अभि प्रेतपुरं प्रेतपुरमभिमुखीकृत्य ॥ ७ ॥

अनन्तरमित्यादि । भागीरथेयो भागीरथ्या अपत्यम् । परेतस्य मृतस्य । पारलौकिकानि परलोकभवानि । अध्यात्मादिषु "लोकान्ताट्ठञ् वक्तव्यः" (वा०) इति ठञ् । अनुशतिकादि ॥

अथेत्यादि । वानस्य शुष्कस्य । 'ओ वै' शोषणे । 'ओदितश्च' (पा० सू० ८-२-४५) इति निष्ठानत्वम् ॥ ८ ॥

सगर्भ्येत्यादि । सहजः सगर्भे भवः । 'सगर्भसयूथसनुताद्यन्' (पा० सू० ४-४-११४) इति यन् । भवार्थे छन्दोधिकारेऽपि सगर्भसयूथ्यौ लोकेऽपि दृश्येते । दिष्टान्तं मृतिम् । प्रजावत्योः भ्रातृजाययोः ॥ ९ ॥

स इत्यादि । सत्योद्यं सत्यवचनम् ॥ १० ॥

मातर्मा तापभाक् स्त्रास्त्रिजगति भगवानीश्वरः कालरूपी
विश्वेषां देहभाजां सुखमसुखमपि व्यातनोतीह नूनम् ।
सद्धर्मालम्बभूतं भरतकुलमिदं नैव नश्येदवश्यं
बेभीयेऽहं जगत्साक्षिकसमयवरोन्मर्दनादेष पापात् ॥ ११ ॥

एवमुक्तेऽपि मे पुत्र्योस्त्वमेवोत्पादयात्मजान् ।
इति निर्बध्नतीमेनां पुनरप्ययमभ्यधात् ॥ १२ ॥

गन्धं जातु वसुन्धरापि विसृजेदुष्णांशुरप्युष्णतां
शीतांशुः स तु शीततामपि परं धर्मं तथा धर्मराट् ।
भीष्मः शन्तनुनन्दनः पुनरयं प्राज्ञे ! प्रतिज्ञामिमां
जीवन् जात्वपि न त्यजेत् सुमहितां त्रैलोक्यहेतोरपि ॥ १३ ॥

यथा च तनयाः सद्यः सम्पद्येरन् कुलाङ्कुराः ।
कथयामि तथा नीतिं क्षात्रं धर्ममनुस्मरन् ॥ १४ ॥

पुरा खलु धरापतिवनधूमकेतुना निहितनिखिलसेतुना खलकुलधूमकेतुना भृगुकुलकेतुना मुनिना पारश्वधिकेन निजपरश्वधक्रूरधरानलवषट्कृतेषु निखिलक्षत्रकुलेषु पुनः क्षत्रकुलपुरन्ध्रीषु सादरमुपमन्त्रितैर्वसुन्धरासुरवरैस्तनया जनयाम्बभूविरे ॥

---

मात इत्यादि । बेभीये अत्यर्थं बिभेमि । समयवरस्य समयश्रेष्ठस्य ॥ ११ ॥

एवमित्यादि । निर्बध्नतीं निर्बन्धं कुर्वतीम् ॥ १२ ॥

गन्धमित्यादि । वसुन्धरापि गन्धं विसृजेद् विसृजति चेद् विसृजतु इति पर्यवस्यति । त्रैलोक्यहेतोः त्रैलोक्यकृतेऽपि ॥ १३ ॥

यथेत्यादि । सम्पद्येरन् उत्पद्येरन् । नीतिम् उपायम् ॥ १४ ॥

पुरेत्यादि । वनस्य धूमकेतुरग्निः । सेतुर्मर्यादा । परश्वधः प्रहरणमस्य पारश्वधिकः । 'परश्वधाट्ठञ् च' (पा० सू० ४-४-५८) इति ठञ् । वषट्कृतेषु हुतेषु । जनयाम्बभूविरे उत्पादिताः ॥

अपि च प्रागुचथ्यतनयः प्राज्यमहा दीर्घतमा नाम मामतेयो महिततपःस्वापतेयो मुनिपुङ्गवः स्वद्वेषिणीं प्रद्वेषिणीं नाम गृहिणीं गौतमादितनयोद्यात्यर्थचरितार्थां निजदैन्यजैन्यजात्यन्धतादिजनितात्यन्तनिर्वेदां भरणपोषणादिविमुखामिमां परपुरुषाभिषङ्गिणीमपि विभाव्य रोषभरपरुषचेताः परपुरुषजाताभिलाषा योषा रौरवेषु नियतं पतापता भवेदित्यसंशयमशाप्सीत् ॥

क्रोधान्धा शमिनं मुनिं दशमिनं पाशैरपाशाय्यमुं
बद्ध्वा दारुणि दारुणा शिवशिव! क्रन्दन्तमन्धं स्वतः ।
गम्भीरे जलजन्तुजालगहने गङ्गाह्रदे पुत्रकै-
रुद्धृत्य स्ववशैरपास्थमथ सा वेगादपास्थत् पतिम् ॥ १५ ॥

ततः स तपोधनोऽस्याममरवाहिन्यां कादम्बिन्यामिव शतह्रदालम्बिन्यां तत इतः प्लवमानो निरुद्धनिःश्वासप्रसरैस्तरङ्गविसरैस्ताड्यमानो घोरतरघातैरलं पीड्यमानो जलजन्तुजालैरितस्ततो दश्यमानः शिलातलास्फालनविशीर्णनिखिलापघनः केनाप्यनलुभूतचरमाधिभरमेव-मनुबोभूयमानो मज्जनायागतवता बलिरिति विज्ञातनाम्ना राज्ञा

---

अपि च प्रागित्यादि । मामतेयः ममतायाः अपत्यम् । तप एव स्वापतेयं धनम् । दैन्यं दौर्गत्यम् । जैन्यं वृद्धत्वम् । परपुरुषाभिलाषिणी योषित् परपुरुषाभिलाषिण्यः सर्वा अपीत्यर्थः । रौरवेषु पतापता पतन्ती भवेदिति अशाप्सीत् शशाप ॥

क्रोधेत्यादि । शमिनं शमशीलम्, 'शमित्यष्टाभ्यः–' (पा० सू० ३-२-१४१) इति घिनुण् । दशमिनं वर्षीयांसं, "वर्षीयान् दशमी ज्यायान्" इत्यमरः । अपगता आस्था यस्यामिति क्रियाविशेषणम् । अपास्थत् चिक्षेप । अङि 'अस्यतेस्थुक्' (पा० सू० ७-४-१७) इति थुक् ॥ १५ ॥

तत इत्यादि । अमरवाहिन्यां गङ्गायाम् । कादम्बिन्यां मेघमालायाम् इव । शतह्रदालम्बिनी शतह्रदां विद्युतम् आलम्बितुं शीलमस्याः, शतं ह्रदांश्च ।

दिष्टबलेन दृष्टः करुणाविष्टचेतसा करावलम्बमविलम्बमेवाच्छतरां कच्छभुवमुपनीय विपाश्य शनैरपनीतपरिश्रमः परिकलितसकल-तदवस्थेन पुनः परीतादरं परीतापहरं पुरवरमुपानीय सुखतरमुपवेशितो गिरया जगदेकमधुरया जगदे ॥

सन्मार्गैकरत! त्वया समधिया साधीयसा ज्यायसा
पुण्यात्मन्नियमन्वभूयत दशा हाहन्त! घोरात्मिका ।
को वा दैवगतिं रुणद्धि वचसा किं भूयसातः परं
सामोदं मम पत्तनेऽत्र निवसन् गोत्रं पवित्रीकुरु ॥ १६ ॥

कारुण्याब्धे! नमस्ते जनय मम तनूजं सुदेष्णाभिधाया-
मुद्यत्तृष्णाभरायां सुतजननविधौ द्रागमुष्यां महिष्याम् ।
वर्णानामाश्रमाणां निगमहृदि निगूढं परं धर्मसूक्ष्मं
साक्षादेवेक्षसे त्वं सकलमपि मुने! ज्ञानविज्ञानसिन्धो! ॥१७॥

श्रुत्वा वाचं स वाचंयमनिवहवरो भङ्गिसर्वस्वमङ्गं
स्पृष्ट्वा तस्याः प्रशस्यं तनयमजनयत् सद्य एवाङ्गसञ्ज्ञम् ।
हन्ताचिन्त्योऽनुभावस्तपस इति मुनिं वन्दमानोऽभिनन्दन्
सानन्दं नन्दनं तं सपदि पुनरसावादरेणाददे च ॥ १८ ॥

---

अपघनोऽङ्गम् । दिष्टबलेन दैववशात् । करावलम्बमिति क्रियाविशेषणम् । यद्वा 'करावलम्बं गोत्राभिधायं सलिलं ददामि'त्यत्र त्वरां विना 'द्वितीयायां च' (पा सू० ३-४-५३) इत्यमुं णमुलमाह श्रीशङ्करः । विपाश्य पाशाद्विमुच्य । 'सत्याप—' (पा० सू० ३-१-२५) इति णिजन्तात् क्त्वो ल्यप् । 'पाशाद्विमोचने' (वा०) । परिकलिता ज्ञाता । परीतापेत्यत्र 'उपसर्गस्य घञि—' (६-३-१२२) इति दीर्घः ॥

सन्मार्गेत्यादि । सन्मार्गैकरतेत्यादीनि एवंविधदशाननुभवहेतुत्वेनो-पात्तानि । पत्तने पुरे । गोत्रं कुलम् ॥ १६ ॥

कारुण्येत्यादि । "तृष्णे स्पृहापिपासे द्वे" इत्यमरः । निगमहृदि वेदरहस्ये ॥ १७ ॥

श्रुत्वेत्यादि । अङ्गसंज्ञं अङ्गसंस्पर्शनाज्जातत्वादङ्गनामानम् ॥ १८ ॥

तदेवमेवानयोः काशिराजतनययोः केनचिदतिमहिताभिजन्मना तपोविजितकमलजन्मना महितानुभावेन द्विजन्मना जननि! तनया जनयितव्याः।

लोकानां क्षेमकारे शिशिरकिरणसन्तानसन्तानशाखि-
प्रौढक्षेमङ्करे मे महितसमयसेतोरपि स्थैर्यकारे।
कर्मण्यत्रैव धर्म्ये शुभवति भवती धीमती यायतीतु
प्राप्ते पीयूषयूषे पुनरपि बत! का जीवनोपायचिन्ता॥ १९॥

गाङ्गायनेरस्य सुसङ्गतां गां निशम्य धर्म्यां भुवनैकरम्याम्।
वसोः सुता सा चरमं वसूनां व्रीळाविहस्ता शनकैस्तमूचे॥ २०॥

वत्स! पुरा खलु कदाचन पुरान्तकपदाम्बुजविराजितपराग-परिधौतचेतो मुकुरकरबदरायितदिष्टविष्टपत्रयावस्थो निगमपारावार-पारेचरो विशदतरविबोधसुधारसालिप्तमहितचित्तभित्तिलिखितनिखिल-शास्त्रार्थसारः विदितवेद्यपारायणः पराशरनामा पारिकाङ्क्षिवरः पारायणाय तरणितनयातीरमन्वातरत्॥

---

तदित्यादि। अभिजन्म आभिजात्यम्॥

लोकानामित्यादि। क्षेमकारे क्षेमं करोतीति क्षेमकारः। 'क्षेमप्रिय—' (पा० सू० ३-२-४४) इति पक्षेऽण्। उत्तरत्र खच्। सन्तानः सन्ततिरेव सन्तानशाखी। यायतीतु अत्यर्थं प्रयत्नं कुर्यात्॥ १९॥

गाङ्गायनेरित्यादि। गङ्गाया अपत्यं, तिकादिः। चरमम् अन्तिमम्। शनकैः शनैः। 'अव्यय—' (पा० सू० ५-३-७१) इति स्वार्थे अकच्॥ २०॥

वत्सेत्यादि। करबदरायिता करबदरवदाचरन्ती। दिष्टत्रयं कालत्रितयम्। विष्टपत्रयं लोकत्रितयम्। विबोध एव सुधारसः लेपनद्रव्यविशेषः। विदितवेद्यपारायणः ज्ञातसकलवेद्यः। पारायणाय पारगमनाय। तरणितनया यमुना॥

अत्र ताताज्ञया तरणितारणपरायणां कुमारितरां मामभिगम्य भिया ह्रिया च विवशतरामपि वचसां प्रसरैः प्रसभमभिमुखीकृत्य तपोमहिमविहिते हिमपिहिते महितेऽन्तरीपे सद्य एवाच्युतानुभावमद्भुताकारं कमपि कुमारमुदभावयत् ॥

स पुनरर्भको निर्भरभक्तिभारनम्रतरेण शिरसा तरसा मम चरणयोः प्रणिपतन् 'अयि मातः! स्मृतमात्र एव नेत्रमार्गमाविष्टस्तवाभीष्टमखिलमहमभिपूरयिष्यामि' इत्यभिभाष्य यथेच्छमेव निच्छायति स्म ॥

वेदान् व्यस्य हिताय विश्वजगतां नित्यं तपस्यन्नसौ
नूनं सौम्य! मया तथैव भवता भ्रात्रापि च प्रार्थितः ।
भ्रातुः क्षेत्रयुगे जवेन जनयेत् पुत्रानमित्रार्दनां-
स्तत् तुभ्यं यदि रोचते नियमिनामाद्यं स्मराम्यद्य तम् ॥ २१ ॥

इत्युक्तः सत्यवत्या कुरुकुलवृषभः सोऽथ तोषाकुलात्मा
पादे तस्या नमस्यां विदधदभिदधे शारदासादरेण ।
हे मातः! साम्प्रतं नः कुल इह कुशलं विद्यते नान्यदस्मात्
तस्मादस्मत्प्रियम्भावुकमिदमधुनैवादरादादधीथाः ॥ २२ ॥

गाङ्गेन गदितां गां तामाकर्ण्योदीर्णसम्मदा ।
सद्यः सत्यवती पुत्रमस्मार्षीद्दपिसत्तमम् ॥ २३ ॥

---

अत्रेत्यादि । कुमारितरां अतिशयेन कुमारीं, 'घरूप–' (पा० सू० ६-३-४३) इति ह्रस्वः । तपोमहिमविहिते तपोमहिम्ना कृते । पिहिते छादिते । अन्तरीपे द्वीपे । उदभावयत् जनयामास ॥

स पुनरित्यादि । विच्छायति स्म गच्छति स्म ॥

वेदानित्यादि । व्यस्य चतुर्धा विभज्य । क्षेत्रयुगे पत्नीयुगले । "क्षेत्रं पत्नीशरीरयोः" इत्यमरः ॥ २१ ॥

इतीत्यादि । आदधीथाः कुरु ॥ २२ ॥

गाङ्गेनेत्यादि । अस्मार्षीत् स्मृतवती । 'स्मृ चिन्तायाम्' ॥ २३ ॥

माला सोऽथ स्वगोत्रक्षतिमहितशुचा संस्मृतो निर्भरोद्य-
त्कारुण्यार्द्रान्तरङ्गो वलमथनमणिच्छेदसच्छायकायः ।
बिभ्रत् कोटीरभारं विकचमुखसरोजो वहन्नक्षमालां
वेदव्यासः स्वभासा सपदि कुरुसभां भासयन् प्रादुरासीत् ॥ २४॥

पुरः प्रादुर्भूय स्वपदयुगलान्ते निपतितं
पुरुप्रेमावेशा द्रुतहृदयमाश्लिष्य विवशा ।
सुतं धन्या मान्यं सपदि पतितैरश्रुविसरैः
स्नुतैः स्तन्यैश्चासौ मुहुरभिषिषेचास्य शिरसि ॥ २५ ॥

चिरापात्यनिजापत्यदर्शनस्पर्शनोद्भवात् ।
वासवी सम्मदावेशात् सहसाथ मुमोह सा ॥ २६ ॥

जलार्द्रेण कराग्रेण पाराशर्यः परामृशन् ।
आश्वेवाश्वास्य जननीमस्थादत्रायमास्थया ॥ २७ ॥

पुरोधसा तदार्घ्याद्यैः पूजितः पुरुमेधसा ।
प्राज्ञो मातुरनुज्ञातो विष्टरे चोपविष्टवान् ॥ २८ ॥

---

मालेत्यादि । वलमथनमणिच्छेदः छिन्नो वलमथनमणिः । क्रिया हि द्रव्यं लक्षयति सामीप्यात् । वलमथनमणिरिन्द्रनीलः । सच्छायः समानच्छायः ॥ २४ ॥

पुर इत्यादि । द्रुतं द्रवीभूतम् । अभिषिषेच अभिषिक्तवती ॥ २५ ॥

चिरेत्यादि । चिरापात्यः चिरकालादागतः ॥ २६ ॥

जलेत्यादि । अस्थात् स्थितवान् । आस्था तात्पर्यम् ॥ २७ ॥

पुरोधसेत्यादि । अनुज्ञातः आज्ञया ॥ २८ ॥

तदा पाराशर्यं परमपुरुषस्यैव हि कलां
विलोक्य त्रैलोक्यप्रथितयशसं भूरितपसम् ।
अनानन्दीदिन्दीवरनिभरुचीकन्दलमिमं
सभासंस्था भक्तिप्रसरविनता विश्वजनता ॥ २९ ॥

प्रादुर्भूतं पुरस्तात् प्रसभमधिसभं मातुरूढानुभावं
गूढं ब्रह्मैव साक्षाज्जगदुपकृतये व्यक्तिमापन्नमेनम् ।
कृष्णद्वैपायनाख्यं मुनिकुलककुदं नन्दनो विष्णुपद्याः
साक्षात्कृत्यैष भक्तिप्रसरविवशधीश्चिन्तयामास चैवम् ॥ ३० ॥

यो लोकानलसानिहाल्पधिषणानल्पायुषो लोकयन्
विद्याः स्थापयितुं महीमुपगतो व्यास्थद् गिरोऽकुलिमाः ।
भूयो वेदसमाहृतार्थनिवहान् वेगादगाधिष्ट वा
धर्मान् साधु विबोधयन्नुरुदयानोनुद्यमानाशयः ॥ ३१ ॥

---

तदेत्यादि । पाराशर्यं पराशरस्यापत्यं, 'गर्गादिभ्यो यञ्' (पा० सू० ४-१-१०५) इति यञ् । परमपुरुषस्य विष्णोः । अनानन्दीद् अत्यर्थं हृष्टाभूत् । रुचीकन्दलं कान्तिकन्दलम् ॥ २९ ॥

प्रादुर्भूतमित्यादि । अधिसभं सभायाम् । मुनिकुलककुदं मुनिकुलश्रेष्ठम् । साक्षात्कृत्य दृष्ट्वेत्यर्थः ॥ ३० ॥

य इत्यादि । अलसान् अनुद्युक्तान् । व्यास्थद् व्यस्तवान् । वेदेभ्यः समाहृतानर्थनिवहान् अभिधेयप्रपञ्चान् । अगाधिष्ट श्रीमहाभारतरूपेण न्यबध्नात् । 'गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च' । एकत्र स्थापनं सन्दर्भो वा ग्रन्थः । नोनुद्यमानः अत्यर्थं नुद्यमानः ॥ ३१ ॥

विश्वैः सात्त्वतसत्तमैरिह सदा संसेव्यमानं मुदा
निश्शेषागमसारभूतममलं स्वास्यारविन्दस्रुतम् ।
आपातेऽपि मनोहरं मधु नवं यो वा समास्वादय-
न्नात्माङ्घ्रिद्वयसेवनैकरसिकं लोकं विधत्तेतराम् ॥ ३२ ॥

आत्माज्ञानप्रतीताद् गुणफणिसमिताद्विश्वतोऽन्यद् विशुद्धं
बुद्धं भेदेन हीनं गुणगणरहितं नित्यमुक्तं निरीहम् ।
पूर्णानन्दैकरूपं निगमशिरसि विद्योतमानं परं तद्
रूपं यो वान्वशात् स्वं स्वयमिह स हरिर्दृश्यतेऽसौ बताग्रे ॥ ३३ ॥

इति स प्रसरीसृप्यमाणभक्तिरसाप्लुतः ।
पुष्टादरममुं पश्यन् हृष्टरोमा समस्थित ॥ ३४ ॥

---

विश्वैरित्यादि । सात्त्वताः वैष्णवागमज्ञाः । आपाते तदात्वे, श्रवणसमय एवेति यावत् । "तदात्वे पात आपातः" इति वैजयन्ती । स्वास्यारविन्दस्रुतं आपातमधुरं मध्विति श्रीभागवतं पुराणवरमित्यर्थः ॥ ३२ ॥

आत्मेत्यादि । आत्मनः अज्ञानेन प्रतीतात् । आत्माज्ञानमेव विश्वप्रतीतेः हेतुरिति भावः । तदेवाह—गुणफणिसमिताद् रज्जुसर्पसदृशात् । एवंभूताद् विश्वतः अन्यत् परं यद्रूपं तद् अन्वशात् अनुशिष्टवान् । 'शासु अनुशिष्टौ', लङ् । तिप इकारलोपे, 'हल्ङ्याब्भ्य—' (पा० सू० ६-१-६८) इति लोपः । शा(त्? स्) 'तिप्यनस्तेः' (पा० सू० ८-२-७३) इति सकारस्य दकारः चर्त्वं च । वेदान्तशास्त्रनिर्माणेनेति यावत् । विशुद्धं मायाविरहितं बुद्धं ज्ञानं, 'नपुंसके भावे क्तः' (पा० सू० ३-३-११४) कर्तरि वा, अमलं निरञ्जनम् । नित्यं च तत् मुक्तं च नित्यमुक्तं, जायते अस्ति वर्धते विपरिणमते अपक्षीयते विनश्यतीत्यादि षड्विकाररहितम् । पूर्णानन्दं च तद् एकरूपं च । भेदेन हीनम् अखण्डम् । निगमशिरसि उपनिषत्सु विद्योतमानम् ॥ ३३ ॥

इतीत्यादि । प्रसरीसृप्यमाणः अत्यर्थं प्रवृद्धः । हृष्टरोमेति भक्तिरसावेशस्यानुभावः । समस्थित स्थितवान् । लुङ् ॥ ३४ ॥

प्रवणोऽधिसभं व्यासः प्रणमन्नथ तां जगौ ।
जननीं शारदामेवमनुनीतिविशारदः ॥ ३५ ॥

अयि जननि! जनोऽयं नीतिमत्या भवत्या
स्मृत इह सहसागादीप्सितं ते विधास्यन् ।
तनुजममुमतस्त्वं शाधि मां निर्विशङ्कं
जगति गुरुजनाज्ञा पूर्णपुण्यैर्हि लभ्या ॥ ३६ ॥

अथ सा वासवी सूनोरिति रम्यां निशम्य गाम् ।
सम्मदावेशविवशा सादरं गिरमाददे ॥ ३७ ॥

हे वत्स! विश्वजगतीहितजागरूक!
नष्टं समुद्धर कुलं महनीयमेतत् ।
मातुर्ममार्य! वचसा त्वमदीनसत्त्वान्
भ्रातुः कलत्रयुगले जनयेस्तनूजान् ॥ ३८ ॥

व्रतान्न देवव्रत एष संश्रुता-
न्नितान्तधीरो विचलेत् कथञ्चन ।
तदेतदाधिव्यथितात्मनो मम
त्वदीयकारुण्यमिहावलम्बनम् ॥ ३९ ॥

---

प्रवण इत्यादि । प्रवणः प्रह्वः । अधिसभं सभायाम् ॥ ३५ ॥

अयीत्यादि । शाधि आज्ञापय । 'शासु अनुशिष्टौ' । 'शा हौ' (पा० सू० ६-४-३५) इति शाभावः ॥ ३६ ॥

अथेत्यादि । वासवी सत्यवती ॥ ३७ ॥

हे इत्यादि । अदीनसत्त्वान् उत्कृष्टपराक्रमान् ॥ ३८ ॥

व्रतादित्यादि । संश्रुतात् प्रतिज्ञातात् । व्रताद् ब्रह्मचर्यात् ॥ ३९ ॥

इति स तु निजमात्रा प्रार्थितः सत्यवादी-
दयि! वितरितुमार्या वाञ्छितं साम्प्रतं ते ।
अवकलयसि या त्वं धर्मतत्त्वं समस्तं
मतमिह तव तस्याः को नु शङ्केत कर्तुम् ॥ ४० ॥

तदम्बिकाम्बालिकयोरहसालम्बहीनयोः ।
अनयोस्तनयानम्ब! जनयामि जनादृतान् ॥ ४१ ॥

किन्त्वाभ्यां व्रतमारभ्यमेकां शरदमादरात् ।
व्रतादिपक्कमनसामेव स्पृश्योऽस्मि योषिताम् ॥ ४२ ॥

एवमुक्ता सत्यवतीयम् "अयि नन्दन! कन्दलितयौवनस्य निजदयितस्य समागमविहीनेनामुना विरहेण कुलविनाशविशङ्कया च विशङ्कटदैन्यविवशे कथमिमे मम जन्यौ व्रतमेतदातन्वाताम् । तदनयोस्तनयोदयाय सद्यो भवानुद्योयुज्यतात्" इति तमुदाजहार ॥

पराशरतनूजोऽथ परावरविदां वरः ।
मनागिव विचार्यैनामनाकुलमना जगौ ॥ ४३ ॥

---

इतीत्यादि । वितरितुं दातुम् । आर्यां प्राप्तवानस्मि । अवकलयसि जानासि ॥ ४० ॥

तदित्यादि । आलम्बहीनयोः भर्तृरहितयोः ॥ ४१ ॥

किन्त्वेत्यादि । आरभ्यं, 'पोरदुपधात्' (पा० सू० ३-१-९८) इति यत् । शरदं वत्सरम्, अत्यन्तसंयोगे द्वितीया ॥ ४२ ॥

एवमित्यादि । समागमविहीनेन विरहेण मरणेनेत्यर्थः । विशङ्कटं पृथु । जन्यौ स्नुषे । "समाः स्नुषाजनीवध्वः" इत्यमरः । उद्योयुज्यताद् अत्यर्थमुद्युक्तो भवतात् ॥

परेत्यादि । परावरविदां दिव्यज्ञानविदामित्यर्थः ॥ ४३ ॥

सत्यं व्रतं जननि! कर्तुमिमे न शक्ते
 सन्धेय एष च सुधाकरवंशतन्तुः ।
तन्मेऽद्य दुस्सहतरं किमपि क्षमेतां
 वैरूप्यमेतदपि शक्यतरं व्रतं स्यात् ॥ ४४ ॥

तदद्यैव प्रतीक्षेत मदभ्यागमम्बिका ।
निगद्येति निजामम्बां सपद्येष तिरोदधे ॥ ४५ ॥

अथ विश्वलोकानामभिमतया भरतकुलश्रःश्रेयसैकनिरतया निकटयातया निजया तया श्वश्र्वा द्वैपायनोदितमखिलमुपश्राविताषा विषादभयविचारभरविवशमानसा पुनः प्रियहितैर्निजैरभिहितैरपि कथमपि वशंवदीकृताम्बिकाविलम्बमेवात्मकुलमवलम्बयन्ती विहित-मज्जना महितमङ्गलालङ्करणा निजमेव कान्तमन्तरनुचिन्तयन्ती मुनिवरागममपि प्रतिपालयन्ती महनीयं शयनीयमधिशयाना झटिति पुरतः प्रादुर्भूतं ताम्रतरपर्याकुलविषमजटापटलभयानकं रक्ततरवृत्त-नेत्रयुगलव्यज्यमानदीनभावं धूम्रतरश्मश्रुकान्तारमध्यदृश्यमानवदनो-दरनिर्गताच्चमलपङ्कोच्चावचरदनोच्चयोच्चण्डरूपं सिरास्थिचयदन्तुरित-विसंस्थुलसन्धिबन्धात्यन्तदुर्गन्धपरमपरुषमलिनगात्रव्याप्तव्रणगणनिस्स्रु-तविस्रतरभूयिष्ठपूयाभिषिक्तनेदिष्ठभूमिमतिबीभत्समधिकभीषणं दुर्निरीक्षं

---

सत्यमित्यादि । किमपि अनिर्देश्यम् । वैरूप्यं विरूपत्वम् ॥ ४४ ॥

तदित्यादि । प्रतीक्षेत प्रतिपालयेत ॥ ४५ ॥

अथेत्यादि । श्वश्र्वा पत्युर्मात्रा । श्वशुरस्योकाराकारयोर्लोपश्च । ऊङ् च । अत्रैकादेशाभावादन्तादिवद्भावाभावेन प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'श्वशुरः श्वश्र्वा—' (पा० सू० १-२-७१) इति निपातनाद्विभक्त्यादिकार्यम् । वशंवदीकृता विधेयीकृता । अवलम्बयन्ती अवलम्बवत् कुर्वती । श्मश्रु एव कान्तारः तस्य मध्येन । "उच्चावचं नैकभेदम्" इत्यमरः । रदनोच्चयः दन्तपङ्क्तिः । उच्चण्डरूपं क्रूररूपम् । अस्थिचयैर्दन्तुरितः निम्नोन्नतीकृतः । विसंस्थुलः विषमः । परमपरुषम् अत्यर्थपरुषम् । नेदिष्ठा अन्तिकतमा । अतिबीभत्सं, पचाद्यच् । "गर्हणीयश्च

निजकुलाभ्युदयैककाङ्क्षिणममुं पारिकाङ्क्षिणमीक्षमाणा भयजुगुप्सा-
तिरेकसङ्कुचितरुचिरतनुवल्लरी तत्क्षणमेव निमीलिताक्षियुगलमत्रतस्थे ॥

तथाभूतामपि स तां तरसा मातृगौरवात् ।
उपगम्य निधायास्यां वीर्यमन्तर्हितो मुनिः ॥ ४६ ॥

सद्यः सा जनयाम्बभूव तनयं नष्टं स्वराष्ट्रं धृतं
यस्मात् तेन ततो जगत्सु धृतराष्ट्राभिख्यया विश्रुतम् ।
प्रश्च्योतन्मदकुञ्जरायुतबलं जात्यन्धमत्यन्तधी-
विज्ञाताखिलवेद्यसारमधिकामोदप्रदं देहिनाम् ॥ ४७ ॥

शुशोच नेत्रहीनं तं शिशुमालोक्य वासवी ।
नात्र हेतुं विजानीमो नेत्रहीना हि बालकाः ॥ ४८ ॥

कुलोदयैककृतधीरथापूर्णमनोरथा ।
पुत्रं सा पुनरप्यूचे स्मृतमात्रसमागतम् ॥ ४९ ॥

अन्धोऽयं दीनबन्धो ! बत ! नियतिबलादर्भको नस्तदस्मिन्
भ्रातुः क्षेत्रे परस्मिन्नपि परमकृपापूरपूर्णान्तरङ्ग ! ।
पुत्रो गोत्राभिगोप्ता सपदि जनयितव्यो निकाय्यो गुणाना-
मित्युक्तो व्याकुलायाः सविधमुपगमत् सोऽयमम्बालिकायाः ॥ ५० ॥

---

निन्द्यश्च कुत्सनीयश्च यो भवेत् । स भावः कथ्यते सद्भिर्बीभत्स इति संज्ञितः"
इति भावप्रकाशः ॥

तथेत्यादि । तथाभूताम् उक्तप्रकारेण अननुकूलामपि ॥ ४६ ॥

सद्य इत्यादि । जनयाम्बभूव अजनयत् । जात्यन्धं जन्मन्येवान्धम् ॥४७॥

शुशोचेत्यादि । नेत्रं नयनं, वासश्च ॥ ४८ ॥

कुलेत्यादि । अपूर्णमनोरथा अस्य जात्यन्धत्वात् ॥ ४९ ॥

अन्ध इत्यादि । क्षेत्रे पत्न्याम् । गुणानां निकाय्यः आलयः । 'पाय्य-
सान्नाय्यनिकाय्य–' (पा० सू० ३-१-१२९) इति निपातः ॥ ५० ॥

ततः स पूर्ववदेव परिगृहीतबीभत्सरूपः पराशरसुतः श्वश्रूदित-श्रवणेन परिकलितमङ्गलवेषभूषायां पर्याकुलमेव शय्यातले निषण्णायां झटिति निजनिरीक्षणादतिविषण्णायां दरातिरेकेण दौहृदात् पूर्वमेवा-पतितपाण्डुभावायामम्बालिकायां तनयमपि तादृशं पाण्डुनामकं कुरुकुलकीर्तिसन्तानवल्लरीमूलकन्दमामोदितपौरवृन्दं समुत्पाद्य सद्य एव तिरोहितोऽभूत् ॥

तं शीतांशुकुलावतंसमशनैरम्बालिकायां सुतं
सञ्जातं गुणजातमूलसदनं दृष्ट्वा प्रहृष्टाशया ।
अन्यस्यामपि शस्ततेजसमपोगण्डं जगन्मण्डनं
काङ्क्षन्ती तनयं सनीडगमितं व्यासं जगौ वासवी ॥ ५१ ॥

मदीयातङ्कपङ्कौघविशोषणविरोचन ! ।
अम्बिकायां कुलालम्बं लिप्से राज्यार्हमात्मजम् ॥ ५२ ॥

इयं बभाषे पुनरम्बिकामयि !
प्रसादयाद्यैव जुगुप्सया विना ।
मुनीन्द्रमायातमतन्द्रमेव तं
स देवरो दास्यति ते वरं सुतम् ॥ ५३ ॥

---

तत इत्यादि । दरातिरेकेण भयातिशयेन । दौहृदात् पूर्वमेव गर्भ-प्रादुर्भावात् पूर्वमेव । आपतितपाण्डुभावायां यथा क्रोधातिरेकेण रक्तता तथेत्यर्थः । तादृशं पाण्डुवर्णम् ॥

तमित्यादि । गुणजातं गुणसमूहः । अपोगण्डम् अविकलावयवं, "विकलाङ्गस्तु पोगण्डः" इत्यमरः । अन्यस्यामम्बिकायामपि । सनीडं समीपम् ॥ ५१ ॥

मदीयेत्यादि । लिप्से लब्धुमिच्छामि । राज्यार्हं धृतराष्ट्रस्त्वन्धत्वाद् राज्यानर्ह इत्यर्थः ॥ ५२ ॥

इयमित्यादि । देवरः भर्तुः भ्राता ॥ ५३ ॥

इति सवित्र्या स्वस्य शश्वतरतनयोदयस्यायुक्तया नियुक्तयापि अविषह्यतदीयविरूपतानिरूपणोद्यदुद्वेगवेगविवशमानसया काशिराज-तनयया परमभागधेया काचन परिचारिका स्वकीयैरलङ्कारैरलमलङ्कृत्य निभृतमशनैः शयनगृहं प्रति प्रेषयामासे ॥

अथ सहसैव समापतितं मुनिमुपगम्य सहेलमसौ ।
त्रिभुवनवन्द्यमवन्दत तं विनतमुखी त्रपया सुमुखी ॥ ५४ ॥

तदनु मङ्गलायतनमियमङ्गना हृदयङ्गमैरधिकादरविधीयमानै-र्विविधैरनुसरणैर्विलोभयन्ती विश्रन्थितधैर्यबन्धमेनं कृष्णमपि धवल-मिचारीणरागमरीरमत् ॥

भूयोऽनंसीत् भूयोभक्त्या तोषादेषा योषाभूषा ।
विकसितसरसिजविलसितमुखमथ रहसि तमवसितमनसिजरणमिह ॥ ५५

तापसेन्द्रस्तया साकं शर्वरीं निर्विशन्निमाम् ।
प्रहृष्टधीरभाषिष्ट प्रकृष्टसुकृतां स ताम् ॥ ५६ ॥

---

इतीत्यादि । तनयोदयस्य तनयोदये । आयुक्तया तत्परया । 'आयुक्त-कुशलाभ्यां चासेवायाम्' (पा० सू० २-३-४०) इति षष्ठी । आसेवा तात्पर्यम् ॥

अथेत्यादि । सहेलं सविलासम् । सुमुखीत्यनेन अन्ययोरिव नास्याः पीडेति प्रकाश्यते । वृत्तनामाङ्कितोऽयं श्लोकः । "नजजलगैर्गदिता सुमुखी" ॥ ५४ ॥

तदन्वित्यादि । मङ्गलानाम् आयतनम् इयम् । हृदयङ्गमैः हृद्यैः । विश्रन्थितः शिथिलितः । कृष्णमपि धवलमिति विरोधः । धवलः स्त्रीणां निसर्गरमणीय इति परिहारः । अरीणः अक्षीणः ॥

भूय इत्यादि । अनंसीत् ननाम । भूयोभक्त्या अतिशयितया भक्त्या । "अष्टावर्धे गा द्व्यभ्यस्ता यस्याः सानङ्गक्रीडोक्ता । दलमपरमपि वसुगुणित-सलिलनिधिलघुकविरचितपदविततति भवति" ॥ ५५ ॥

तापसेन्द्र इत्यादि । शर्वरीं निर्विशन् अनुभवन् । अत्रात्यन्तसंयोगे द्वितीयया विषयविरक्तस्यापि मुनेस्तदनुसरणाद् रागो जात इति द्योत्यते । प्रकृष्टम् अतिशयितम् ॥ ५६ ॥

मत्प्रसादेन नियतं नागनासोरु! जायते ।
मेदुराज्ञानभिदुरो विदुरो नाम ते सुतः ॥ ५७ ॥

इत्थं निगद्य निकटं लघु सत्यवत्या-
स्तस्मिन् गते मुनिवरे लघु सत्यवद्ये ।
धर्मप्रकाशननिदानमसौ तमोनु-
द्वीर्यं हि दौहृदमुवाह पुरेव संज्ञा ॥ ५८ ॥

ततः स खलु सकललोकस्य शुभाशुभफलानुभावयिता महितानुभावो भगवान् धर्मराज एव, गुरुजनानुपाल्ये बाल्ये विहितस्य दंशपृष्ठदेशेषीकाप्रवेशनजन्यदुष्कृतस्य निष्कृत्यै शूलमारोपितस्य तापसप्रकाण्डस्याणिमाण्डव्यस्य शापमनुबुभुक्षुरखिलदिक्षु विदुर इति विदितोऽस्यामाविःप्रमोदायामाविर्बभूव ॥

इत्थं तं धृतराष्ट्रमक्षिविकलं राष्ट्राभिसंवर्धनं
कीर्तिप्रस्नवपाण्डुरीकृतदिशं पाण्डुं च पुण्याम्बुधिम् ।
वेद्यानां विदुरं तथैव विदुरं क्षेमङ्करो देहिनां
व्यासोऽयं जनयन् जवेन जननीमामन्त्र्य चान्तर्दधे ॥ ५९ ॥

---

मदित्यादि । नागनासा शुण्डादण्डः । भिदुरः भेदनशीलः । 'विदिभिदि–' (पा० सू० ३-२-१६२) इति कुरच् ॥ ५७ ॥

इत्थमित्यादि । लघु शीघ्रम् । लघु प्रियं यथा तथा । सत्यवद्ये, 'कृत्यल्युटो बहुलम्' (पा० सू० ३-३-११३) इति कर्तरि यत् । धर्मप्रकाशननिदानं धर्मराजस्य प्रकाशने हेतुमित्युभयत्रापि । यद्वा सर्वधर्माणां प्रकाशकमित्युभयत्र । तमोनुद्वीर्यम् तमोऽज्ञानं नुदतीति तमोनुत् तादृशं वीर्यं यस्य । तमोनुदः सूर्यस्य वीर्यं च । "चन्द्राग्न्यर्कास्तमोनुदः" इत्यमरः । दौहृदं गर्भम् । संज्ञा सूर्यभार्या ॥ ५८ ॥

तत इत्यादि । अनुभावयिता फलानुभवस्य प्रयोजकः । गुरुजनानुपाल्ये अकार्यकरणादेर्गुरुजनै रक्षणीये । बाल्ये बालभावे । दंशो मक्षिका । निष्कृत्यै प्रतिक्रियायै । अनुबुभुक्षुः अनुभोक्तुमिच्छुः ॥

इत्थमित्यादि । विदुरं वेदनशीलम् । अन्तर्दधे तिरोभूत् ॥ ५९ ॥

तदनु तत्तदपत्योदयश्रवणदत्ततत्तत्पदार्थलब्धतत्तादृशप्रमोदविहस्तीकृतसमस्तलोकः मनोरथशतालक्षितानामाहितनिखिललक्षणानामाहितलक्षणानां मञ्जुरुचिमन्दिराणाम् इन्दुकुलकन्दलानामखिलजनहृदयानन्दनानां नन्दनानां वदनारविन्दानि निर्निमेषेण चक्षुषा निपीय विधूतवधूसङ्गोऽपि पुरुप्रमदोपसङ्गी गाङ्गायनिराप्लुत आप्लुतानविप्लुतयौनपौंस्नादिसमस्तकर्मसंस्कृतानस्तोकविनयपरिष्कृतानशिश्विदानान् अवश्यदानीयान् समग्रान्नुदग्राभिजन्मनोऽग्रजन्मनः स्थूललक्षोऽसौ वित्तविसरं तूललक्षं लक्षयन् सन्तानमहिमावहैरपि सन्तानलघिमावहैर्दानसन्तानैरलं सन्तोषयन् वरीयसा पुरोधसा यथावदवगतकुलोचितकर्मजातेन सह जातकर्म विधिवदेव विततान ॥

इत्थं ते खलु जातकर्मकृतसंस्काराः कुमारास्त्रय-
स्तस्मिन् हस्तिननाम्नि पत्तनवरे बभ्रेजिरे निर्भरम् ।
शश्वत्संश्रितभूतितायनपराः सम्भावनीयाः सतां
मध्येवेदि समित्समिद्धमहसस्त्रेताग्नयस्ते यथा ॥ ६० ॥

---

तदन्वित्यादि । स एव तादृशः तत्तादृशः । आहितलक्षणानां "गुणैः प्रतीते तु कृतलक्षणाहितलक्षणौ" इत्यमरः । मञ्जुरुचिः रम्यशोभा । पुरुः बहुलः प्रमदः, बहुप्रमदासु बह्वीष्वङ्गनासु इति प्रतीतेर्विरोधः । आप्लुतः स्नातः । आप्लुतान् स्नातकान् । अविप्लुतानि अविकलानि यौनपौंस्नप्रभृतीनि कर्माणि तैः संस्कृतान् । 'गर्भाधानं तु यौनं स्यात्' इति "आधानिकं पुंसवनं पौंस्नमपि" इति च वैजयन्ती । शिश्विदानाः दुराचाराः । "शिश्विदानो दुराचारो निषिद्धैकरुचिः खरुः" इति वैजयन्ती । दीयते एभ्य इति दानीयान् । स्थूललक्षो दानशीलः । तूललक्षम् तूलमिव लक्षयन् । सन्तानस्य सन्ततेः, कल्पतरुविशेषस्य च ॥

इत्थमित्यादि । बभ्रेजिरे शुशुभिरे । "भूतिर्भस्मनि सम्पदि" इत्यमरः । तायनं वर्धनम् । भूतितायाः भसत्वस्य आयने प्रापणे च । मध्येवेदि वेदिमध्ये । त्रेताग्नय इव ॥ ६० ॥

एवं देवोपमेषु त्रिषु सपदि कुमारेषु जातेषु तेषु
व्यासात् सा क्ष्मासवी सोऽपि च सुरतटिनीनन्दनस्ते च देव्यौ ।
नानन्दामासुराम्रदितहृदयरुजः पूर्णकामाः किमुक्तै-
र्भूयोभिर्मोदभारो निखिलतनुभृतां मेदुरः प्रादुरासीत् ॥ ६१ ॥

इति श्रीमानवेदविरचिते चम्पुभारते
द्वादशः स्तबकः ॥

श्रीमत्कृष्णाभिधगुरुकृपासारमाध्वीरसार्द्रै-
र्हृद्यैरुद्यत्परिमलभरैर्गद्यपद्याभिधानैः ।
कालोद्बुद्धस्तबकलसितैर्विश्ववर्या सपर्या
पुष्पव्रातैरिह विरचिता नन्दसूनोर्मयैषा ॥

सानन्दानन्तभोगिप्रवरपरिलसन्मङ्गलोत्तुङ्गमूर्तिः
श्रीमद्वत्सं दधानो महिततरवृषस्कन्धदेदीप्यमानः ।
वासं तन्वन्नशोकोपपदपुरवरे सर्वदोमाधवो मे
पादाम्भोजन्मभाजः सपदि वितनुतामुत्तमां मुक्तिलक्ष्मीम् ॥

---

एवमित्यादि । नानन्दामासुः अत्यर्थं ननन्दुः । आम्रदिता अत्यन्तं नष्टा । प्रादुरासीत् प्रादुर्बभूव । आदौ लक्ष्मीशब्दोच्चारणेन भूदैवतस्य श्रीफलकस्य मगणस्य प्रथमोच्चारणेन मध्ये च 'रघुपतिः सीतामिवारीरमद्' इत्यत्र इन्दिरांशभूतायाः सीतायाः सङ्कीर्तनेन अन्ते च 'सकलजगतां मोदभारः प्रादुरासीद्' (पुटं २२२) इत्यत्र तोयदैवतस्य समृद्धिफलकस्य यगणस्योच्चारणेन च आदिमध्यान्तमङ्गलतया मङ्गलमेतत् काव्यमित्युक्तं भवति ॥ ६१ ॥

इति श्रीमानवेदविरचितस्य चम्पुभारतस्य
टिप्पणे कृष्णीये द्वादशः स्तबकः ।

( शुभं भूयात् )

# APPENDIX

## स्मृतवाक्याद्यनुक्रमणी ।

| वाक्यादिः | ग्रन्थनाम | कर्तृनाम | पृष्ठम् |
|---|---|---|---|
| वृषाकपायी श्रीगौर्योः | | अमरः | २५ |
| महारण्ये दुर्गपथे | | „ | २६ |
| श्रद्धास्तिक्याभिलाषयोः | वैजयन्ती | | २७ |
| अवस्थां कालकृता | सुबोधिनी | | २९ |
| उचितं तु | | केशवः | „ |
| वरूथिनी बलं | | अमरः | „ |
| हर्षमाणो विकुर्वाणः | | „ | ३० |
| आचारो वृत्तचारित्र | वैजयन्ती | | ३३ |
| शस्तशुभशुचश्लाघा | | वराहमिहिरः | „ |
| प्रशस्तहृदयेन | सुबोधिनी | | „ |
| पर्यङ्कं शयनं | अभिधानरत्नमाला | | „ |
| शय्या तल्पे | वैजयन्ती | | „ |
| भृगुः सुखी | | वराहमिहिरः | ३४ |
| आराद् दूर | | अमरः | „ |
| आगमस्तूपदेशेऽपि | | केशवः | ३५ |
| निपाठनिपठौ | | अमरः | „ |
| संख्यावान् पण्डितः | | „ | „ |
| वृत्तः करम्बितो मिश्रः | शब्दरत्नाकरः | | ३७ |
| जडो जाल्मश्च | वैजयन्ती | | ३९ |
| द्रेष्ये त्वक्षिगतः | | अमरः | „ |
| दिगादियदन्येभ्योऽपि | | स्वामी | ४१ |
| कुलं गृहेऽन्वये | निघण्टुः | | „ |
| ईहा तु लिप्सोद्यमयोः | वैजयन्ती | | „ |
| दाश्वानित्यादयः छन्दसि | काशिका | | ४२ |
| खट्वारोहणं | वृत्तिः | | ४५ |
| सर्वे एव | | रामः | „ |
| खट्वामारोहतु | | हरः | „ |
| हेमा विज्ञो | | वराहमिहिरः | ४७ |
| नक्षत्रग्रहताराणां | सुबोधिनी | | „ |
| वृहस्पतेः स वै | श्रीहरिवंशः | | „ |
| क्षेत्रं पत्नीशरीरयोः | | अमरः | „ |
| सर्गः स्वभावनिर्मोक्ष | | „ | ५२ |

| वाक्यादिः | ग्रन्थनाम | कर्तृनाम | पृष्ठम् |
| --- | --- | --- | --- |
| स तु सर्वधुरीणः स्यात् | | अमरः | २७१ |
| ह्ललेखो रणरणको | वैजयन्ती | | २७२ |
| तलिमं कुट्टिमे | ” | | ” |
| अभ्यर्थ्यमानापि नातिविवृता | | वात्स्यायनः | २७३ |
| घञन्तात् तत्करोतीति | | माधवः | २७४ |
| सितां ह्रस्व इत्यत्र | सर्वस्वम् | | ” |
| शिरो ललाटं | कामशास्त्रम् | | ” |
| शास्त्राणां विषयस्तावत् | | वात्स्यायनः | ” |
| स्तनस्य सन्निकृष्टानि | रतिरत्नदीपिका | | ” |
| भूगतस्तनभुजास्य | | | ” |
| सत्रमाच्छादने | | अमरः | २७६ |
| पर्जन्यौ रसदब्देन्द्रौ | | ” | ” |
| स्वच्छन्दो निरवग्रहः | | ” | २७७ |
| अथ राष्ट्रोऽस्त्री | | ” | २७८ |
| घनोपलस्तु करकः | वैजयन्ती | | २७९ |
| वर्षोपले तु करका | सुबोधिनी | | ” |
| उत्सूले हर्षमित्येष | भावप्रकाशः | | २८० |
| कर्णीरथं प्रवहणं | | यादवः | २८१ |
| तच्चतुर्धा ततानद्धसुषिरघन-भेदाद् | नाट्यसूत्रम् | | ” |
| ध्वान्तारिदानवा वृत्राः | | अमरः | २८२ |
| आर्द्रमित्यार्द्रत्वेऽपि | टीकासर्वस्वम् | | २८३ |
| आर्द्रं सार्द्रं क्लिन्नं | | अमरः | ” |
| आराद् दूरसमीपयोः | | ” | २८४ |
| तारा भं रात्रिजं | निघण्टुः | | ” |
| द्रव्यं वित्तं स्वापतेयं | | अमरः | ” |
| सर्ववेदाः स येनेष्टो | | ” | ” |
| धुनी कूलङ्कषा | वैजयन्ती | | २८६ |
| राजा तु क्षत्त्रिये | ” | | ” |
| तस्य नाम्ना च | महाभारतम् | | २८७ |
| वशा माहा च शृङ्गिणी | | अमरः | ” |
| सुकलो दातृभोक्तरि | | ” | ” |

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९ | १८ | यङि | क्यङि |
| १३ | १३ | भूरिस्वर्णं | भूरिः स्वर्णं |
| १७ | २२ | वति राज | वती राज |
| १९ | २३ | सङ्गन | सङ्गेन |
| २० | ३ | कराग्रैः | कराग्रे |
| ” | १५ | भूरि वल्ली | भूरिः वल्ली |
| ” | २६ | व्यञ्जनामाल | व्यञ्जनमाल |
| २१ | २५ | सुरभीः | सुरभी |
| २२ | ८ | मानः सपदि | मानः कदाचन वलवैरिजायां वलजां पुलोमजां विलोकयन् विषमेषुविशिखविदूषितमनाः सपदि |
| २२ | ८ | सरणे हयावाहक | सरणेहया वाहक |
| ” | १६ | णिनिः | णिच्कः |
| २३ | २६ | प्रत्यथि | प्रत्यर्थि |
| २४ | २ | भैक्ष्येयेण | भैक्षेण |
| ” | ८ | विकटतट | विकटमुकुटतट |
| ” | २० | वम्भज्यमानदिव्य | वम्भज्यमानमानदिव्य |
| २६ | ५ | भ्रमः | भ्रूमः |
| २७ | ६ | मतिभूतिमातङ्ग | मतिर्मत्तमातङ्ग |
| २८ | ८ | मसुर | ममर |
| ४८ | १४ | व्यासो | न्यासो |
| ५० | २० | ष्वष्क | ष्वक |
| ५१ | १२ | (ङ्ग?ङ्क) | ङ्ग |
| ५४ | १४ | त्वं | त्वं |
| ६६ | २१ | शादरत्नाकरः | शब्दरत्नाकरः |

| पुटम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७० | ५ | रञ्जयता | रजयता |
| ७६ | १३ | छेत्तमिच्छन् | छेत्तुमिच्छन् |
| ,, | २० | ग्लायमानं | म्लानं |
| ८८ | ७ | भृशान्त | भृतान्त |
| ,, | ११ | गेहे | गेहं |
| ९२ | ५ | सुशनाः | सुशना |
| १०४ | २१ | दीघश्वा | दीर्घश्वा |
| १०५ | १० | प्रेक्षमाणा | प्रेक्ष्यमाणा |
| १०६ | ७ | सभ्रभङ्ग | सभ्रूभङ्ग |
| १११ | ८ | सुमालक्ष्य | सुपालक्ष्य |
| ११४ | २३ | चैकान्तरत्वेन | चेकारान्तत्वेन |
| ११७ | ९ | संहतिं | संहतिः |
| ,, | १० | ,, | ,, |
| १३० | २ | प्रार्थितयिषया | प्रार्तिथयिषया |
| ,, | ३-४ | अतितथामतीनतीतृपत् | अतितरामतीतृपत् |
| ,, | २१ | प्रार्थितयिषया | प्रार्तिथयिषया |
| १३१ | १३ | श्रत्वै | श्रुत्वै |
| १३४ | ७ | रुद्राश्चाग्रयाश्च | रुद्राश्वाद्याश्च |
| ,, | ७ | द्वचेपुः प्रधाना | द्वचेपुप्रधाना |
| १३६ | १० | नवनलीलात्मा | वनलीनात्मा |
| १३७ | २१ | साधु | साधुः |
| १३८ | १० | मार्गमार्ग | मार्ग मार्ग |
| १४० | २६ | शीक्षा | शिक्षा |
| १४१ | १ | ज्योतिषिकाभ्य | ज्योतिषाभ्य |
| १४३ | २७ | मित्वाच्चल | मित्त्वाच्चल |
| १४७ | २६ | कित्वाद् | कित्त्वाद् |
| १४९ | ११-१२ | लोपालोपाभाव | लोपाभाव |
| १६६ | ९ | पानोल्लाल | पानोल्लोल |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६६ | ११ | धुवनेषु विपुलो | धुवनेषु वनेषु विपुलो |
| १८४ | २ | गुन्मादि | गुल्मादि |
| २०८ | ६ | स भाजनै | सभाजनै |
| २२० | ११ | पात्रपु | पात्रेषु |
| „ | १२ | मन्त्रपरा | मन्त्रवरा |
| २२१ | ८ | प्रात्याख्य | प्रत्याख्य |
| २३१ | ६ | सान्द्रै | सेन्द्रै |
| २३३ | १० | सावि त | साविति |
| २३४ | १ | त्रभयं बृहतां पतिः | त्रयं बृहतां बृहतां पतिः |
| २३५ | ११ | होत्रसुख | होत्रमुख |
| २३७ | ७ | यौवना | यौवता |
| २४० | ४ | तरणी | धरणी |
| २४५ | ४ | कणेघ्नऽघ्निमे | कणेघ्नघ्निमे |
| „ | १३ | कणेऽघ्नन् | कणेघ्नन् |
| २६३ | ६ | मलोक | मवलोक |
| „ | १० | युज्यैव | युज्यैवं |
| २६६ | २ | याविष्ठ | याविष्ट |
| „ | ३ | सवर | संवर |
| २७० | ९ | आशीभि | आशीर्भि |
| २७२ | ६ | भृशं | दृशं |
| २७७ | १ | प्रती(य?ज) | प्रतीज |
| २८१ | १ | छत्रात | चित्रात |
| २९० | ६ | विनायनतया | विनयानतया |
| २९१ | ५ | तीरवधि | तीरमधि |
| २९६ | ७ | अन्यान्य | अन्योन्य |
| ३०३ | ३ | वर्तिनीं | वर्तनीं |
| „ | ९ | किमिदमितीत्य | किमिदमित्य |
| ३१२ | ५ | कालिन्दीं तीर | कालिन्दीतीर |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१७ | १० | विभरम्बभूव | बिभराम्बभूव |
| ३२८ | ८ | सञ्जायिता। | सञ्जायिताः। |
| ३३२ | ११ | राराज | रराज |
| ३३४ | ११ | वेलाः | वेगाः |
| ३३६ | ४ | असिविषत | अभविषत |
| " | १७ | " | " |
| ३४० | १२ | हयध्वजं | हयं ध्वजं |
| ३५१ | ५ | मीष्ट | मीष्टे |
| ३६२ | ३ | स्तवांश्चित्र | सवांश्चित्र |
| ३६४ | ७ | नृत्य त्य | नृत्यन्नत्य |
| ३६५ | ११ | नयन् | नमन् |
| ३६६ | ११ | देव | देवं |
| ३६७ | ५ | प्रजा | व्रजा |
| ३६८ | ९ | घातां प्रकोष्ठा | घातातिरौद्रप्रकोष्ठा |
| ३७१ | १७ | न्नपि प्रतीप | न्नपि प्रतीप |
| ३७८ | ११ | केना याहूता | केनाप्याहूता |
| ३८९ | १३ | नात्माजो | नात्मजो |
| ३९८ | १४ | पय" विविध | पय" इति विविध |
| " | १५ | भोगा | भागा |
| ४१२ | ६ | निजातिभार | निजाधिभार |
| ४१७ | ५ | निपदित | निपतित |
| ४२१ | १० | देवीव्य | देदीव्य |
| ४२९ | १ | शिखण्डिनी | शिखण्डी |
| ४३० | ५ | पङ्कं | पङ्कः |
| ४३६ | ७ | ष्णांशुमप्युष्ण | ष्णांशुरप्युष्ण |
| ४३९ | ११ | चेतो मुकुर | चेतोमुकुर |

# IN THE PRESS

1. Bhojanakutūhala (Dietetics) of Raghunātha. Part II.
2. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhoja with the commentary Hṛdayahāriṇī by Daṇḍanāthanārāyaṇa. Part V.
3. Prakriyāsarvasva (Grammar) by Nārāyaṇa Bhaṭṭa. Part V.
4. Mīmāṁsāślokavārtika of Kumārilabhaṭṭa with the commentary Kāśikā by Sucaritamiśra. Part IV.
5. Aṅka[illegible]tra (Jyotiṣa).
6. Adbhuta[illegible] (Drama).
7. Bhāgavatacampū[illegible] Rāmapāṇivāda.
8. Karaṇottama (Jyotiṣa) of Acyuta with commentary.

# READY FOR THE PRESS

1. Aitareyāraṇyaka (Veda) with the commentary Mokṣaprada of Ṣaḍguruśiṣya.
2. Kalaśacandrikā (Tantra).
3. Twenty Prabandhas (Campūs) of Nārāyaṇa Bhaṭṭa.